कम्भम्पाटि अमरेश्वरशास्त्रिकृत

# अज्ञानध्वान्तचण्डभास्करः ।

# AJÑĀNADHVĀNTA CANDABHĀSKARAH

OF

KAMBHAMPATI AMARESWARA SĀSTRI

*Critically edited with*
*Introduction*
*by*

***Dr. C.V.S. SUBRAHMANYA SARMA***
Sahitya Vidya Praveena, Adwaita Vedantacarya
M.A., B.Ed., P.O.L., Ph.D.,

*Published by :*
**SIVASYAMALA GRANTHAMALA**
**TIRUPATI**

**1996**

AJÑĀNADHVĀNTA CANDABHĀSKARAḤ

Author :
Dr. C.V.S. Subrahmanya Sarma,
Research Assistant in Sanskrit,
**Oriental Research Institute,**
S. V. University,
Tirupati – 517 502. (A.P.), India.



I Edition : July, 1996.
Copies : 1,000.
Price : Rs.

This Book is Published under the Financial Aid of
**Tirumala Tirupati Devasthanams, Tirupati.**
Under their scheme Aid to Relegious Publications.

Laser Typesetted & Printed at ANNAPURNA GRAPHICS, Tenali.

For Copies :
**Smt. C. Kanakadurga,**
SIVASYAMALA GRANTHAMALA,
18-1-63/A, K.T. Road, Tirupati .. 517 507 (A.P.)

# कृतज्ञता निवेदनम्।

कम्भम्पाटि अमरेश्वरशास्त्रि कृताज्ञानध्वान्तचण्डभास्कराख्यग्रन्थस्य ''विद्यावारिधि'' (*Ph.D.*) इत्युपाधिं 1988 तमे वर्षे दत्तवद्भ्यः दिल्लीस्थ राष्ट्रियसंस्कृतसंस्थानस्य निदेशकवर्येभ्यः अन्येभ्यः अधिकारिभ्य मम कृतज्ञतां निवेदयामि। तिरुपतिस्थ केन्द्रियसंस्कृतविद्यापीठस्य निवृत्तप्राचार्याः कीर्तिशेषिणः **डा. एम्. डि. बालसुब्रह्मण्यं** महोदयेभ्यः, गुरुवायूर् केन्द्रिय संस्कृतविद्यापीठस्य निवृत्त प्राचार्येभ्यः **विष्णुपुरं स्वामिनाथन्** महोदयेभ्यः, बहुकर्मव्यापृतेषु सत्स्वपि मम मार्गदर्शने अतिश्रद्धा दत्तवद्भ्यः राष्ट्रपतिना सम्मानिताः राष्ट्रियसंस्कृतविद्यापीठस्य निवृत्तकुलपतयः **प्रो. एन्. एस्. रामानुजताताचार्येभ्यः**, मम अभिवृद्धिं सर्वात्मना सर्वदा कांक्षितवद्भ्यः सर्वदा शास्त्राध्यापने सुरताः राष्ट्रपतिना सम्मानिताः अनेकसंस्थानैः, पूज्यपादस्वामिभिः, तत्तन्मठैश्च सम्मानितेभ्यः न्यायवेदान्ताद्यनेकशास्त्रपारंगतेभ्यः विजयवाड निवासिभ्यः **श्रीमद्दुलपल्लि माणिक्यशास्त्रि** महाभागेभ्यः, ग्रन्थस्य मुद्रणविषयप्रारम्भादद्यावधि महन्तमुपकारं कृतवद्भ्यः तिरुपतिस्थ राष्ट्रियसंस्कृतविद्यापीठस्य कुलपति पदे विराजमानवद्भ्यः, **प्रो. एस्. बि. रघुनाथाचार्य** वर्येभ्यः, तालपत्रसम्पादनकाले- मद्रास् प्रभुत्व ओरियण्टल् मानुस्क्रिप्ट् लैब्ररी, तथा अडयार् लैब्ररी एण्ड् रीसेर्चसेन्टर् मद्रास्, एवं प्रभुत्व ओरियण्टल् मानुस्क्रिप्ट् लैब्ररी, मैसूर् मध्ये ये अधिकारिणः तदा सहाय्यं कृतवद्भ्यः तेभ्यस्सर्वेभ्यः, ग्रन्थमुद्रणार्थं धनसहायं कृतवद्भ्यः **तिरुमलतिरुपति देवस्थानीय अधिकारिभ्यः**, ग्रन्थमुद्रणविषये अतिसुन्दरं यथाऽगच्छति तथा कृतवद्भ्यः जम्मुलमडक सोदरेभ्यः, अन्येभ्यः श्रीमद्भ्यः अस्मदीयेभ्यः सर्वेभ्यः कृतज्ञतानिवेदनं करोमि।

**विना वेङ्कटेशं न नाथो न नाथः**
**सदा वेङ्कटेशं स्मरामि स्मरामि।**
**हरे वेङ्कटेश प्रसीद प्रसीद**
**प्रियं वेङ्कटेश प्रयच्छ प्रयच्छ॥**

**अज्ञानिना मया दोषानशेषान्विहितान् हरे।**
**क्षमस्व त्वं क्षमस्व त्वं शेषशैलशिखामणे॥**

**अहं दूरतस्ते पदाम्भोजयुग्म प्रणामेच्छयागत्य सेवां करोमि।**
**सकृत्सेवया नित्यसेवाफलत्वं प्रयच्छ प्रयच्छ प्रभो वेङ्कटेश॥**

इत्थम्।

विद्वज्जनविधेयः
***डा. चतुर्वेदुल वेङ्कट श्रीशिवसुब्रह्मण्यशर्मा***
(C.V.S. सुब्रह्मण्यशर्मा)

# उपोद्घातविषयानुक्रमणिका ॥


| क्र.सं. | विषयाः | पृ. सं. |
|---|---|---|
| 1. | सामान्यतः दर्शनं नाम किम् | १ |
| 2. | तत्प्रयोजनं | २ |
| 3. | दर्शनभेदाः | ३ |
| 4. | नास्तिकदर्शनानि | ५ |
| 5. | जैनदर्शनं | ६ |
| 6. | बौद्धदर्शनं | ७ |
| 7. | आस्तिकदर्शनानि न्यायदर्शनं | ७ |
| 8. | वैशेषिकदर्शनं | १० |
| 9. | सांख्यदर्शनं | १३ |
| 10. | योगदर्शनं | १६ |
| 11. | पाणिनीयदर्शनं | १९ |
| 12. | मीमांसादर्शनं | २२ |
| 13. | वेदान्तदर्शनं शांकरदर्शने गुरुपरम्परा | २४ |
| क. | अद्वैतसिद्धान्तः | २४ |
| ख. | सत्तात्रयनिरूपणं | २५ |
| घ. | मोक्षः | २६ |
| ड. | साधनचतुष्टयं | २७ |
| च. | सिद्धान्तविकासः | २७ |
| छ. | बिम्बप्रतिबिम्ब-आभासावच्छिन्नवादाः | २८ |
| ज. | अविद्यास्वरूपं | ३० |
| झ. | ब्रह्मस्वरूपं | ३१ |
| ट. | ईश्वरस्वरूपम् | ३२ |
| 14. | अद्वैतदर्शने प्रस्थानत्रयं | ३२ |
| | प्रथमप्रस्थानप्रस्तावना, उपनिषद्व्याख्यापरम्परा | ३५ |
| 15. | गीतान्तराणि, तेषां व्याख्यानानि। | ३९ |
| | द्वितीयप्रस्थानस्य विवरणं | ४१ |
| | द्वितीयप्रस्थानस्य व्याख्योप व्याख्यानानि। | ४३ |
| 16. | तृतीयप्रस्थानप्रस्तावना | ४४ |
| | तृतीयप्रस्थानस्य विवरणं, | ४५ |
| | तृतीयप्रस्थानव्याख्योपव्याख्यानानि। | ४७ |
| | बिम्बप्रतिबिम्बवादीयाः व्याख्याः | ४७ |
| | अवच्छेदवादीयाः व्याख्याः | ४८ |
| | शांकरभाष्यास्य साक्षात् व्याख्याः | ४८ |
| 17. | ब्रह्मसूत्रवृत्तिग्रन्थाः | ४९ |
| 18. | शांकरदर्शने प्रकरण ग्रन्थप्रस्थानम् | ५१ |
| 19. | प्रकरणग्रन्थेषु प्रकृत ग्रन्थस्य अन्तर्भावः | ५२ |
| | स्वानुभवावष्टम्भस्य | |

| | | |
|---|---|---|
| | कारणत्वविचारः | ५३ |
| | उपास्यदेवस्य | |
| | चिन्मुद्रायाश्चमाहात्म्यम् | ५३ |
| 20. | प्रकृतग्रन्थकर्तृपरिचयः | ५४ |
| | ग्रन्थकारो अनुभववेदान्ती | ५५ |
| 21. | प्रकृतग्रन्थप्रतिपाद्यविषय संग्रहः, | |
| | पूर्वाचार्यप्रार्थना, | ५८ |
| | स्वगुरुदेवताप्रार्थना | |
| | ग्रन्थरचने प्रतिज्ञा | ५८ |
| | भूमिका | ५८ |
| 22. | प्रथमप्रकरणविषयसंग्रहः | ५९ |
| क. | अनुबन्धचतुष्टयनिरूपणं | ६० |
| ख. | स्त्रीविषयकनिर्विण्णता | ६१ |
| ग. | कामिनीवासनापरित्याग निरूपणम् | ६१ |
| घ. | पुत्रदोषनिरूपणम् | ६१ |
| ङ. | अनर्थसंसारसागरनिरूपणं | ६२ |
| च. | कर्मणां तुच्छफलत्वम् | ६२ |
| छ. | उपासकानां मोक्षविचारः | ६२ |
| ज. | दृङ्मात्रं सर्वमनित्यम् | ६२ |
| झ. | शरीरमेव महद्दुःखम् | ६३ |
| ञ. | शमादिषट्कनिरूपणम् | ६३ |
| ट. | मुमुक्षुत्वविचारः | ६३ |
| 23. | द्वितीयप्रकरणसंग्रहपरिचयः | ६४ |
| | उपासकभेदेन तन्मत विचारः | ६४ |
| | मौढ्योपासना | ६४ |
| | जीवात्मविचारः | ६४ |
| 24. | तृतीयप्रकरणसंग्रहपरिचयः | ६५ |
| | उत्पत्तिप्रारम्भविचारः | ६५ |
| | ईश्वरस्वरूपविचारः | ६६ |
| | जीवात्मनोः विचारः | ६६ |
| 25. | चतुर्थप्रकरणसंग्रहपरिचयः | ६६ |
| | पंचीकरणविचारः | ६७ |
| | पंचीकरणप्रकारः | ६७ |
| 26. | पंचमप्रकरणसंग्रहपरिचयः | ६८ |
| क. | कोवाऽहमिति स्वत्मविचारः | ६८ |
| ख. | सांसारिकंचिताग्निविचारः | ६८ |
| ग. | अन्नमयकोशविचारः | ६८ |
| घ. | देहविभ्रमविचारः | ६९ |
| ङ. | प्राणमयकोशे वायुपंचकत्वं | ६९ |
| च. | मनोमयकोशः | ७० |
| | मनः प्रीतिरेव पुरुषार्थत्वं | |
| | आत्मनः कोशसम्बन्धित्वं | |
| | आत्मनः कोशसम्बधाभावः | ७० |
| ढ. | विज्ञानमयकोशस्वरूपम् | ७१ |
| ण. | कोशीयान्तःकरणादित्वम् | ७१ |
| त. | आत्मनः कोशाद्विभेदत्वम् | ७१ |
| थ. | आनन्दमयकोशस्वरूपम् | ७१ |
| द. | अज्ञानेनैव ममान्धकारः | ७२ |
| ध. | साक्षी आत्मनोः विलक्षणः | ७२ |
| 27. | षष्ठप्रकरणसंग्रहपरिचयः | ७२ |
| 28. | सप्तमप्रकरणसंग्रहपरिचयः | ७२ |
| 29. | ज्ञानस्वरूपविचारः | ७३ |

आत्मनः पिण्डाण्डे ब्रह्माण्डे च साक्षित्वे निर्विवादविचारः ७४
सर्वं साक्षिभास्यम् ७४
पंचकोशसाक्षिचैतन्यमपि प्रत्यगात्मैव ७५
समाधिरेव ज्ञानम् ७५
30. अष्टमप्रकरणसंग्रहपरिचयः ७६
वासनाक्षयविचारः ७६
मोक्षार्थीमानसतीर्थ सेवनम् ७७
श्रममात्रपर्यवसन्नव्यापारः ७७
31. नवमप्रकरणसंग्रहः ७८
जीवन्मुक्तस्वरूपस् ७८
कामादि आशा पिशाच विनिर्मुक्तोपायः ७८
कं जीवन्मुक्तमुच्यते ७९
32. दशप्रकरणसंग्रहपरिचयः
सन्यासस्य कः कुत्राधिकारी८०
विद्वत्सन्यासविधौ प्रमाणं ८०
विद्वत्सन्यासविधिः ८१
योगिनां परमहंसानां कोऽयं मार्गः ८२
33. उपसंहारः ८३
34. ग्रन्थकर्तुः अन्ये ग्रन्थाः ८३
35. मातृकाविवरणम् ८५
36. कृतज्ञतानिवेदनम्
37. समीक्षात्मकसम्पादनया-ऽज्ञानध्वान्तचण्ड भास्करः ९५
38. उदाहृतउपनिषद्वाक्यानां सूची २५७
39. ग्रन्थोदाहृतग्रन्थसूची २६९
40. उपोदघातोपयोगिग्रन्थसूची २६९
41. ग्रन्थोदाहृताचार्याणां सूची २६९


## ग्रन्थविषयानुक्रमणिका ।


प्रथमप्रकरणम् । ९६ – १३४
1. ग्रन्थारम्भः ९६
2. आत्मनःबन्धप्राप्तिःस्वा-भाविकौपाधिकरूपविचारः ९९
3. आत्मनः कथं दुःखादिसम्बन्धः १००
4. आत्मनः कथं अन्तःकरण-सम्बन्धः १००
5. औपाधिकमूलाज्ञानस्य सदसद्विचारः १०२
6. मूलाज्ञाननिवृत्युपायः १०४
7. ज्ञानमज्ञानस्य निवर्तकम् १०५
8. प्रसंगात् श्रवणविधि-विचारः १०६
9. अनुबन्धचतुष्टये प्रथमविचारः १०७
10. स्त्रीविषयकनिर्विण्णता ११०

11. कामिनीवासनापरित्याग-निरूपणम् ११०
12. पुत्रदोषनिरूपणम् ११२
13. अनर्थसंसारसागर-निरूपणम् ११४
14. अनर्थसंसारतरुणोपाय-निरूपणम् ११५
15. दिव्यसुखासक्तिपरित्याग-निरूपणम् १२०
16. कर्मणां तुच्छफलकत्व-निरूपणम् १२१
17. परलोकवासनादिपरि-हारनिरूपणम् १२३
18. उपासकानां मोक्षविचारः १२४
19. दृङ्मात्रं सर्वमनित्यत्व-निरूपणम् १२४
20. अत्यन्तदुःखलम्पट-शरीरसम्बन्धः शमादिषट्कनिरूपणम् १२७
21. दमविचारः १२९
22. उपरतिविचारः १३०
23. तितिक्षाविचारः १३०
24. मुमुक्षुत्वविचारः १३४


द्वितीयप्रकरणम्। १३६ - १४४


25. जगतः जीवेश्वररूपकर्तृत्व-भोक्तृत्वविचारः १३६
26. उपासकभेदेन तन्मतविचारः १३६
27. मौढ्योपासना-विचारः १३७
28. अहो मोहस्यमाहात्म्यं १३७
29. जीवात्मविचारः १३८
30. इन्द्रियाणामेवात्मत्व-विचारः १३९
31. तत्त्वज्ञताकर्तव्यता-विचारः १४१


तृतीयप्रकरणम्। १४५ - १४८


32. उत्पत्तिप्रारम्भविचारः १४५
33. ईश्वरः तत्स्वरूपविचारः १४६
34. जीवात्मनोविचारः १४७
35. जीवेश्वरनवकविचारः १४८


चतुर्थप्रकरणम्। १५० - १५२


36. पंचीकरणविचारः १५०
37. पंचीकरणप्रकारविचारः
38. पंचीकरणसंयोजनप्रकारः १५१
39. प्रासंगिकलयविचारः १५२


पंचमप्रकरणम्। १५५ - १७८


40. क्रोवाऽहमिति स्वात्मविचारः १५६
41. शारीरकबीभत्स-विचारः १५६
42. अन्नमयकोशे जीवोत्पत्ति-विचारः १५७
43. जीवस्य स्थूलदेहविचारः १५७

44. आत्मनः शरीरभेदविचारः १५८
45. सदात्मस्तुतिविचारः १६०
46. देहविभ्रमविचारः १६२
47. दुर्वासनाविचारः १६२
48. प्राणमयकोशे वायुपंचक-विचारः १६३
49. वायुपंचकविचारः १६४
50. मनोमयकोशः १६५
51. विज्ञानमयकोशः 167
52. कोशीयान्तःकरणविचारः १६८
53. आनन्दमयकोशः १६८
54. कोशानां चतुर्णामप्युपादान-विचारः १६९
55. अज्ञानेनैव ममान्धकारः १७०
56. आत्मनः आनन्दमयविभेद्रे प्रमाणम् १७०
57. आत्मनः परमानन्दत्व-विचारः १७१
58. साक्षी आत्मनो विलक्षणः १७२
59. अनात्मभ्यो आत्मनः पृथक्करणविचारः १७२
60. अवस्थात्रयभेदेन साक्षिचैतन्यप्रकाश १७४
61. नयेत्सदा वेदान्तचिन्तया १७५
62. चिद्विलासप्रपंचोऽयम् १७५

**षष्ठप्रकरणम् ।** १७९ - १८१

63. जीवेश्वरैक्यभावनाविचारः १७९
64. तैजस, हिरण्यगर्भ, विराडैक्यभावना १७९
65. दुर्वासनाविषलतास-मूलोन्मूलनम् १८०

**सप्तमप्रकरणम् ।** १८२ - १९६

66. ज्ञानस्वरूपविचारः १८२
67. पिण्डाण्डे ब्रह्माण्डे च साक्षित्वमात्मनः निर्विवादविचारः १८४
68. जीवस्यैव जगत्साक्षित्वेन ब्रह्मत्वेन प्रतिपादनम् १८६
69. सर्वं साक्षिभास्यम् १८७
70. किं ब्रह्मसाक्षात्कारो नाम १८९
71. पिशाचतिरस्कृतपुरुषाधमस्य एतादृशपुरुषार्थचिन्तना १९३
72. समाधिरेव ज्ञानम् इति विकल्प्यखण्डनम् १९५

**अष्टमप्रकरणम् ।** १९७ - २१७

73. वासनाक्षयविचारः १९७
74. भोगविषयककामाग्नि-ज्वालानिरूपणम् २००
75. आत्मानमेवान्ये बहु-पीडयन्ति कथम् २०२
76. लोभपुरस्सरं वस्तु प्रभूतं दुःखकारणम् २०५
77. आत्मनिन्दावमानकर्तॄणां

एव महद्दुःखम् २०६
78. मोक्षार्थीमानसतीर्थसेवनम् २१२

नवमप्रकरणम् । २१८ - २४५

79. जीवन्मुक्तस्वरूपविचारः २१८
80. अध्यासविहीनविनोद-संचारशीलो विचारः २१९
81. स्वारोपितमूढजनसमाचारः २२५
82. कामादि आशापाश-निर्मुक्तोपायः २२५
83. गतं गतं सर्वमुपेक्षणीयम् २२९
84. ज्ञानविमुक्तहतशोकः परममोक्षसाधनहेतुः २३४
85. कं जीवन्मुक्तमुच्यते २३८

दशमप्रकरणम् । २४६- २५६

86. मोक्षस्वरूपविचारः २४६
87. सन्यासस्य कः कुत्राधिकारी २४८
88. विद्वत्सन्यासस्वीकारे प्रमाणम् २५०
89. विद्वत्सन्यासविधिः (आतुरसन्यासविधिः) २५३
90. उपसंहारः २५५

ग्रन्थोदाहृतोपनिषद्वाक्य सूची २५७

ग्रन्थ - उपोदघातोप-युक्तग्रन्थसूची २६९

* * *

मेधादक्षिणामूर्तये नमः

## अज्ञानध्वान्तचण्डभास्करस्य पीठिकायां
## सामान्यतः दर्शनं नाम किं तत्प्रयोजनं च :--

प्रेक्षणार्थकात् दृशिधातोः (दृशिर् प्रेक्षणे) करणे ल्युट् प्रत्यये कृते दर्शनशब्दो निष्पद्यते । किं नाम दर्शनं दृश्यते अनेनेति दर्शनम् । येन साधनेनेदं विश्वं, इदं वस्तुजतं, ब्रह्म, जीवात्मा, प्रकृतिश्च याथातऽयेन दृश्यते, निरीक्ष्यते समीक्ष्यते विविच्यते च तद्दर्शनम् । अतः समग्रमपि आध्यात्मिकं आदिभौतिकं च विवेचनं दर्शनशब्दान्तर्गतं भवति ।

किं ब्रह्म, किं तस्य स्वरूपं, क ईश्वरः, कः तस्य प्राप्तेरुपायः, जगत्यस्मिन् शाश्वतं तत्त्वं किं, सृष्टिरियं कुतः आबभूव, किं जीवात्मनः स्वरूपं, कः पुनर्जायते, किं लिंगशरीरं, कुतो जीवस्योत्पत्तिः, किं तस्य लक्ष्यम्, कथं मोक्षावाप्तिः। आत्मा चेतनो अचेतनो वा, कः सृष्टेः कर्ता, जीवस्य कर्तव्यं किं, कस्य जीवनस्य साधिष्ठाः पन्थाः इत्याद्यनुयोगाः यत्र सुसूक्ष्मरूपेण विविच्यन्ते तद्दर्शनम् । सूक्ष्मेक्षिकया तत्त्वार्थदर्शनं दर्शनं इत्यवगन्तव्यम् ।

संसारेऽस्मिन् सर्वे हि जीवाः दुःखनिवृत्तिपूर्वकसुखावाप्तये यतमानाः इति न विवेकवतां परास्तोऽयं विषयः । परन्तु बहवः जीवाः ऐन्द्रियिकसुखे एव प्रवर्तन्ते 'नत्वतीन्द्रिये । अन्ये केचन नश्वरमित्यवगत्य पारलौकिकसुखार्थ-मन्वेषन्ते। निरतिशयानन्दावाप्तये कोऽस्तिसुलभो मार्गः इति विचिंत्य यज्ञ-यागादि श्रौतकर्माणि विदधते। एतादृशकर्मसाध्यः स्वर्गादिरूपसुखविशेषः। एतादृशानेकविधसुखविशेषोऽपि यथा" -- "क्षीणे पुण्ये मर्त्यलोकं विशन्ति" "तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्रपुण्यचितो लोकः क्षीयते" इति।

अत एव मुमुक्षवः परमश्रेयस्सम्पादनपूर्वकमात्मजिज्ञासामनुचरन्ति। आध्यात्मिकचिन्तनं न सर्वेषां सुकरम् । केषांचिदाजन्मतः एवैतत्संपाद्यते, यथा शुकवामदेवादीनां केषांचित्कौमारे, केषांचिद्गार्हस्थ्ये, केषांचित् स्थाविरे च सम्पाद्यते। परं केषांचिज्जनानां स्वीयजीवनविधौ आध्यात्मिकमध्यवसितुं न पारयेयुः। केचन तादृशकथामपि नैव जानन्ति। "श्रवणायामपि बहु-भिर्यों न लभ्यः" (क. उ. १-२-७) इत्यादिना। एतादृशाध्यात्मिक-चिन्तनपूर्वकब्रह्मजिज्ञासानुबन्धचतुष्टयेनैव साध्या। सा तु विषय-प्रयोजनसम्बन्धाधिकारिरूपा भवति। अस्य वेदान्तशास्त्रस्य ब्रह्मैव विषयः। मोक्षः एव परमप्रयोजनम्। प्रतिपाद्यप्रतिपादकभावः बोध्यबोधकभावो वा सम्बन्धः। साधनचतुष्टयसम्पन्न एवाधिकारी। तच्चतुष्टयन्तु नित्यानित्यवस्तुविवेकः, इहामुत्रार्थफलभोगविरागः, शमादिसाधनषट्कसम्पत्तिः, मुमुक्षुत्वं चेति ।

**प्रयोजनम्** :-- "प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते" इति लोके सामान्यतः प्रयोजनानुसारेणैव सर्वत्र सर्वेषु कार्येषु प्रवृत्तिः भवति। तथैव दर्शनेष्वपि। संस्कृतसाहित्ये दर्शनानि खल्वतीव महनीयं पदमलंकुर्वन्ति। तत्र भवतां दिव्यचक्षुषाखिलपदार्थजातं स्थूलसूक्ष्मप्रपंचं करतलामलकवत्प्रत्यक्षीकुर्वाणाः महर्षयः, यः जगतः जटिलान् सरलयितुं प्राणभृतां कल्याणकाम्यया दर्शनशास्त्रमिदं सत्यासत्यनिकर्षलक्षणं किमपि महार्हमुपायनं चक्रुः। ते एव महाभागाः तपः सम्पूतया धिषणया समस्तान् तान् तान् जातीयकानर्थान् कूलंकषमालोच्य दर्शनमुखेनाविर्भायामासुः। करुणार्द्रहृदयाः सहृदयाः हृदयालवः दयालव इति को नाम नांगीकुर्यादनूचानः। अस्य च रहस्य निगूढतमस्य प्रपंचस्य समाधानपथदर्शकं शास्त्रमिदं किल दर्शनमिदमित्याभिधीयते दृश्यते अनेनेति व्युत्पत्तेः। इदं च ज्ञातव्यं यत् मनुष्याः खलु निसर्गतः एव मननशीलाः। यदा सः चिन्तान्तरविमुक्तचित्तः भवति तदा विचिन्तयति निरतिशयजटिलामिमां विश्वसमस्यां कोऽहं, कुतोऽहं, कस्मादहं, किं कर्तव्योऽहं इत्येवं

जातीयकामेतादृशचिन्तनमननपरिणतिभूतं शास्त्रं दर्शनशास्त्रम्। सामान्यतः सर्वाणि दर्शनानि आत्मसाक्षात्कारार्थमेव प्रवृत्तानि। दर्शनकोणभेदेन दृष्टिभेदेन च दर्शनशास्त्र मनेकथा परिणतम्। परन्तु सर्वेषां चरमोद्देशन्तु आत्मसाक्षात्कार एव भवति, वस्तुतः विमृश्यमाने तदिदं दर्शनशास्त्रमेकमेव। अस्य च समस्तस्य चिदचिदात्मकभेदभिन्नस्य द्विविधस्यास्य प्रपंचस्य दृष्टादृष्टादिभेधात् द्वेधा विभज्यते। तत्र दृष्टवादी खलु दृष्टिप्रपंचे एवास्तित्वबुद्धित्वेन, अदृष्टप्रपंचे च नास्तित्वबुद्धिस्वीकारात् नास्तिकदर्शननाम्ना प्रसिध्यति। अपरश्च अदृष्टवादी पुनः दृष्टात्परयोरात्मपरमात्मनोरास्तित्वांगीकारात् आस्तिकदर्शनत्वेन जेगीयते। आस्तिकपुरुषस्य समुद्धरणार्थं परमकारुणिकाः परमर्षयः स्वानुभवलब्धं भिन्नरीतिषु भिन्नमार्गेषु सुखबोधाय प्रबोधितवन्तः प्रचोतिदवन्तश्च। तेषु दर्शनेषु न्याय - वैशेषिक - सांख्य - योग - मीमांसा - वेदान्तदर्शनानि मुख्यानि।

**दर्शनभेदाः** :-- सामान्यतः दर्शनकाराः द्विविधाः, नास्तिकाः आस्तिकाश्च। नास्तिकाः द्विविधाः आध्यात्मिकाः, तार्किकाश्च। आध्यात्मिकाः (एकप्रमाण-वादिनः अतीतस्थूलदृष्टिपथाच चार्वाका) नास्तिकचार्वाकाः द्विविधाः क्षणिक-वादिनः स्याद्वादिनश्च। (१) क्षणिकवादिनो बौद्धाः। (२) स्याद्वा-दिनो जैनाः। (३) आस्तिकाः द्विविधा सगुणात्मवादिनो निर्गुणात्मवादिनश्च। सगुणात्मवादिनोऽपि पुनर्द्विविधाः तार्किकाः, श्रौताश्च। तत्र तार्किकाः पुनर्द्विविधाः प्रच्छन्नतार्किकाः स्पष्टतार्किकाश्च। तत्र प्रच्छन्नतार्किकाः द्विविधाः, प्रच्छन्नद्वैताः, स्पष्टद्वैताश्च। (४) प्रच्छन्नद्वैताः रामानुजीयाः। (५) स्पष्टद्वैताः माध्वाः। (६) स्पष्टतार्किकाः द्विविधाः, भोगसाधनादृष्टवादिनः, उत्पत्तिसाधना - दृष्ट-वादिनश्च। भोगसाधनादृष्टवादिनो द्विविधाः विदेहमुक्तिवादिनो जीवन्मुक्तिवादिनश्च। विदेहमुक्तिवादिनो द्विविधाः आत्मभेदवादिनः आत्मैक्यवादिनश्च। आत्मभेदवादिनोऽपि द्विविधाःकर्मानपेक्षेश्वरवादिनः कर्मसापेक्षेश्वरवादिनश्च। (७) कर्मानपेक्षेश्वरवादिनः नकुलीशपाशुपताः। (८) कर्मसापेक्षेश्वरवादिनः शैवाः। (९) आत्मैक्यवादिनो प्रत्यभिज्ञादर्शिनः।

(१०) जीवन्मुक्तिवादिनो रसेश्वराः। (११) उत्पत्तिसाधनादृष्टवादिनो द्विविधाः, शब्दं प्रमाणान्तरमनंगीकुर्वाणाः, अंगीकुर्वाणाश्च। (१२) शब्दं प्रमाणान्तरमनंगीकुर्वाणाः वैशेषिकाः। शब्दं प्रमाणत्वेनांगीकुर्वाणाः नैय्यायिकाः। (१३) श्रौताः द्विविधाः वाक्यार्थवेदिनः पदार्थवेदिनश्च। वाक्यार्थवेदिनः मीमांसकाः। (१४) पदार्थवेदिनो वैय्याकरणाः। (१५) निर्गुणात्मवादिनो द्विविधाः तार्किकाः श्रोताश्च, तार्किकाः द्विविधाः निरीश्वराः सेश्वराः। निरीश्वराः सांख्याः। (१६) सेश्वराः पातंजलाः। (१७) श्रोताः अद्वैतवादिनः शांकराः। एवंच वेदसिद्धान्तानुरोधेन प्रवर्तमानत्वात् वैदिकानि दर्शनानीति। तत्सिद्धान्तप्रतिरोधेन प्रवर्तमानत्वात् अवैदिकानि। उक्तं च संस्कृतसाहित्यविमर्शे --

अवैदिकप्रमाणानां सिद्धान्तानां प्रदर्शकाः<br>
चार्वाकाद्याः षड्विधास्ते ख्याता लोकेषु नास्तिकाः।<br>
वेदप्रमाणकानीह प्राचुर्ये दर्शनानि षट।<br>
न्यायवैशेषिकादीनि स्मृतास्ताः आस्तिकाभिधाः॥

उदयनाचार्यास्तु न्यायकुसुमांजलौ तु "इह यद्यपि यं कमपि पुरुषार्थमर्थयमानाः शुद्धबुद्धस्वभावाः इत्यौपनिषदाः, इति विद्वान् सिद्ध इति कपिलाः, क्लेशकर्मविपाकाशयैरपरामृष्टो निर्माणकायमधिष्ठाय सम्प्रदाय प्रद्योतको अनुग्राहकश्चेति पातंजलाः, लोकवेदविरुद्धैरपि निर्लेपः, स्वतन्त्रश्चेति महापाशुपताः (काश्मीरे प्रचारे पथे वर्तति) शिव इति शैवाः, पुरुषोत्तम इति वैष्णवाः, पितामह इति पौराणिकाः, यज्ञपुरुष इति याज्ञिकाः, सर्वज्ञ इति सौगताः, निरावरण इति दिगम्बराः, उपास्यत्वेन दर्शितः इति मीमांसकाः, लोकव्यवहारसिद्ध इति चार्वाकाः, यावदुक्तोपपन्न इति नैयायिकाः किं बहुना (तक्षकाः शिल्पिनः इत्यादयः) विश्वकर्मेति अन्ये च मृदारुशिलावृक्षाणि देव इति मत्वा उपासते। तस्मिन्नेवं जातिगोत्रप्रवरचरणकुलधर्मादिवदासंसारंप्रसिद्धानुभावे भगवति भवे सन्देह

एव कुतः किं निरूपणीयम्-- तथाहि--

**न्यायचर्चेयमीशस्य मननव्यपदेशभाक्।**
**उपासनैव क्रियते श्रवणानन्तरागता॥ इति॥**

## दर्शनेषु नास्तिकदर्शनानि॥

अथेदानीं नास्तिकदर्शनान्येति संज्ञया प्रसिद्धानां चार्वाक - जैन - बौद्ध दर्शनानां दर्शनसाहित्ये सविशेषं सन्निविष्ठानां आस्तिकदर्शनभिन्नानां विवेचन - मप्यावश्यकमिति तेषामपि समासेन निरूपणमत्र प्रसंगसंगत्या वितन्यते।

नास्तिकदर्शनमिति चैषामवैदिकदर्शनानां पारिभाषिकी संज्ञा। परलोके नास्ति मतिः येषां इति। नास्तिकदर्शनेषु चार्वाकदर्शनस्य प्राचीनतया सार्वप्राथम्यम्। तेषां नये शरीरस्यैवात्मत्वं, शरीरात् भिन्नमात्मनो अस्तित्वं न स्वीकुर्वन्ति। तेषां इदं दृश्यं जगदात्मलीलास्थलत्वेनाभिमतं। मरणमेव मुक्तिं मन्यन्ते। प्रत्यक्षवाद एव विश्वसन्ति ते। परोक्षमवहेलयन्ति। मानवजीवनस्य काममेव पुरुषार्थत्वेनाभ्युपगच्छन्ति। नादृष्टधर्मादिकं किमप्यन्यत्। निसर्गतः एव जगदुत्पद्यते, विनश्यति इत्याद्याः अमीचार्वाकसिद्धान्ताः अतिप्राचीन कालतः भारते अवलोक्यन्ते प्रस्पुरन्तः।

इदमेव चार्वाकदर्शनं लोकायतदर्शननाम्नापि प्रसिद्धम्। बुद्धिवाद एव एषां परमः सिद्धान्तः। वादेषु वैताण्डिकत्वं एवैते खल्वभिनदन्ति। स्वपक्षस्थापना तेभ्यो न रोचते। अतः लोकायतिकाः वैतण्डिकाः इत्यपि व्यपदिश्यन्ति उक्तं च न्यायमंजर्याम् --

**न हि लेकायते किंचित्कर्तु व्यपदिश्यते।**
**वैतण्डिककथैवासौ न पुनः कश्चिदागमः॥** (सं. सा. वि. 286)

इति। लोकायतो नाम स्वभाववादः। लोकायतशास्त्रे प्रत्यक्षमेव प्रमाणम् अर्थकामौ च पुरुषार्थौ। नास्ति परलोकः इति वदन्ति। मृत्युरेवापवर्गः। तर्कातिरिक्तं न कस्यापि शास्त्रान्तरस्य प्रामाण्यमंगीकुर्वन्ति, सिद्धान्तराणि

सर्वाणि खण्डयन्ति मण्डयन्ति। केवलं बुद्धिवादं, तर्कवादं, वितण्डावादं, चांगीकुर्वन्ति।

**जैनदर्शनम्** :-- जैनदर्शनस्य प्रादुर्भावः बौद्धदर्शनात्पूर्वतनः। जैनधर्मस्य खल्वतीव प्राचीनता। नामधेयन्तु "निगण्ढ" इति निर्ग्रन्थशब्दस्य पालीभाषायाः रूपान्तरितो अपभ्रंश इति प्रतीयते। भवबन्धस्य ग्रन्थनिर्मितत्वात् निर्ग्रन्थ इति व्यपदिश्यते। महावीरस्य चोपाधित्वेनोन्नीयते। तत्र रागद्वेषविजयिनः सर्वज्ञकल्पाः त्रैलोक्यपूजिता यथास्थितार्थवादिनः सिद्धपुरुषाः "अर्हन्" पदेन संज्ञायन्ते। यथा --

सर्वज्ञो जितरागादिदोषस्त्रैलोक्यपूजितः ।
यथास्थितार्थवादी च देवोऽर्हन् परमेश्वरः ॥ (सं. सा. वि. २९३)

इति। तत्प्रचारितत्वात् दर्शनमपि। जैनधर्मस्यान्तिमतीर्थङ्करस्य वर्धमानाधिपस्य रागद्वेषादिरिपूणां विजयात् "जिन" इत्युपाधिः, जिनेन प्रचारितत्वात् जैनदर्शनमुच्यते। जैनसिद्धान्तप्रचारकाः तीर्थङ्कराः इत्युच्यते। तीर्थंकरेषु आद्यः खलु ऋषभदेवः। पार्श्वनाथमहावीरो चान्तिमो। तदितरेषामेकविंशतितीर्थंकराणां यथार्थवर्णनं नोपलभ्यते पूर्णतया। सर्वकंषकालचक्रवशात् क्लृप्तप्रायंजैनधर्मं तत्र भवान् ऋषभदेवः एव पुनरुज्जीवयामास। जैनदर्शनं हि बहुतत्त्ववादप्रतिपादकम्। वास्तववादो हि अस्य परमोऽभ्युपगमः। जैनदर्शने कणे कणे च जीवसत्ता स्वीकृता। तदणावणौ निवसतां जीवानां परिरक्षणार्थमवैष परमोदात्ताऽहिंसासिद्धान्तोऽंगीकृतो अवगम्यते जैनदार्शनिकैरिति।

अनेकान्तवादोऽपि जैनदर्शनस्य परममाननीयो राद्धान्तः। परार्थानां मिथः सम्बन्धज्ञानादृते सत्यज्ञानस्योदयोऽसम्भवः। तथा च --

एको भावः सर्वथा येन दृष्टः सर्वेभावाः सर्वथा तेन दृष्टाः ।
सर्वे भावाः सर्वथा येन दृष्टाः एकोभावः सर्वथा तेन दृष्टः ॥
(सं. सा. वि. ३०३) इति ॥

**बौद्धदर्शनम् :--** बौद्धदर्शनं हि जैनदर्शनादुत्तरकालसम्भवात्। बौद्धेतिहासे रूपद्वयं हि समुपलभ्यते। बौद्धधर्मस्य धार्मिकं, दार्शनिकं चेति द्विविधम्। धार्मिकसाहित्येआध्यात्मिकतत्त्वानां सरहस्यं वर्णनं आचारव्यवहाराणां च सम्यङ्निरूपणम्। दर्शनं हि मुख्यतया चतुर्षु विभागेषु विभक्तं दृश्यते। तत्तु वैभाषिक, सौत्रान्तिक, योगाचार, माध्यमिकाख्येषु वर्तन्ते। तत्र वैभाषिकानां बाह्यार्थप्रत्यक्षवादः। सौत्रान्तिकानां बह्यर्थानुपमेयवादः। योगा-चाराणां विज्ञानवादः। माध्यमिकानां च पुनः शून्यवादः।

**मुख्यो माध्यमिको विवर्तमिखलं शून्यस्य मेने जगत्।**
**योगाचारमते तु सन्ति मतयः तासां विवर्तोऽखिलः॥**
**अर्थोऽस्ति क्षणिकत्वसावनुमितो बुद्धश्च सौत्रान्तिकः।**
**प्रत्यक्षं क्षणभंगुरं च सकलं वैभाषिको भाषते॥** (सं. सा. वि. ३०८)

इति। अत्र तु वैभाषिका निर्वाणयोरुभयोरपि सत्यतामंगीकुर्वन्ति। माध्यमिकाः उभयोरपि असत्यतां अंगीकुर्वन्ति। सौत्रान्तिकास्तु संसारस्य सत्यतां निर्वाणस्य चासत्यतां, योगाचाराः संसारस्यासत्यतां निर्वाणस्य सत्यतां चांगीकुर्वन्ति। नास्तिकदर्शनानि तु एवमेवान्तरभेदाः बहवः वर्तन्ते। विस्तरभिया अतिसंक्षिप्तम्।

## आस्तिकदर्शनेषु न्यायदर्शनम्॥

वेदसिद्धान्तानुरोधेन प्रवर्तमानानां दर्शनानां आस्तिकदर्शनानीति।

**प्रदीपः सर्वविद्यानां उपायः सर्वकर्मणाम्।**
**आश्रयः सर्वविद्यानां शाश्वतान्वीक्षिकी मता॥** (चाणक्यः)

इत्यादिना। शास्त्रस्यास्य सर्वप्रथमं सर्वशास्त्रोपकारकत्वं अंगीकृतं विवेचकैः। अतः षट्दर्शनानामलंकारभूतं प्रमाणप्रमेय "इत्यारभ्य" हेत्वाभासाश्च यथोक्ताः इत्यन्तं पंचाध्यायात्मकं महर्षिगौतमपादैः प्रणीतं शास्त्रं न्यायदर्शनमित्युच्यते। न्यायश्च पुनः प्रत्यक्षादिप्रमाणैः अर्थपरीक्षणं न्यायान्वीक्षिकी व्याख्ययापि समाख्यायते। नीयते प्राप्यते

यथार्थपदार्थज्ञानं येन सः न्यायः। अथवा साधनीयार्थस्य यावति शब्दसमूहे सिद्धिः परिसमाप्यते अवयवयोपपत्यात्मको न्यायः इति वात्स्यायनः। "समस्तप्रमाणव्यापारादर्थादिगतिः न्यायः" इति वार्तिककारः। न्यायविस्तरस्तु मूलस्तम्भभूतः सर्वविद्यानां वेदप्रामाण्यहेतुत्वात्। तस्मादेव तार्किकोपमर्दद्वारकं दृढतरवेदप्रामाण्यप्रत्ययाध्यायि न्यायोपदेशक्षममक्षपादोपदिष्टमिदं न्यायविस्ताराख्यं शास्त्रं प्रतिष्ठाननिबन्धनमिति। परमविद्यास्थानं इति न्यायमञ्जर्या जयन्त भटः। अस्य शास्त्रस्य प्रयोजनन्तु वेदार्थविरोधि तर्कनिरसनोपायिकं वैदिकसिद्धान्तरक्षणोपयोगि प्रमाणादिप्रतिपादनमेव। अत एवेदं शास्त्रं प्रमाणशास्त्रं तर्कशास्त्रमित्युच्यते। तर्क्यन्ते यथार्थज्ञानविषयी क्रियन्ते अर्थाः यैस्ते तर्काः, तेषां शास्त्रं तर्कशास्त्राम् उट्टंकितं च सिद्धान्तसंग्रहकारैः --

नैय्यायिकस्य पक्षोऽयं संक्षेपात्प्रतिपाद्यते।
यत्तर्करक्षितो वेदो ग्रस्तः . . . . . दुर्जनैः ॥

मनुस्मृतौ तु --आर्षधर्मोपदेशं च वेदशास्त्रविरोधिना।
यस्तर्केणानुसन्धत्ते स धर्म वेद नेतरः ॥ (१२-१०)

यथा न्यायवार्तिककारः --

यदक्षापादप्रवशे मुनीनां शमाय लोकस्य जगाद शास्त्रम्।
कुतार्किकध्वान्तनिरासहेतोः करिष्यते तस्य मया निबन्धः ॥
यदक्षपादप्रतिमो भाष्यं वात्स्यायनो जगौ।
अकारि महतस्तस्य भारद्वाजेन वार्तिकम् ॥

पद्मपुराणे --कणादेन तु सम्प्रोक्तं शास्त्रं वैशेषिकं महत्।
गौतमेन तथा न्यायं सांख्यन्तु कापिलेने तु ॥

स्कन्धपुराणे --गोतमः स्वेन तर्केण खण्डयन् तत्र तत्र हि ॥

गान्धर्वतन्त्रे --गौतमप्रोक्तशास्त्रार्थनिरताः सर्व एव हि।
शार्गलीं योनिमापन्नाः संदिग्धाः सर्वकर्मसु ॥

नैषधीयचरिते --मुक्तये यः शास्त्रमूचे सचेतसाम्।
गोतमं तमेवतैव यथा वित्थ तथैव सः॥

न्यायभाष्ये - विश्वनाथकृतौ --
एषा मुनिप्रवरगौतमसूत्रवृत्ति
श्रीविश्वनाथकृतिना सुगमाल्पवर्णा।
श्रीकृष्णचन्द्राम्बुजचंचरीक-
श्रीमच्छिरोमणिवचः प्रचयैरकारि॥

तात्पर्यटीकायां --अथ भगवता अक्षपादेन निःश्रेयसहेतौ शास्त्रे प्रणीते।

न्यायमंजर्या --अक्षापादप्रणीतो हि विततोन्यायपादपः।
सान्द्रामृतरसस्यन्दफलसन्दर्भनिर्भरः॥

इत्यादिभिः न्यायशास्त्रस्यौन्नत्यं प्रकटितम्। षोडशपदार्थानां तत्त्वज्ञानान्निश्रेयसाधिगम एवास्य शास्त्रस्य प्रतिपाद्यो विषयः। निश्रेयसो मोक्षः। न स प्रमाणादीनां तत्त्वज्ञानमन्तरा शक्योपमः। प्रमाणादीनां च तत्त्वज्ञानं न तावत् संभवति यावत्तेषां उद्देश, लक्षण - परीक्षाः स्युः। त्रिविधा खल्वस्य शास्त्रस्य प्रवृत्ती भवति। तत्र नामधेयेन पदार्थाभिधानमुद्देशः। स च प्रमाण, प्रमेय - संशय - प्रयोजन - दृष्टान्त - सिद्धान्त -अवयवं - तर्क - निर्णय - वाद - जल्प - वितण्ड, हेत्वाभास - छल - जाति निग्रह - स्थानानां तत्त्वज्ञानात् निश्रेयसाधिगमः। (न्याय. सू. १-१-१) इति निर्दिष्टः। "उद्दिष्टस्य तत्त्वव्यवच्छेदकोऽसाधारणधर्मः लक्षणम् यथा गोः सास्नादिमत्त्वम्॥" लक्षितस्य चलक्षणं तत्र घटते न वेति प्रमाणैरर्थावधारणं परीक्षा इति। अस्मिन् शास्त्रे प्रत्यक्षानुमानोपमानशब्दात्मकप्रमाणचतुष्टयं भवति। आत्मशरीरेन्द्रियार्थबुद्धिमनः प्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गात्मकं द्वादशविद्यामेव प्रमेयम्। एषां सम्यक् ज्ञानमेव निःश्रेयसात्यन्तमावश्यकम्। शास्त्रमिदं प्राचीननव्यरूपेण द्विधा विभक्तम्। महर्षिगौतमोपज्ञाप्राचीनन्यायपदेन व्यपदिश्यते। अपरा श्रीमद्गंगोपदेशोध्यायप्रवर्तिता नव्यन्यायपदेन विभूष्यते। न्यायदर्शनस्य सर्वप्रथमो भाष्यकारः श्रीवात्स्यायनो

नाम मुनिः। न्यायसिद्धान्तानां गूढं रहस्यमुद्धारयितुं महोच्चपदमधिकरोति। (२) दिङ्नागस्य कुतर्कात् खण्डयितुं न्यायशास्त्रस्य च निर्दुष्टतां मण्डयितुं उद्योतकारः न्यायवार्तिकाख्यं बृहत्प्रबन्धमुपबबन्ध। (३) तार्किकाग्रणीवाचस्पतिमिश्राः स्वजन्मना मिथिलामलंचकार। श्रीमिश्रप्रणीतेन न्यायसूची निबन्धनेनावगम्यते तस्य महामेधावित्वम्। अनेन खलु महाविदुषा वैशेषिकदर्शनं विहाय सर्वेष्वेव दर्शनेषु अतिपाण्डित्यपूर्णाः प्रमाणभूताः सुविस्तृताः टीकाः अतिललिताः भवन्ति। उद्योतकरकृत न्यायवार्तिकस्य तात्पर्यटीकामालिख्य तार्किकलोकस्य महान्तमुपकारं चकार। (४) न्यायमंजरीप्रणेता जयन्तमहो नाम परमपण्डितः। अनेन न्यायकलिका नामाऽन्योऽपि न्यायपदार्थनिरूपणपरः एको ग्रन्थो प्रणीतः। (५) तर्कधुरन्धरैः उदयणाचार्यैः बौद्धधिक्कारापरनामा आत्मतत्त्वविवेकः, न्यायकुसुमांजलिः नाम ग्रन्थरत्नद्वयं कृतवान् (६) नव्यन्यायस्य प्रवर्तकाः अभिनवयुगप्रवर्तकग्रन्थकर्तारः नैय्यायिकचूडामणिः गंगेशोपाध्यायो नाम स्वजनुषा मिथिलां विभूषयामास। अन्ये वासुदेवसार्वभौमः, रघुनाथ तर्कशिरोमणिः, मधुरानाथः, जगदीशभट्टाचार्यः, गदाधरभट्टाचार्यः, इत्यादिभिः बहुभिः शास्त्रस्यास्य महतीं शोभामवाप।

**वैशेषिकदर्शनम् :--** वैशेषिकदर्शनमिदं भगवान्महर्षिकणादमुनिपादैः प्रणीतम्। स किलायं महर्षिः कश्यपगोत्रोत्पन्नत्वात् काश्यपनाम्नापिजेगीयते। "विरुद्धासिद्ध - सदिग्धमलिंगं काश्यपोऽब्रवीत्" इति। अयमेव मुनिः औलूकः उलूकश्चेत्याख्यायते। सर्वदर्शनसंग्रहकारैः सायणमाधवाचार्यैस्तु वैशेषिकदर्शनस्योल्लूकः औलूक्यदर्शननाम्नैव कृतिः। अमुमेव महर्षिं केचन कणभुक्- कणभक्षनाम्ना व्यामनन्ति तदेवं सोऽयं महर्षिः अतीव प्राचीन इति प्रतीयते। किंच महाभारतेऽपि भीष्मपर्वणि तावदुलूकनाम्नो महर्षिर्वर्णनमवलोक्यते। "न वयं षट्पदार्थवादिनो वैशेषिकवदिति" सांख्यसूत्रादपि (विषयाध्याये २५. सू) अस्य पूर्वकालभवत्त्वमवगम्यते। एवं "महद्दीर्घकालाद्वा ह्रस्वपरिमण्डलाभ्याम्" (ब्र. सू. २-२-११) इत्यादि ब्रह्मसूत्रपर्यालोचनात् बादरायणसूत्रेभ्योऽपि पूर्वमेतद्दर्शनं प्राचीनमनुमीयते।

किंचास्मिन् दर्शने न्यायदर्शनवत् शब्दानामुत्पत्तिविनाशित्वं सिद्धान्तितम्। सोऽयं सिद्धान्तः जैमिनिमुनिपादैः अध्वरमीमांसायां "कर्मैके तत्र दर्शनात्" इत्यादिसूत्रैः महता समारम्भेण निराकृतः। एतेनापि पूर्वमीमांसादर्शनादारभ्य प्राचीनत्वं सम्भवत्युपोद्बलितम्।

अपि च समानप्रायोरनयोः न्यायवैशेषिकयोः वैशेषिकस्यैव प्राचीनतरत्वमुद्भाव्यते। वैशेषिके याऽनुमानप्रणाली संक्षेपेण प्रदर्शिता। सैव न्याये महता विस्तरेणोपदिष्टा। अपि च हेत्वाभासा अपि वैशेषिकेण त्रय एव निरूपिताः न्याये च पुनः पंचैव ते सप्रपंचमुदंचिताः। चेदिदं वैशेषिकं भवेत् न्यायदर्शनतः उत्तरकालभवं, तर्हि अवश्यं हेत्वाभासानां पंचत्वं निराकृत्य त्रित्वमेव तेषामनेन सोपपत्तिकं व्यवस्थापितं स्यात्। न च तथास्ति, तस्मात् न्यायदर्शनतोऽपि प्राग्भावित्वमेवोपपद्यते। अतः महर्षिणा गौतमेन भगवत्कणादमुनिपादक्षुण्णां प्रणालीमेवोत्तरकाले सम्यक् संशोध्य विशदीकृत्य च न्यायरूपेण सा पुनरुपनिबद्धा इति निर्विशंकं शक्यते समुपपादयितुमिति कलाविद आकलयन्ति।

दर्शनान्तरैः विसदृशतया "विशेष" नामानं पदार्थमंगीकृत्य प्रवर्तमानत्वात् वैशेषिकत्वमित्यभिधानमस्य चारितार्थ्यमश्नुते। विशेषत्वं च नाम "नित्यद्रव्यवृत्तित्वे सति व्यावर्तकत्वम्" घटादीनां द्वयणुकपर्यन्तानां तत्तदवयवभेदात् परस्परं भेदः परमाणूनां च परस्परभेदको विशेष एव। स तु स्वत एव व्यावृत्तः। तत्र विशेषान्तरापेक्षा नास्ति। विशेषस्तु नित्यद्रव्यवृत्तिकः, अत एव नित्यद्रव्य इति। परमेव विशेषपदार्थः दर्शनान्तरैर्न स्वीकृतः। तदेतस्य विशेषपदार्थस्य प्रतिपादनादेवास्य वैशेषिकमितिसंज्ञा। दर्शनमिदं सप्तत्युत्तरत्रिंशत्सूत्रैः निबद्धं, दशाध्यायात्मकं। प्रत्यध्यायंच द्वे द्वे आह्निके अनुस्यूते। तत्र प्रथमाध्याये समवेताशेषपदार्थकथनम्। द्वितीयाध्याये द्रव्यनिरूपणं, तृतीयाध्याये आत्मान्तःकरणयोर्निरूपणम्। चतुर्थाध्याये शरीरतत्प्रभेदविवेचनम्। पंचमेऽध्याये कर्मनिरूपण। षष्ठेऽध्याये श्रौतधर्मविवेचनम्। सप्तमेऽध्याये गुणसमवाययोः प्रतिपादनम्। अष्टमेऽध्याये ज्ञानोत्पत्तितन्निदानादिनिरूपणम्। नवमे

प्रागभावादिप्रतिपादनपूर्वकं, लौगिकादिज्ञानप्रतिपादनम्। दशमेऽध्याये च पुनः आत्मगुणभेदप्रतिपादनम्।

दर्शनमिदं सर्वदर्शनोपकारकत्वात्प्रधानं पदं जुषुते अखिलेऽपि दर्शनप्रपंचे, "काणादं पाणिनीयंच सर्वशास्त्रोपकारकम्" इति वाक्यस्य याथार्थ्यनिर्णये यथा पाणिनीयं परमं प्रामाण्यं भजते, तथैव पदार्थस्वरूपनिर्णये कणादशास्त्रमित्यत्र न सन्देहलवः। निश्रेयसमेवास्य प्रमुखो विषयः। दर्शनेऽस्मिन् पदार्थाः अवान्तरभेदेन बहवः सन्तोऽपि मुख्यतः षडेव। तत्रापि मुख्यास्तु त्रय एव, द्रव्यं, गुणाः, कर्म चेति। सामान्यविशेषसमवायाः इति त्रयस्तु गौणा एव। एतेष्वेव षट्पदार्थेषु सर्वेषां पदार्थान्तराणां अन्तर्भावः।

द्विविधा हि वैशेषिकस्य व्याख्यानसरणिः। एका सूत्रव्याख्यानरूपा, अपरा पदार्थव्याख्यानरूपा। तत्र प्रथमां श्रेणीमवलम्ब्य तु रावणप्रणीतं भाष्यं, भारद्वाजीयावृत्तिश्चेति द्वे प्राचीनतरे। शंकरमिश्रकृतोपस्कारोऽपि प्राचीनः। जयनारायणभट्टाचार्यविरचिता कणादसूत्रवृत्तिः, चन्द्रकान्तभट्टाचार्यप्रणीतं वैशेषिकभाष्यं चाधुनिकयुगे। कणादसंग्रहाख्योऽपि वैशेषिकदर्शने कश्चिन्निबन्धोऽनुज्ञायते। स खलु भाष्यव्याख्यानरूपः उत सूत्रव्याख्यनरूपः इति तदनुपलम्भान्न निर्धरयितुं पार्यते। द्वितीयश्रेण्यां पुनः प्रशस्तपादभाष्यस्य व्याख्यानानि व्योमशिखाचार्यविरचिता व्योमवती, श्रीधरचार्याविरचिता न्यायकन्दली, उदयनाचार्यकृता किरणावली, श्रीवत्साचार्यप्रणीता लीलावती, जगदीशभट्टाचार्यकृता भाष्यसूक्तिः, शंकरमिश्रविरचितं कणादरहस्यं, पद्मनाभमिश्रकृतः सेतुः, मल्लिनाथसूरिकृतः भाष्यनिकषः। उदयनाचार्य प्रणीतायाः किरणावल्याः वर्धमानोपाध्यायकृतः प्रकाशः, पद्मनाभमिश्रकृतः किरणावली, भास्कराख्याः व्याख्याः इत्यादीन्यनेकानि ग्रन्थरत्नानि वैशेषिसाहित्ये समलंकुर्वन्ति। तदेवं वैशेषिकदर्शनस्य महीयान् विस्तारः। वैशेषिकसिद्धान्तनिरूपकेषु सन्दर्भेषु प्रशस्तपादाख्यं भाष्यं सर्वमूर्धन्यत्वेन वरीवर्ति। एवमन्येचापिबहवो निबन्धाः वैशेषिकविशेषज्ञैः प्राणयिषत।

वस्तुतस्तु परमाणुवादस्याद्याप्रवर्तकाः महर्षिकणादमुनिभगवत्पादाः एव। स च परमाणुवादकल्पः वैशेषिकदर्शनस्य प्रमाणभूतभाष्यकारैः

मुनिवरप्रशस्तपादाचार्यैः स्वभाष्ये निरतिशयसौन्दर्येण प्रतिष्ठापितः। तद्विशेषावबोधकुतूहलिभिः तत्र तत्रानुसन्धेयमित्यलं पल्लवितेन।

**सांख्यदर्शनम्** :-- सांख्यायन्ते सम्यक् ज्ञायन्ते येन तत्सांख्यम्। संख्याशब्दोऽयं संख्याख्यातिः इत्युभयवचनः। तत्र तावत् एका मूलप्रकृतिः प्रकृतिविकृतयश्च सप्त, केवलाः प्रकृतयः षोडशः प्रकृतिविकृतिभिन्नो अनुभवात्मकः पुरुषश्चैक इति सम्भूय सर्वाणि पंचविंशति (२५) तत्त्वानि संख्यायन्ते गण्यन्ते येन तत्सांख्यमित्युच्यते। अथवा प्रकृतिपुरुषान्यता रूपोऽवबोधो संख्यायन्ते सम्यग्ज्ञायन्ते येनेतिवा तत्सांख्यम्। इति द्विविधोऽप्यर्थः सांख्यपदेन समर्प्यते। उक्तं च महाभारते--

**सांख्यं प्रकुर्वते चैव प्रकृतिं च प्रचक्षते ।**
**तत्त्वानि चतुर्विंशत् तेन सांख्यं प्रकीर्तितम् ॥**

सांख्यसारेऽपि

**शुद्धात्मतत्त्वविज्ञानं सांख्यमित्यभिधीयते ॥**

अस्य दर्शनस्य प्रवक्तारः तत्रभवन्तो भगवत्कपिलमुनिपादाः। जननी चास्य परमविदुषी देवहूतिरिति। जनकश्चकश्चनकर्दमाख्यो महामुनिरिति श्रूयते। देवहूतिरियं आदिराजा मनुप्रजापतिकन्या। यद्यपि आदिराजमनोरपत्ययैव समग्रोऽपि मनुष्यसमाजः मानवपदेन व्यपदिश्यते तथापि प्राक्शतरूपानाम्नी तेषां राज्ञी, उत्तानपद - प्रियव्रतनामानौ च द्वे सूनू, देवहूति नाम्नी चैका कन्या, इति सर्वे सम्भूय पञ्चप्राणिनः आसन्। तेषु कर्दमः सरस्वात्यधिष्ठिते कस्मिंन्चित् पुण्याश्रमपदे ब्रह्मचर्यव्रतमनुपालयन् व्यराजत। महाराजो मनुश्च भगवतो चतुर्मुखस्य आशयं ज्ञात्वा परामर्शेन तदाश्रममुपेत्य स्वकन्यायाः पाणिग्रहणसंस्कारं कर्दमेन सह निर्वर्तयामास। तदनु कर्दमाद्देवहूतिगर्भाच्च नवकन्यकाः संजाताः। दशमश्च पुनरेष तत्र भगवान् महामुनिः कपिलदेवः इति काचन जनश्रुतिः।

**सांख्यस्य वक्ता कपिलः परमर्षिःपुरातनः ।**
**हिरण्यगर्भो योगस्य वक्ता नान्यः पुरातनः ॥**

इत्यनेनापि एतदेवावगतं भवति यत् सांख्यमतीव प्राचीनमिति। सांख्ये

तावत् सत्वरजस्तमसां साम्यावस्था, प्रकृतिः वैषम्यावस्था च तेषां सृष्टिहेतुत्वेनांगीकृता स च सांख्यानां त्रिविधदुःखात्यन्तनिवृत्तिरूपाः प्रत्यक्षानुमान आगमरूपाणि त्रीण्येव प्रमाणानि साख्यस्याभिमतानि। तेषु केचन सांख्यस्य निरीश्वरवादित्वं अपरे सेश्वरवादित्वं मन्यन्ते। पुरुषबहुत्वं तदसंगतत्वं च सिद्धान्तत्वोनोन्नयन्ति। प्रकृतिपुरुषयोरन्यताख्यातिनिबन्धनो मोक्षः, अविद्यया बन्धः, जीवेश्वरयोर्भेदश्चेति प्राधान्येन तेषामभ्युपगमः। सत्वबहुलाभ्यां रजस्तमोभ्यां महत्तत्वमुत्पद्यते। रजोगुणबाहुल्यात् अहं तत्त्वं। एवं तमोगुणबाहुल्यात् पंचतन्मात्राः, अगोचरतन्मत्रोद्भूतानि। पंचमहाभूतानि, एकादशेन्द्रियाणि, इत्यादिक्रमेण सृष्टिरुत्पद्यते। वेदानामपौरुषेयत्वं, प्रकृतिप्रतिबिम्बितस्य पुरुषस्य तदाकारापत्या बन्धमुक्तिः अधिगतान्यख्यात्या च मोक्षबुद्धिः इत्याद्याः विषयाः कपिलानां प्रमुखसिद्धान्तत्वेनाभ्युपेताः।

**सिद्धान्ताः :--** सांख्यनये सृष्टिनिर्वहणार्थं भोगापवर्गं च पंच विंशति तत्त्वानि निर्दिष्टानि। तेषां वर्गीकरणन्तु चतुर्विधम् :-- प्रकृतिः, विकृतिः, प्रकृति - विकृतिः, न प्रकृतिर्विकृतिः, पुरुषश्चेति। उक्तं च --

**मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।**
**षोडशकस्तु विकारो न प्रकृतिः न विकृतिः पुरुषः ॥ (सा. का. ३.)**

तत्र प्रकृतिः प्रधानं सत्वरजस्तमसां साम्यावस्था सा हि अविकृतिः, न कस्यापि विचारः, प्रकृतिरेव स्वयं सती महदादीनां विकृतीनां जननी। विश्वप्रपंचस्य सा हि मूलरूपा न तन्मूलान्तरमनवस्थाप्रसंगात्। प्रकृतिविकृतयश्च सप्त - महत्तत्वं, अहंकारः, पंचतन्मात्राः, पंचमहाभूतानि, एकादशेन्द्रियाणि च षोडशको विकारः। प्रकृतिविकृतिभिन्नश्च पुरुषः। सोयं पंचविंशतिर्गणः। पुरुषशब्दोऽत्र आत्मानं परमात्मनश्चैतत् द्वयमप्यभिधत्ते। सांख्याचार्यैः दृष्ट - अनुमान - आप्तवचनान्येव त्रीणि प्रमाणत्वेनांगीकृतानि। एतेष्वेव प्रमाणान्तराणामन्तर्भावात्।

**मोक्षविषये :--** क्लेशकर्मविपाकादिसलिलावसिक्तानां बुद्धिभूमावेव कर्मबीजांकुरं प्रसुववे। तत्त्वज्ञाननिदाघनिपीतश्च क्लेशसलिलायामूषरायान्तु कुतः कर्मबीजांकुरप्रसवः इति। तावत् पुरुषः तथावस्थितः चक्रभ्रमिवत् धृत

शरीरो जीवन्मुक्तः सन् परिभ्रमति संसारचक्रे। सति शरीरच्छेदे स विमुक्तो भवति। इयमेव वास्तविकी मुक्तिर्नाम सांख्यानामिति। सांख्याचार्यों भगवान् कपिलो मुनिरतीव प्राचीनः इत्यत्र प्रमाणान्तराणि -- सांख्यचर्चाः महाभारते अपि वर्तते इति --

**सांख्यं प्रकुर्वते चैव प्रकृतिं च प्रयतते।**
**तत्त्वानि च चतुर्विंशत् तेन सांख्याः प्रकीर्तिताः॥**
**दोषाणां गुणानां च प्रमाणं प्रविभागतः।**
**कंचिदर्थमभिप्रेत्येव सा सांख्येत्युपधार्यताम्॥ इति।**

श्रीमद्भगवद्गीतायां पुनः सांख्ययोगयोः बहुशो बहुदा विवेचनं, साख्य दर्शनस्य आध्यात्मिकपक्षे प्राचीनतरत्वं विशदां ख्यातिं च विशदय्य निर्दिशति। एवमुपनिषत्सु सांख्यदर्शनस्योत्कीर्तनमुपलभ्यते --

**तत्कारणं सांख्ययोगादिगम्यम्। (श्वेता. ६-१३)**

श्वेताश्वरोपनिषदि च सुष्ट्युत्पत्तेः मूलकारणं "अजा" सांख्यमेवानुवदन्ति तथाहि-- "अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः" (श्वेता. ६-४) अन्ये।

**शुद्धात्मत्वविज्ञानं साख्यमित्यभिधीयते।**

अस्य साख्यविज्ञानस्य निरूपणमस्याविर्भावत्वं सर्वार्थजातं दिव्यचक्षुषा हस्तामलकत्ववत्प्रत्यक्षीकुर्वाणस्य भगवतः कपिलमुनेरेवेति सर्वैः स्वीकृतम्। अतः सुगृहीतनामधेयाः कपिलाचार्याः कस्य नमस्याः अत एव --

**कापिलाय नमस्तस्मै येनाविद्यौदधौ जगति निमग्ने।**
**कारुण्यात्सांख्यमयी तैरिह विहितावतरणाय॥**

किमुत एतस्य दर्शनस्य भारतीयभाषासु खण्डखण्डान्तरेष्वपि। सांख्यकारिकायाः "लेटिन्" भाषायां कुतोऽनूवाद विद्वत्प्रवरः "लसन्" द्वारा, जर्मन् भाषायांच सेन्द्रहिलेयर् द्वारा, पेण्डियर् द्वारा च आंग्लभाषायान्तु कोल्ब्रक् -- पिलसन् - डैवीज् - द्वारा अतिप्रशस्ततया सम्पन्नो अद्यापि विलसति।

**योगदर्शनम्** :-- इह खलु जगति सर्वेऽपि प्राणभृतः कामं, सुखं कामयमानाः तल्लाभाय सुखसाधनमपि प्रतिपिपत्सवः दुःखहानाय निरन्तरं यतमानाः दुःखकारणानि जिज्ञासवश्च अवलोक्यन्ते। दुःखानि प्राधान्येन आध्यात्मिक, आधिदैविक - आधिभौतिक भेदेन त्रिविधान्येव। तत्र कायिकानि ज्वरादीनि मानसानि च शोकसन्तापादीन्याध्यात्मिकानि, उल्कापातभूकम्प - झंझावातप्रभृतीन्याधिदैविकानि, सरिसृपव्याघ्रादिहिंस - भूतेभ्यः आगतानि आधिभौतिकानि व्यपदिश्यन्ते। तदेतत् त्रिविधदुःख - निरसनाय प्राणिनां सन्तताविरता च प्रवृत्तिः। परमेषां त्रिविधदुःखानां क्षणिकाः, निवृत्तिः न चरमपुमर्थसाधिका, दुःखनिवृत्तावपि पुनस्तदुत्पत्तिदर्शनात्। एवं मानसिकक्लेशनिवृत्तावपि सम्भवन्त्येव ते ते क्लेशाः पौनःपुण्येन। किंच यावन्ति सांसारिकानि सुखानि तान्यपि प्रायशः इन्द्रियजन्यत्वात् क्षणमात्रावस्थायीनि। तथा चैकविधसुखभोगानन्तरं भूय एव तानि हविषा कृष्णवर्त्मेव प्रगुणतया अभिवर्धमानानि अनुभूयन्ते। तदितरभोगाभिलाषो वा तदनु सुतरां समुज्जृम्भते। अतः अचिरस्थायित्वात् सुखान्यपि सांसारिकाणि। नोपदेयपक्षे निक्षिपन्ति प्रेक्षावन्तः। अतः दुःखानां या आत्यन्तिको निवृत्तिः तामेव परमपुरुषार्थत्वेन उन्नयन्ति तात्त्विका। तदेव कैवल्यमभिधीयते। तत् कैवल्यपथप्रदर्शनमेव परमं प्रयोजनं योगशास्त्रे इति पर्यवसितम्।

तदिदं योगशास्त्रं सांख्यप्रवचनापरनामधेयं सेश्वरसांख्यपदांकितं, यद्यपि प्राक् हिरण्यगर्भादिभिः समुपदिष्टं तथापि मुमुक्षूणां कल्याणाय सौकर्येणावबोधनाय चेदं समाधि - साधन - विभूति - कैवल्याभिधेन पादचतुष्टयेनोपनिबद्धं भगवत्पतंजलिमुनिपादैरेवाविष्कृतम्। पतंजलि मुनिप्रणीतत्वादेवेदं पातंजलदर्शननाम्नापि व्यपदिश्यते।

**दार्शनिकमहत्वम्** :-- भारतीयसंस्कृतेः प्रतीकविशेषस्य योगदर्शनस्य अध्यात्मसम्पदातिरेकादन्यत् सामान्यं महत्वं सर्वसम्मतं वरीवर्ति। योगाभ्यासेन साधकेषु अलौकिकशक्तीनां आविर्भावो भवति। मानसबलसम्पन्ना योगिनी लीलया लौकिके पुरुषैरचिन्त्यानि अपि कर्माणि

कर्तुं समर्थाः भवन्ति। योगी अनेकाभिः दैवीशालाभिः सम्पन्नो भवति।

सर्वप्रथमं सर्वसंहितासु योगस्य संकेतमात्रमुपलभ्यते। न तु स्पुटं प्रतीयते ततः उपनिषत्सु योगप्रक्रियायाः स्पुटवर्णनं दृश्यते। योगबिन्दूप्रभृत्युपनिषत्सु योगस्य अंगप्रत्यंगयोः तत्प्रतिक्रियायाश्च संपूर्णं विवरणं उपलभ्यते। यस्यानुशीलनेन पूर्वस्मिन्नपि युगे योगस्य सम्यग्विवैचनमस्ति। योगस्य सर्वोत्तमं पलं प्रदर्शितं वर्तते। यौगिकक्रियायांच वर्णनमस्ति। २ - ९, २ - १०, २ - १३, मन्त्रेषु कठोपनिषदि, १ - २ - १२ , २ - ६ - १२, मुण्डकोपनिषदि, ३ - २५, ३ - ६, तैत्तिरीयोपनिष्दि भृगुवल्लौ, एवं छान्दोग्य, बृहदारण्यक, कैवल्य, बृहज्ञाबाल, अमृतबिन्दु, नादबिन्दु, ध्यानबिन्दु, योगतत्व, योगशिखा, भोगकुण्डल्याद्युपनिषत्सु योगवर्णनं (दर्शनीयं) महत्त्वंच सम्यग्विवेचितमस्ति।

**विषयनिरूपणम्** :-- समाधिसाधनविभूतिकैवल्याभिधेषु चतुर्षु पादेषु १९५ सूत्रद्वारा निबद्धम्। तत्र प्रथमे पादे - "अथ योगानुशासनम्" इति शास्त्रारम्भं प्रतिजानानः "योगश्चित्तवृत्तिनिरोधः" इति योगलक्षणमभिधाय योगे - वृत्तिनिरोधकाले चित्तःस्वरूपावस्थानं, व्युत्थानकाले च वृत्तिसारूप्यं निरूप्य, वृत्तीनां पंच संख्याकत्वमित्यादिकं निरूपितम्। द्वितीये "तपः स्वाध्यायेश्वरप्रणिधाने" त्यादिना क्रियायोगं तत्प्रयोजनं च प्रदर्श्य क्लेशानामुद्देशविभागलक्षणानि संलक्ष्य तन्निरसनोपायं च प्रतिपाद्य तदनुहेयादिचतुष्टयं निरूप्य योगांगानि सविशेषं साधनसंज्ञकेन द्वितीयपदे निरूपितम्। तृतीये "देशबन्धश्चित्तस्य धारणा" इतिसूत्रेण ध्यानधारणा समाधित्रयान्तरंगमवगम्य सत्यपदव्यपदेश्यं तदवान्तरफलविशेषसूचकैर्विभूतिः - जातं सम्यक्संस्थाप्यन्ते। सत्वपुरुषयोः बुद्धिसाम्येन कैवल्यप्राप्तिमाचक्षाणः सूत्रकारः समपूरयत्। अन्तिमे पादे - जन्मौषधि - मन्त्र - तपः - समाधिजाः सिद्धः इत्यादिना सिद्धिपंचकं सप्रपंचं निरूप्य शास्त्रस्य मुख्याभिधेयं परमपुरुषार्थरूपं कैवल्यं वर्णितवान्।

**कोऽयं योगः** :-- सामभ्यकात् युज् धातोः निष्पन्नोऽयं योगशब्दः व्युत्पत्तिलभ्यं

समाधिमेवाभिधत्ते। चित्तवृत्तिनिरोध एव योगः समाधिरित्यर्थः। इदं च योगशास्त्रं चिकित्साशास्त्रवत् चतुर्विधम्। यथा चिकित्साशास्त्रे रोगः - रोगहेतुः - आरोग्यं - भैषज्यम् इति चत्वारो व्यूहाः प्रतिपाद्यन्ते। एवमस्मिन् योगशास्त्रेऽपि संसारः, संसारहेतुः, मोक्षः मोक्षहेतुश्चेति चत्वारो व्यूहाः भवन्ति। तत्र दुःखबहुलत्वात् संसारो हेयः द्रष्टृदृश्ययोः पुरुषप्रधानयोः संयोगो हेयहेतुः उक्तसंयोगस्यात्यन्तिकानिवृत्तिर्हानम्। हानोपायश्च सम्यक्दर्शनमिति चतुर्व्यूहसम्पन्नत्वादेव शास्त्रमिदं चतुर्व्यूहमुच्यते।

**योगांगानि** :-- योगांगानि तु अष्टौ - तानि यम, नियम, आसन, प्राणायाम, प्रत्याहार, धारणा, ध्यान, समाधिरूपाणि। (यो - सू. २-२९) तत्र यमो नाम अहिंसा, सत्य, अस्तेय, ब्रह्मचर्य, अपरिग्रहः यमा (योग. सू. २-३०) नियमाश्चापि पुनः पंचैव शौच, सन्तोष, तपः, स्वाध्याय ईश्वरप्रणिधानानि। "स्थिर सुखासनम्" (यो. सू. २-४६) पद्मासन, भद्रासन, स्वस्तिकासनादीनि, अनेकप्रभेदानि यथासुखमनुष्ठेयानि।

प्राणायामो नाम - व्यासपुटेन वायोरन्तः प्रवेशः - श्वासः तद्बहिर्निर्गमश्च निश्वासं प्रश्वासो वा। तयोः श्वासप्रश्वासयोः या स्वाभाविकी गतिः तस्याः निरोधः। प्राणायाम उच्यते -- मनुस्मृतौ --

> **नाभिस्थः प्राणपवनः स्पृष्ट्वा हृत्कमलान्तरम्।**
> **कण्ठात् बहिर्विनिर्याति पातुं विष्णुपदामृतम्॥**
> **पीत्वा सोऽम्बरपीयूषं पुनरायाति वर्गतः।**
> **प्रीणयन् देहमखिलं जीवयन् जठरानलम्॥**

प्राणायामद्वारा नियन्त्रितं निरुद्धं चित्तं शब्दादिविषयः न संयुज्यते। श्रोत्रादीनीन्द्रियाणि विषमेण संयुज्यते। भवन्ति च तानि तदा चित्त स्वरूपानुकारिणी एष एव प्रत्याहारः। ध्यानं नाम - वृत्यन्तरव्यवहितो ध्येयाकारो मनसः प्रवाहः। इदमेव ध्यानं। यदा ध्येयमात्राकारं ध्यान-ध्यातृ दृष्टिविधुरं भवति। तदा समाधिरित्यभिधीयते। या तु हृत्पुण्डरीकादि देशविशेषं चित्तस्य बन्धः एकाग्रता सैव धारणोच्यते।

अस्य शास्त्रस्य प्रवक्ता भगवान् पतंजलिः इति सर्वसम्मतम्। यद्यपि केचन अभिमन्यन्ते यदाद्यः प्रवक्ता तु योगदर्शनस्यापि भगवान् कपिल एव सांख्यप्रवक्ता। तद्यथा--

**कपिलं प्राहुराचार्यासांख्यनिश्चितिनिश्चिताः।**
**हिरण्यगर्भों भगवान् एष च्छन्दसि संस्तुतः। इति।**

अभ्युपगच्छन्ति ते यत्कपिलप्रोक्तां योगविद्यां कालक्रमेण दुरधिगतां विस्मृतप्रायां इति। करुणावरुणालयोर्भगवान् पतंजलिर्महाभगाः पुनरुज्ञीयामास, परन्त्वत्रान्ये विप्रतिपद्यन्ते। ते श्रुतिमूलकमेव योगशास्त्रमाकलयन्ति। दृश्यते च श्रुतौ बहुत्र योगविषायाः उपदेशाः।

पाणिनीयदर्शनम् :--

**अज्ञानान्धस्य लोकस्य ज्ञानांजनशलाकया।**
**चक्षुरुन्मीलितं येन तस्मै पाणिनये नमः॥**

इह खलु लोकव्यहारनिर्वहणार्थं भाषैव जुषुतेप्रधानभावं। भाषामन्तरेण लोकाः न प्रभवन्ति नैजमाशयं प्रकाशयितुं। अप्रकाशयन्तश्चायं कथमिव ते पारयेयुः किंचिदनुष्ठातुम्। किंचिदप्यनुष्ठातुं अशक्नुवतां तेषां कृते सकलं जगदेवान्धकारमयं भवेत्। अत एव उक्तं दण्डिना काव्यादर्शे--

**"इदमन्धं तमः कृत्स्नं जायेत भुवनत्रयम्।"**
**यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते। इति।**

एतादृशव्याकरणं "वृद्धिरादैच्" इत्यारभ्य अ अ इत्यन्तं शब्दशास्त्रं पाणिनिमुनिना उपनिबद्धम्। तत्र कात्यायनमुनिना वार्तिकमुपनिबद्धम्। अष्टाध्यायात्मकं व्यवस्तम्। पाणिनिकृत अष्टाध्याय्याः पतंजलिमहामुनिना महाभाष्यमारचितम्। तदेतत् मुनित्रयव्याकरणम् वेदांगत्वेन प्रख्यायते। व्याकरणान्तराणि तु वेदांगत्वेनोन्नीयते। कुत इति चेत् तेषां लौकिकप्रयोगावबोधमात्रपर्यवसानात्। सर्वेष्वपि व्याकरणेषु पाणिनीयतन्त्रस्यैव लौकिकवैदिकोभयप्रक्रियालंकृतत्वात् वेदांगत्वं, नेतरेषाम् व्याकरणानां।

**शब्दब्रह्म एव जगत्कारणत्वम् :--** वाक्यपदीयकारैः भर्तृहरिभिः ब्रह्मकाण्डे जगन्निदानं स्फोटाख्यो निरवयो नित्यः शब्दः ब्रह्मैवेति उक्तं तद्यथा --

**अनादिनिधनं ब्रह्म शब्दतत्वं तदक्षरं**

**विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः। इति।**

अत्र सर्वदर्शन संग्रहे :-- ननु भवता स्पष्टोत्मा नित्यः शब्दः इति निजगद्यते तत्र मृष्यामहे। तत्र प्रमाणाभावादिति केचित्, अत्रोच्यते - प्रत्यक्षमेवात्र प्रमाणम्। गौरित्येकं पदमिति नानावर्णातिरिक्तैकपदावगतेः सर्वजनीनत्वात्। सति बाधके पदानुभवः शक्यः मिथ्येति वक्तुम्। पदार्थप्रतीत्यन्यथानुपपत्यापि स्फोटो अभ्युपगन्तव्यः। न च वर्णेभ्यः एव तत्प्रत्ययः प्रादुर्भवतीति परीक्षाक्षमम्। विकल्पासहत्वात्।

किं वर्णाः समस्ताः, व्यस्ताः वा अर्थप्रत्ययं जनयन्ति। नाद्यः। वर्णानां क्षणिकानां समूहासम्भवात् नान्त्यः। व्यस्तवर्णेभ्यो अर्थप्रत्ययासम्भवात्। न च व्याससमासाभ्यामन्यः प्रकारः समस्तीति। तस्माद्वर्णानां वाचकत्वानुपपत्तै यद्बलादर्थप्रतिपत्तिः स स्फोटः। वर्णातिरिक्तः वर्णाभिव्यंग्योऽर्थप्रत्यायको नित्यः शब्दः स्फोटः इति तद्विदो वदन्ति। अत एव स्पुट्यते व्यज्यते वर्णैरिति स्फोटो वर्णाभिव्यंग्यो, स्फुटति स्फुटीभवत्यस्मादर्थ इति, स्फोटोऽर्थप्रत्यायक इति स्फोटशब्दार्थमुभयथा निराहुः। तथा चोक्तं भगवता पतंजलिनाः-- अथ गौरित्यत्र कः शब्दः येनोच्चारितेन सास्नालांगूलककुदखुरविषाणिनां सम्प्रत्ययो भवति सः शब्दः (महाभाष्यम्. १-६) विवृतं च कैय्यटेन, वैयाकरणाः वर्णव्यतिरिक्तस्य पदस्य वाचकत्वमिच्छन्ति। वर्णानां वाचकत्वे द्वितीयादिवर्णोच्चारणानर्थक्यप्रसंगादित्यादिना तदव्यतिरिक्तः स्फोटो नाभिव्यंग्यो वाचकः इति विस्तरेण तु वाक्यपदीये व्यवस्थापितः इति। सर्वशब्दार्थ एव सत्यं ब्रह्मत्वं--

व्याकरणस्य सर्वार्षत्वात् (अनुसारित्वात्) मतद्वयाभ्युपगमे न कश्चिद्विरोधः। तत्माद द्वयं सत्यं परं ब्रह्मतत्त्वं सर्वशब्दार्थ इति स्थितिः

तदुक्तम् :-- तस्माच्छक्तिविभागेन सत्यः सर्वः सदात्मकः एकोऽर्थः शब्दवाच्यत्वे बहुरूपः प्रकाशते। सत्यस्वरूपविषये भर्तृहरिणा :-- यत्र द्रष्टा च दृश्यं च दर्शनं च विकल्पितं, तस्यैवार्थस्य सत्यत्वमाहुः प्रय्यन्तवेदिना इति। द्रव्यमुद्देशेऽपि-- विकारागमे सत्यं सुवर्णं कुण्डले यथा।

**विकारापगमो यत्र तामाहुः प्रकृतिं पराम्॥ इति॥**

अभ्युपगमताद्वितीयत्वनिर्वाहाय वाच्यवाचकयोरविभागः प्रदर्शितः। व्यावहारिकस्याविद्याकल्पितत्वम् --

**वाच्या सा सर्वशब्दानां शब्दाच्च न पृथकक्कृतः।**
**अपृथक्त्वेऽपि सम्बन्धः तयोः जीवात्मनोरिव॥ इति॥**

तत्तदुपाधिपरिकल्पितभेदबहुलतया व्यवहारस्य विद्यामात्रकल्पितत्वेन प्रतिनियताकारोपाधीयमानरूपमिदं ब्रह्मतत्त्वं सर्वशब्दविषयः। अभेदे च पारमार्थिके संवृतिवशात् व्यवहारदशायां स्वप्नावस्थावदुच्चावचः प्रपन्नो विवर्तत इति कारिकार्थः तदाहुः वेदान्तनिपुणाः :--

**यथा स्वानप्रपंचोऽर्थं मयि माया विजृम्भितः।**
**एवं जाग्रत्प्रपंचोऽपि मयि माया विजृम्भितः॥ इति॥**

तदित्थं कूटस्थे परस्मिन्ब्रह्मणि सच्चिदानन्दरूपे प्रत्यगभिन्ने अवगते अनाद्यविद्यानिवृत्तेः तादृग्ब्रह्मात्मानवस्थानलक्षणं निःश्रेयसं सेत्स्यति। निःश्रेयससाधनम्-- शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति (महाभारते - शान्ति २-२७०) इत्यभियुक्तोक्तेः। तथा च शब्दानुशासनशास्त्रस्य निःश्रेयससाधनत्वं सिद्धम्। तदुक्तम् वाक्यपदीये :--

**तद्द्वारमपवर्गस्य वाङ्मयानां चिकित्सितम्।**
**पवित्रं सर्वविद्यानां माधिविधं प्रचक्षते॥ (१-१४) इति।**
**इदमाद्यं पदस्थानं सिद्धसोपानपर्वणां,**
**इयं सा मोक्षमाणानामजिह्मा राजपद्धतिः। (१-१६)**

तस्मात् व्याकरणशास्त्रं परमपुरुषार्थतयाध्येतव्यमिति सिद्धम्।

**अथ मीमांसादर्शनम्** :-- मीमांसाशास्त्रमिदं किल धर्मव्याख्यानपरं शास्त्रम्। धर्मश्चात्र ग वेदविध्यात्मकः क्रियाविशेषः। आह आचार्यः धर्मलिलक्षयिषुः चोदनालक्षणो धर्मः (मी. १-१-२) इति। चोदना हि नाम क्रियाप्रवर्तकवचनविशेषः। सच वेदविधिरूप एव। मीमांसकानां नये विधिः श्रुतविहितक्रियाकलापमेव। तदस्मिन् क्रियाकलापे एव विधिलक्षणानां वेदवचनानां प्रधानं तात्पर्यम्।

"**स्वर्गकामो** यजेत" इत्यत्र यजेतेत्यादिविधिविशेषं दूरीकृत्य यत्तादृशक**र्मानुष्ठानं** प्रति या प्रेरणा उत्पद्यते सा च मीमांसकानां भावनेति पदेन व्यपदिश्यते। सा च भावना द्विधा, शाब्दी, आर्थीचेति भेदात्। तत्र लिङ् लकारजन्या भावना शाब्दीभावना, आख्यातजन्या च आर्थी भावना। तथा खलु भावनया प्रेरितः पुरुषः कर्मकलापे प्रवर्तते, प्रवर्तमानश्च यथाश्रद्धं फलमश्नुते निःश्रेयसादिकं, यथा पदपदार्थज्ञाने व्याकरणस्य प्राधान्यं, प्रामाण्यावबोधे न्यायस्य, तद्वत् विधिगम्यमाने मीमांसायाः प्राधान्यम्। तदेतत्मीमांसादर्शनं किल भगवज्जैमिनिमुनिपादैः प्रणीतम्। द्वादशभिरध्यायैः प्रणिबद्धं शास्त्रम्। तत्र प्रत्यध्यायं च चत्वारः पादाः अनुस्यूताः। तृतीयषष्ठदशतमाध्यायवर्जम्। तेषु अष्टपादाः अध्यायान्तरापवादरूपेण गुम्भिताः। पुनश्च तत्र प्रतिपादे कतिपयानि अधिकरणानि समुल्लसन्ति, तानि सर्वाणि सम्मिलितानि प्रायशः सहस्रसम्मिलितानि भवन्ति। मीमांसासाधनत्वादिदं मीमांसाशास्त्रमभि-धीयते। मीमांसेयं पूर्वमीमांसेति, कर्ममीमांसेति पदेनाप्याख्यायते। वेदान्तापरनामधेययायाः उत्तरमीमांसायाः पूर्वभवत्वात् पूर्वमीमांसा इति, कर्मकाण्डविषयविशेषप्रतिपादनाच्च कर्ममीमांसेत्यपि परिभाव्यते।

मीमांसादर्शनमिदं क्रैस्ताब्द्याः पंचशतकपूर्वविरचितं इति विभाव्यते मीमांसासम्बन्धिसाहित्यं च बृहत्तरम् वर्तते। महामुनिबोधायनप्रणीतस्य भाष्यमतिविशदम्। परं तस्याधुनानुपलब्धिः कस्य मानसं न दुनोति। उपवर्षेण, भवदासेन चास्य मीमांसासूत्रवृत्तिरारचिता। ततः शबरस्वामिमहाभागेन मीमांसासूत्रभाष्यं प्रणीतम्।

**मीमांसाप्रयोजनम्** :-- मीमांसाशास्त्रस्य प्रधानं प्रयोजनं खलु धर्मविवेचना, धर्मलिलक्षयिषुभिः भगवज्जैमिनिपादैः सूत्रितम्। चोदनालक्षणार्थो धर्मः (मी. सू. १-१-२) इति । चोदना हि विधिवचनमभिधत्ते। विधिर्हि वेदः। वेदविधिरेव क्रियाप्रवर्तकत्वमेवाभिमतम्। तस्मात् वेदविधानमनुसन्धाय यो वै कर्मकलापः स एव धर्मपदवाच्यः वेदप्रतिपादित एव धर्मः इति भावः। वस्तुतः वेद एव सकलार्थजातं भूतं भवद्भविष्यं चावगमयितुं यथा क्षमः तथा नान्यत्किंचित्। प्राङ्निर्दिष्टानां वेदविहितकर्मणां चातुर्विध्यं तैः स्वीक्रियते, काम्य, प्रतिषिद्धः, नित्य, नैमित्तिकभेदात्। तंत्र काम्यं कामनाविशेषमुद्दिश्य क्रियमाणं कर्म। तद्यथा स्वर्गकामो यजेत इति। प्रतिषिद्धं हि निषिद्धम् यथा "न कलंजं भक्षयेत्"। नित्यं तु क्रमसन्ध्यावन्दनादिकम्। नैमित्तिकं हि नाम विशेषमुद्दिश्य क्रियमाणं हि नैमित्तिकम्। नच फलकाले कर्मणोऽभावात् तस्य फलोत्पादकत्वं कथमित्याशंक्य अपूर्वद्वारा तत्सिद्धत्वात्।

**मीमांसासिद्धान्ताः** :-- आपाततः ईश्वरानंगीकारः। देवता मन्त्रमयी। न विग्रहवती। क्रियापरः सर्वो वेदः, वटबीजवत् संसारोऽनादिः। अतीन्द्रियसुखाभावः। स्वर्गः सुखप्राप्तिरेव, कर्मणा मोक्षः। क्रियान्विते शब्दशक्तिः। मीमांसकाः अख्यातिवादिनः। सर्वं ज्ञानं प्रमैव। स्थूलशरीरात् भिन्नः आत्मा परमार्थनित्यः, धर्मस्य परमेश्वरबुद्ध्या निष्कामतया आचरणे अन्तःकरणशुद्ध्या क्रमेण ब्रह्मात्मैक्यज्ञानेन कैवल्यं मुक्तिरिति जैमिनिगुरुचरणानां, महर्षिव्यासमहाभागानां चाभिमतं। मीमांसानयेन अज्ञाततत्त्वार्थज्ञानं हि प्रमा, उच्यते "प्रमाकरणां च प्रमाणम्।" भाट्टास्तु वेदान्तवत् षडेव प्रमाणानि स्वीकुर्वन्ति। तच्च प्रत्यक्षानुमानोपमानशब्दार्थापत्यनुपलब्धयः इति। परं प्राभाकरो अनुपलब्धिं नाभिनन्दति। एतन्नये जगदिदं वास्तविकं न खल्वाभासमात्रम्। न्यायाभिमतान् षड्विधान् सन्निकर्षास्तु मीमांसकाः न सहन्ते। संयुक्तम् संयुक्ततादात्म्यं चेति सन्निकर्षद्वयमेव ते मन्यंते। भाट्टास्तु समवायं प्रति विप्रतिपद्यन्ते। तेषां नये जातिगुणकर्मणां द्रव्यैः सह तादात्म्यसम्बन्धः भवति। अतः

तेषां घटत्वस्य, घटरूपस्य घटकर्मणश्च प्रत्ययं प्रतिसंयुक्ततादात्म्यसम्बन्धः सन्निकर्षः। प्रभाकरस्तु पुनः संयोगः, संयुक्तसमवायः, समवाय इति सन्निकर्षत्रयमेव व्यवस्थापयन्ति।

मीमांसादर्शनसूत्रकारैः भगवज्जैमिनिमुनिपादैः आत्रेय, आश्मरथ्य, कार्ष्णाजिनि, बादरि, एतिशायन, कामुकायन, लाबुकायन, आलेख्यायनेत्यष्टात्मकाः ये मीमांसकाचार्याः संस्मृताः। परम् एतेषां कृतयः नोपलभ्यते। उपवर्ष्णाचार्याः, भवदासः, शबरस्वामी, भर्तृमिश्रः, कुमारिलभट्टः, माधवाचार्यः, खण्डदेवः आचार्यशालिनाथः मुरारिमिश्रः इत्याद्याः अनेके आचार्याः आसन्। एतेषाम् आचार्याणां मीमांसाधुरन्धराणां अविश्रान्तश्रमेण बुद्धिवैभवेन च मीमांसासहित्यं नितरां समृद्धिं संवृत्तम्।

अथ वेदान्तदर्शनम्-- अथेदानीं सर्वदर्शनमूर्धन्यं वेदान्तदर्शनमुद्दिश्य किंचित्प्रस्तूयते। वेदान्तशास्त्रमिदं शारीरकमीमांसेत्यपरया समाख्ययापि प्रथते। तच्चेदं शास्त्रं "अथातो ब्रह्म जिज्ञासा" इत्यादि "अनावृत्ति-श्शब्दादनावृत्तिश्शब्दादित्यन्तं" बादरायणप्रणीतसूत्राणि भवन्ति।

**वेदान्तदर्शने शांकरदर्शानम् श्रीशांकरदर्शने गुरुपरम्परा :--**

**नारायणं पद्मभुवं वशिष्टं शक्तिं च तत्पुत्रपराशरं च।**
**व्यासं शुकं गौडपदं महान्तं गोविन्दयोगीन्द्रमथास्यशिष्यम्॥**
**श्रीशंकराचार्यमथास्य पद्मपदं च हस्तामलकं च शिष्यम्।**
**तं तोटकं वार्तिककारमन्यान् अस्मद्गुरून् सन्ततमानतोऽस्मि॥**
**सदाशिवसमारम्भां शंकराचार्यमध्यमाम्।**
**अस्मदाचार्यपर्यन्तां वन्दे गुरुपरम्पराम्॥**
**रामब्रह्मसमारम्भां माणिक्यशास्त्रिमध्यमां।**
**रामलिङ्गेश्वरपर्यन्तां वन्दे गुरुपरम्पराम्॥**

**अद्वैतसिद्धान्तः :--** वेदान्तशास्त्रंनाम प्रयशः अद्वैतवादप्रतिपादकत्वेनेव गृह्यते। एतद्वादप्रतिपादकं तु श्रीमच्छंकराचार्यविरचितं शारीरिकं नाम भाष्यम्।

सर्वदर्शनोत्तमे शांकरे अद्वैतमते ब्रह्मैव सत्यं, अन्यत्सर्वं मिथ्या, जगदादिसर्वं शुक्तो रजतमिव भासते, ब्रह्म निर्गुणम्। अत एव शब्दैरप्रतिपाद्यम्। अत एव वाङ्मानसयोरगोरमिति श्रुतौ कथ्यते। सर्वज्ञत्वादयो गुणाः अपि ब्रह्मणि औपाधिकाः एव। जीवः ब्रह्मरूपोऽपि अज्ञानात् भिन्नः इव भाति। मनोबुध्याद्युपाधिभिः सर्वोऽपि जनः अहमिति प्रत्येति। अत एव सुषुप्तौ मनोबुध्यादिलयेन अहमाकार प्रतीत्यभावः एवंचाहमिति प्रतीतिः औपाधिकी। अयं प्रातीतिको जीवः एक एव, न तु नाना। अन्तःकरणभेदात् सुखदुःखानुभवभेदः। चैतन्यं सर्वव्यापकं, स एव आत्मा इत्यभिधीयते। अयमात्मा, ईश्वर, जीव, साक्षी इति भेदेन त्रिविधः। सर्वजगन्मूलकारणं अज्ञानम्। तस्मिन् चैतन्यान्तर्गते स आत्मा ईश्वरः इत्यभिधीयते। स एव ईश्वरः सत्वरजस्तमोभिः विष्णु – ब्रह्मा, शंकराख्याः लभते।

**सत्तात्रयनिरूपणम्** :-- आत्मा ज्ञानस्वरूपः, न तु ज्ञातृस्वरूपः। तस्य ज्ञातृत्वं अहंकाराद्युपाधिभिः भवति। प्रपंचस्यापि ज्ञेयत्वमज्ञानादेव भवति। अद्वैतनये सत्तात्रयमंगीक्रियते तत्तु पारमार्थिक, व्यावहारिक, प्रातिभासिकरूपं चेति भवति। तत्र प्रातिभासिकस्य शुक्तिरजतादेः व्यावहारिकसत्यरजतेन बाधः। व्यावहारिकसत्यत्वं तु घटपटादिरूपं तच्च पारमार्थिकसत्येन ब्रह्मदर्शनेन बाध्यते। ब्राह्मणस्तु न कस्यामप्यवस्थायां बाधः भवति। अतः एव तस्य पारमार्थिकसत्यत्वं। घटपटादीनां व्यवहारदशायां सत्यत्वं भवति। वस्तुतः व्यवहारदशायां वर्तमानाः घटपटादयः स्वाप्निकपदार्थवन्मिथ्याभूताः भवन्ति। यथा स्वप्नगताः पदार्थाः जाग्रद्दशायां न सन्ति अतो मिथ्या, तथा पारमार्थिकदशायां अभावात् एते व्यवहारदशायां विद्यमानाः घटपटादयोऽपि मिथ्याभूताः। व्यवहारदशायां विद्यमानघटपटादीनां पारमार्थिकात्मज्ञानेन बाधसम्भवात्।

**सृष्टिविषयकश्रुतीनां परीक्षणम्** :-- कासुचित् श्रुतिषु सृष्टिक्रमः आकाशः आदिक्रमेण, कासुचित् श्रुतिषु तेजआदिक्रमेण कुत्रचित् सर्वं ब्रह्मैव नान्यत् इति उक्तम्। सर्वासामपि श्रुतीनां अबाधितप्रामाण्यात् तत्समन्वयोऽवश्यं

कर्तव्यः। तथा च इदमेव सिद्ध्यति यत् ब्रह्मैव सत्यमिति पारमार्थिकदृष्ट्या उक्तम्। श्रुतिषु वर्तमान सृष्टिस्तु आकाशादिक्रमसृष्टिस्तु व्यावहारिकां, अनेनापि प्रमाणेन जगतः व्यावहारिकत्वं न पारमार्थिकसत्यत्वं। यदि जगतः पारमार्थिकसत्यत्वं स्यात् तर्हि "नेति नेति" "नेह नानास्ति किचन "इत्यादिप्रतिपादिनीं श्रुतिः निरर्थिका स्यात्। एवं च सत्यानृते मिथुनीकृत्य नैसर्गिकोऽयं लोकव्यवहारः इति मन्तव्यम्। अत एव अज्ञानिदृष्ट्या तत्सत्यत्वं भासते। ज्ञानिदृष्ट्या च" तस्य पिता अपिता भवति इत्युक्तरीत्या तस्य जगतः मिथ्यात्वम्। न केवलं सर्वस्य जगतः मिथ्यात्वं श्रुत्या बोध्यते अपि तु स्वस्यापि मिथ्यात्वं श्रुतिः निरभिमानितया ब्रूते।

**मोक्षः** :-- एतस्य सर्वस्य जगतः मूलस्वरूपमनाद्यविद्यया एव, सा च त्रिगुणात्मिका, प्रलयकालसमाप्तिवेलायां अविद्या जीवकृतकर्मभिश्च "तदैक्षत बहुस्यां प्रजायेय" इति श्रुति रीत्या परमात्मा संकल्पयति, ततः आकाशादिक्रमेण सृष्ट्युद्गमः। ततश्च पंचीकृतमहाभूतेभ्यः शरीरादिना प्रादुर्भवन्ति। एवं उत्पन्नशरीरे प्रविष्टं चैतन्यं जीव इत्यभिधीयते। स च न अणुः किन्तु व्यापकः सर्वस्मिन् शरीरे सुखदुःखानुभवात्। सच जीवः मुक्तिपर्यन्तं स्थायी भवति। जन्मान्तरीयकर्मजसुखदुःखसम्बन्धात्। अज्ञानं, लिंगशरीरं चेति उपाधिः। तस्याज्ञानस्य सदा प्रत्यासन्नः। अयमुपाधिः "दशमस्तवमसि" इति ज्ञानेन विस्मृतात्मस्वरूपस्य अज्ञानमिव आत्मज्ञानेन जीवात्मपरमात्मैक्यज्ञानापरपर्यायेन नश्यति। सत्यज्ञानेनविना मिथ्याभूतदर्शनस्यानिवृत्तेः। एवं अविद्यानाशे जीवो मुक्तो भवति। तस्य जीवस्य ज्ञानाग्निः प्रारब्धेतराणि संचितक्रियमाणानि कर्माणि नाशयति, दशायामस्यां प्रारब्धकर्माणि भुजानाः स जीवः विगतशरीराद्यभिमानः जीवन्मुक्तः इत्यभिधीयते। प्रारब्धकर्मावसाने देहपाते च स जीवः विदेहमुक्तो भवति। जीवस्य इयमेव परमा मुक्तिः, अस्यां जीवः परमात्मासायुज्यं नाम स्वरूपमभिगच्छति। न च मतान्तरवत् अल्पेनापि सेवकादिरूपेण भिन्नः तिष्ठति। यद्यपि जीवः सदा आत्मस्वरूप एव, तथापि भावरूपेणाज्ञानेन आत्मानं

सुखदुःखभाजं मनुते। तदेव बद्ध इत्यभिधीयते। तादृशाज्ञाननिवृत्ते स एव मुक्तः इत्युच्यते।

**साधनचतुष्टयसम्पन्नत्वम्** :-- वेदविहितकर्मभिः चित्तशुद्धिः तेन ब्रह्म-निष्ठं गुरुं प्रति शरणगमनं तेन "तत्त्वमसि" इति ज्ञानोपदेशः, तच्छ्रवण-मनननिदिध्यासनैः सन्यासा श्रमाधिकारीसन् कर्माणि परित्यजन् स जीवः सुस्थिरज्ञानी मोक्षं लभते। मोक्षप्राप्तेः ज्ञानमेव साक्षात्साधनम्। कर्मोंपासने तु चित्तशुद्धिर्चित्तैकाग्र्यप्रापकत्वात्। तस्य जीवस्य नित्यानित्यवस्तुविवेकत्वं, इहामुर्तर्थफलभोगविरागत्वं, शमदमादिसाधन-सम्पत्तित्वं, मुमुक्षुत्वं चेति साधनचतुष्टयसम्पत्यनन्तरं ब्रह्मजिज्ञासाभवति। अद्वैतवेदान्तिनः अनिर्वचनीयख्यातिवादिनः एषां। नये प्रमाणानि तु प्रत्यक्षानु-मानोपमानशब्दार्थापत्यनुपलब्ध्याख्यप्रमाणषट्कम्। एषां नये अलौकिकेऽर्थे आत्मनि शब्दमेव मुख्यप्रामाण्यम्। अन्यानि अनुमानदीनि तदवष्टम्भेन प्रमाणानि भवन्ति।

**सिद्धान्तविकासः** :-- एतादृशस्य श्रूतिसिद्धस्य प्राचीनतमस्य अज्ञान-विज्ञानोपकारकस्य सकलदर्शनशिरोलंकारत्नभूतस्य श्रीमच्छंकरभगव-त्पूज्यपादैः प्रकाशितस्य अद्वैतवेदान्तदर्शनस्य विशेषाः प्रबल प्रतिवादिनः भेदवादिनः न्यायवैशेषिकपूर्वमीमांसकादयः आसन्। क्रिस्तोः पूर्वं सहस्रतमेशतके भेदाभेदवादिनो भास्करयादवप्रकाशकौ, द्वादशतमेशतके विशिष्टाद्वैतवादी रामानुजः, त्रयोदशकेशताब्दे द्वैतवादी माध्वः, द्वैताद्वैतवादी निम्बार्कः, शैवविशिष्टाद्वैतवादी श्रीकण्ठश्च, चतुर्दशतमे शताब्दे भेदभदात्मकविशिष्टाद्वैतवादी, श्रीपतिपण्डितः, पंचदशतमे शतके शुद्धाद्वैतवादी वल्लभः देवः षोडशत तमे शतके भेदवादी शुकः, आत्मब्रह्मैक्यवादी वित्रान-भिक्षुश्च, अष्टादशतमे शतके अचिन्त्यभेदाभेदवादी बलदेवश्च, इतोऽप्यनेकाः अनद्वैतवादिनः आचार्याः प्रतिवादिषु अन्यतमाः अभूवन्।

एतादृशैः तार्ककाभिमानिभिः वैशेषिकादिभिः युक्त्याभासैः कलुषितस्य आनन्दतीर्थप्रभृतिभिः निन्दितस्य अद्वैतसिद्धान्तस्य रक्षणार्थं तर्केण, युक्त्या च तेषां समाधानार्थं प्रवृत्तेषु ग्रन्थेषु, चित्सुखी, न्यायमकरन्दः, न्यायदीपावली, अद्वैतसिद्धिः, पंचदशीत्यादयः खण्डनखण्डखाद्यमित्यादयश्च विशिष्टरूपेण उल्लेखार्हाः।

इतरमतखण्डनपरग्रन्थेषु शैली द्वयं दृश्यते। तत्र प्राचीना शैली तु युक्तिसहिता अर्थगम्बीर्थ वत् सुमधुरश्रुतिशब्दविन्यासयुक्ताः सम्भाषणसमाः दृश्यते, नव्यनैयायिकैः गंगेशोपाध्यायप्रभृतिभिः नवीनतया न्यायशास्त्रपरिवर्तने कृते भेदवादखण्डनार्थं प्रवृत्ताः मधुसूदनसरस्वतीं आरभ्य ब्रह्मानन्दसरस्वत्यन्ताः आचार्याः "यक्षानुरूपो बलिः" इति न्यायेन परिष्कारप्रधानान्येव वाक्यानि आरचय्य इतरमतखण्डने प्रवृत्ताः। तत्र भेदवादिनां प्रबलतरमयमाक्षेपः जगतः मिथ्यात्वे मायिकत्वे वा तस्यासत्यत्वप्रसंगः। यथा च शुक्तिरजतं असद्भवति तथा जगदपि असदैव भवेत्। तथा सति सर्वप्रमाणव्यावहारस्य असम्भवः स्यात्। किंचैवं सति वैदिकतत्त्वज्ञानस्यापि मिथ्यात्वापत्तिः। सर्वदृश्यान्तर्गतस्य वेदस्य मिथ्यात्वेन तदुक्तस्य तत्त्वज्ञानस्य अर्थादेव मिथ्यात्वं स्यात्। सोऽयं मिथ्यात्वाक्षेपः विचार्य, विकल्प्य दूरीकृताः आचार्यैः। तत्र मिथ्यात्वविषये विशिष्य प्रधानतया आचार्यपंचकेन पंचधा मिथ्यापत्वं विकल्प्य प्रचस्य मिथ्यात्वं सम्पादितवन्तः। ते च--

आद्यं स्यात्पंचपाद्युक्तं ततो विवरणोदिते।
चित्सुखीयं चतुर्थं तु अन्त्यमानन्दबोधकम् ॥ इति ॥

**बिम्बप्रतिबिम्बाभासावच्छिन्नवादाः :--**

वाचस्पतेरवच्छिन्नः आभासो वार्तिकस्य च।
संक्षेपशारीरिककृतः प्रतिबिम्बं तथेष्यते ॥ इति ॥

जीवस्वरूपविषये। अवच्छेदवादः, आभासवादः, बिम्बप्रतिबिम्बवादश्चेति पक्षाः सन्ति। अद्वैतसिद्धान्तस्यास्य उपनिषद्गीताब्रह्मसूत्राणि-

श्रुतिस्मृतियुक्तिनाम्ना व्यवहृतानि प्रस्थानानि। अस्मिन् भामती-विवराख्यौ सिद्धान्तप्रतिपादनभेदमूलकौ प्रसिद्धौ विद्येते।

तत्र भामतीकारः कर्मणां विविदिषार्थत्वं वदन्ति। विवरणकारस्तु कर्मणां विद्यार्थत्वं वदन्ति। भामतीकारः, ब्रह्मसाक्षात्कारः मनः करणकः न तु शब्दकरणकः इति वदन्ति। विवरणकारस्तु वेदान्तवाक्यरूपशब्दकरणकः इति वदन्ति। भामतीकाराः "श्रोतव्यो, मन्तव्यो, निदिध्यासितव्यः" इत्यादिश्रुतिवाक्ये विधिः नास्तीति वदन्ति। "श्रोतव्यादि" श्रुतिवाक्ये विधिः अस्तीति विवरणकाराः वदन्ति। भामतीकारः श्रोतव्यादिश्रुतिवाक्ये "विदिध्यासनं" अङ्गी भवति। श्रवणमननौ तु अङ्गभूतौ भवति इति। श्रोतव्यादिश्रुतिवाक्ये श्रवणं अङ्गी भवति, मनननिदिध्यासनौ अङ्गभूतौ च भवंति इति पञ्चपादिकाविवरणाचार्याः। जीवेश्वरविषये भामतीकाराः अवच्छेदवादिनः, विवरणकाराः बिम्बप्रतिबिम्बवादिनः भवन्ति। भामतीकाराः आज्ञानाश्रयस्य अज्ञानविषयस्य च भेदं स्वीकरोति। विवरणकारास्तु अज्ञानाश्रयस्य, अज्ञानविषयस्य च भेदः नास्तीति वदन्ति। भामतीकाराः प्रतिजीवं मूलाविद्या नाना इति वदन्ति। विवरणकाराः प्रतिजीवं मूलाविद्या एकैवेति वदति। अखण्डाकारवृत्तेरुपहितं ब्रह्म विषयः इति भामतीकारः वदति। विवरणकाराः अखण्डाकारवृत्तेः शुद्धं ब्रह्म विषयः इति वदन्ति। भामतीकारस्य मते साधनचतुष्टये सत्यासत्यवस्तुविवेकः प्रथमसाधनं, विवरणकारस्य मते नित्यानित्यवस्तुविवेकः प्रथमसाधनम्। "स्वाध्यायोऽध्येतव्यः" इत्ययनविधौ विधिः अर्थावबोधफलकः इति विवरणकारः। भामतीकारः त्रिवृत्करणं स्वीकरोति, विवरणकारस्तु पंचीकरणं स्वीकरोति। भमतीकारः ब्रह्मणः सर्वज्ञत्वं स्वरूपचैतन्येनेति वदति, विवरणकारः ब्रह्मणः सर्वज्ञत्वं मायावृत्तिभिरिति वदति। भमतीकारस्य मते मनसः इन्द्रियत्वमस्ति, विवरणकारस्य मते मनसः इन्द्रियत्त्वं नास्ति। भामतीकारस्य मते अविद्या जीवाश्रिता भवति, विवरणकारस्य मते अविद्या ईश्वराश्रिता भवति, भामतीकारस्य मते अविद्यासंसक्तं अविद्यारूपिणा उपाधिना सहितश्च

ब्रह्मणः विशुद्धं चैतन्यं एव जीवः इत्युच्यते । प्रतिजीवं एकमन्तः कारणम् उपाधिः भवति । अतश्च जीवः अल्पज्ञः परिच्छिन्न इति व्यवहारः। विवरण मते अन्तःकरणतत्संस्कारावच्छिन्नाज्ञानप्रतिबिम्बितं चैतन्यं जीव इति, अन्तःकरणे ब्रह्मप्रतिबिम्बमेव जीव इति भवति ।

**अविद्यास्वरूपम्** :-- निर्विशेषात् निर्लक्षणाच्च स्वयंप्रकाशात् ब्रह्मणः सविशेषस्य सलक्षणस्य च जगतः कथमुत्पत्तिः । एकस्मात् अद्वैतात् ब्रह्मणः नानात्मकस्य जगतः कथं सृष्टिः इत्येतेषां प्रश्ननां यथावत्समाधानं मायास्वरूपवर्णनद्वारा आचार्यैः उपवर्णितम् । श्री शंकरभगवत्पादैः माया, अविद्या, अज्ञान, अव्यक्तादिशब्दानां समानार्थकत्वं सूत्रभाष्ये उपवर्णितम् । श्रीमच्छंकरभगवत्पादादर्वाचीनेषु आचार्येषु माया अविद्ययोः तारतम्यविषये, जीवेश्वरस्वरूपविषये, अविद्यायाः आश्रयत्वे, मायायाः आश्रयत्वे च सिद्धान्तभेदाः उद्भाविताः एवं माया अविद्याशब्दयोः सूक्ष्ममर्थभेदं वर्णयन्ति। जीवत्वईश्वरत्वप्राप्तकोपाधिस्तु भावरूपं त्रिगुणात्मकं सदसद्भ्यां अनिर्वचनीयम् अनादिः अज्ञानम् । तच्चाज्ञानं माया अविद्या भेदेन द्विविधं। शुद्धसत्त्वप्रधानं मायापदवाच्यं, मलिनसत्त्वप्रधानं अविद्या पदवाच्यम् । मायोपबृंहितचैतन्यं ईश्वरः । अविद्योपबृंहितचैतन्यं जीवः ।

शक्तिद्वयं हि मायायाः विक्षेपावृत्तिरूपकम् ।
विक्षेपशक्तिर्लिंगादिब्रह्माण्डान्तं जगत् सृजेत् ॥
अन्तर्दृग्दृश्ययोर्भेदं बहिश्च ब्रह्मसर्गयोः ।
आवृणोत्यपराशक्तिः सा संसारस्य कारणात् ॥ (दृक्दृश्यविवेके)

माया शक्तिः निखिलकलनां साम्प्रतं वा विरुद्धं
स्वाधिष्ठाने चिति फलयुता दर्शयन्त्या विमोक्षम् ।
नैल्यं व्योम्नि स्रजि विषधरो वार्यथा रश्मिपूगे,
तद्वन् मिथ्यात्मनि जगदिदं कल्पितं स्वप्नवच्च ॥

(प्रत्यक्चिन्तामणौ)

इयं माया अविद्यापदवाच्या, अज्ञानाख्या कथं जाता। केन कारणेनाऽस्याः

ब्रह्मणा सम्बन्धो जातः इति न चोदनीयम् । अविद्यायाः तत्सम्बन्धस्य च अनादित्वांगीकारात् यथा--

**जीव ईशो विशुद्धा चित् तथा जीवेशयोर्भिदा ।**
**अविद्या तच्चितो योगः षडस्माकमनादयः ॥ इति ॥**

मायासम्बन्धादेव प्रपंचोत्पत्तिः । मायेयं साश्रया सविषया च भवति। मायायां विषयः ईश्वरः। मायायाः आश्रयो जीवः। एतदेव साश्रयत्वं सविषयत्वं च ज्ञानरूपे ब्रह्मणि तदीयत्वं प्रदर्शयति। साश्रयत्वेन सविषयत्वेन च भासमानं यदज्ञानं तदेव महत्तत्त्वम्। महत्तत्त्वादेव प्रपंचस्योत्पत्तिः ।

**अन्यथाभानहेतुत्वात् इयं मायेति कीर्तिता ।**
**आत्मतत्त्वतिरस्कारात् तम इत्युच्यते बुधैः ॥**
**विद्यानाश्यत्वतोऽविद्या मोहस्तत्कारणत्वतः ।**
**सद्वैलक्षण्यदृष्टायं असदित्युच्यते बुधैः ॥**
**कार्यवत् व्यक्तताभावात् अव्यक्तमिति गीयते ।**
**एषा माहेश्वरी शक्तिः न स्वतन्त्रा परात्मवत् ॥**

**(अ. वे. सा. इ. कोशः)**

**ब्रह्मस्वरूपम्** :-- अद्वैतवेदान्तिनां मते ब्रह्मणः निर्विकल्पकत्वं, निरूपाधिकत्वं निर्विकारसत्तावत्वं उक्तम् । तच्च ब्रह्म निर्गुणसगुणरूपेण भेदद्वयं भवति। तादृशब्रह्मस्वरूपं लिलक्षयिषुः स्वयमाचार्यः, स्वरूपलक्षणं, तटस्थलक्षणं चेति लक्षणद्वयं उक्तं । "स्वरूपं सत् व्यावर्तकम्" इति स्वरूपलक्षणं, "कादाचित्कत्वे सति व्यावर्तकं" इति तटस्थलक्षणम्। तद्यथा "सत्यं ज्ञानमनन्तं ब्रह्म" (तै. २-१-१) "विज्ञानमानन्दं ब्रह्म" (बृ. ३-९-२८) इति ब्रह्मणः स्वरूपलक्षणम् । "जगदुत्पत्तिस्थितिलयकारणं ब्रह्म" इति तटस्थलक्षणम्। अविद्योपाध्यवच्छिन्नस्य ब्रह्मणः एव जगदुत्पत्यादिकारणत्वं सम्भवति न खलु विशुद्धस्येत्येतत्तटस्थलक्षणम्।

अद्वैतिनां मते -- ब्रह्मणः सजातीयविजातीयस्वगतभेदशून्यत्वं परंतु

रामानुजीयनये स्वीकृते सत्यपि सजातीयविजातीयवैधुर्यं ब्रह्मणः स्वगतभेद शून्यत्वं नास्त्येव । चिदचिद्वशिष्टं ब्रह्मणि चिदंशस्य अचिदंशान्नितरां भिन्नत्वात्। अत एवैतद्वयभिन्नविरोधितत्त्वसद्भावादेव रामानुजीयदर्शनं ब्रह्मणः स्वगतभेदसम्पन्नमंगीकृतमवगम्यते।

**ईश्वरस्वरूपम्** :-- श्री शांकरनये निर्विशेषंब्रह्म मायोपाध्यवच्छिन्नं सत् यदा सविशेषत्वब्रह्मत्वमुपैति तदा ईश्वरः इत्युच्यते । अविद्योपाध्यवच्छिन्नं हि ब्रह्मैव ईश्वरपदभाग्भवतीत्यर्थः । एष एवेश्वरः जगतः सुष्टिस्थितिलयकारणत्वेनावधार्यते । स च सृष्टिब्यापारः ईश्वरस्य लीला विलासमात्रः तत् न किंचिदपि विशेषप्रयोजनकः । स एवेश्वरः जगतः निमित्तेकारणम्। स एवैश्वरः उपादानकारणम्। न चैकस्मिन् ब्रह्मणि निमितोपादानोभयकारणत्वं कथं घटते इत्याशंकनीयम्। चैतन्यपक्षावलम्बनेन हि ब्रह्मणि जगतः निमित्तकारणत्वं, मायोपाधिकपक्षावलम्बनेन तस्मिन् उपादानकारणत्वं चेति भवति।

अद्वैतिनां नये अन्तःकरणावच्छिन्नं चैतन्यं हि जीवः । तत्वतो ब्रह्मैव उपाधिसम्पर्काज्जुषते जीवभावम्। यदा खलु ब्रह्मबिम्बाकारेण भासते तदा ईश्वर इत्युच्यते यदा सः प्रतिबिम्बेनाच्छादितः तदा जीवः इति संज्ञां लभते। जगदिदं मायाजन्यं, ब्रह्मणश्च विवर्तस्वरूपम्। विवर्तो हि नाम कार्यानिर्वचनीयवादस्य पारिभाषिकी संज्ञा। उपादानस्य समानधर्मी अन्यथा भवः परिणामः, उपादानाद्विलक्षणोऽन्यथाभावश्च विवर्तः। तात्त्विकं परिवर्तनं विकारः परिणामः, अतात्त्विकं परिवर्तनं विकारः विवर्तः भवति।

**अद्वैतदर्शने प्रस्थानत्रयम् -- तत्र प्रथमप्रस्थानस्य प्रस्तावना :--**

दर्शनान्तरापैक्षया अद्वैतदर्शनस्य महत्त्वपूर्णं स्थानं यत् श्रीमच्छंकरभगवत्पादैः विरचितस्य प्रस्थानत्रयभाष्यस्य अनेकदेवतास्तोत्र प्रकरणादिग्रन्थसमूहस्य व्याख्योपव्याख्य, वार्तिक, टिप्पणी, टीका, वृत्तिवार्तिकादिभिः अनेकैः आचार्यैः संवर्धितं सुपरिपोषितं चेदं

प्रस्थानत्रयरूपादि भाष्यम् । तत्र उपनिषद् गीताब्रह्मसूत्राणि, श्रुतिस्मृतियुक्तिनाम्ना व्यवहृतानि प्रस्थानानि ।

तत्र उपनिषन्नाम :-- उपनिपूर्वकस्य विशरणगत्यवसादनार्थकस्य षदल धातोः क्विबन्तस्य रूपमिदमुपनिषद् । उप - उपगम्य गुरुम् आचार्य - मुपलभ्य वा ब्रह्मोपदेशं तन्निष्ठतया परिशीलयतां दृष्टानुश्राविकविषयवितृ -- ष्णानां मुमुक्षूणामविद्यादेः संसारबीजस्य, नि = नितरां निश्शेषेण वा सद् अवसादयित्रीं विशरणकर्त्रीं, तद्वारा ब्रह्मोपगमयित्री या सा उपनिषद् इति तद्व्युत्पत्तेर्निबन्धना ।

प्रायः सर्वेषां सम्प्रदायाचार्याणां उपनिषत्सु टीका दृश्यते । यस्य सम्प्रदायस्य उपनिषत्सु टीकादिकं नास्ति स सम्प्रदायो अबद्धमूलः इत्यवधार्यते । न जनाः भूयसा तत्र बद्धश्रद्धाकाः भवन्ति। उपनिषत्साहित्यमेव, सर्वेषां सम्प्रदायानां मूलभित्तिरिति उक्तिः, न अतिशयोक्तिर्भवति। उपनिषत्साहित्यं अतीव ज्ञानप्रकाशकं, शान्तिप्रदं, मानवसंस्कृतेः आदिजनविकासे न इति बहुभिः पाश्चात्यविद्वद्भिः उद्घोषितम्। तदेवं उपनिषन्नाम अध्यात्मविद्या, परमतीवोज्ज्वला मनसः आत्मनश्च निरतिशयशान्तिप्रदं ब्रह्मविद्यातन्त्रम्। सुधीभिः मुमुक्षुभिः नितरामध्येतव्यम्।

**सर्वोपनिषदां मध्ये सारमष्टोत्तरं शतम् ।**
**सकृच्छ्रवणमात्रेण सर्वाघौघनिकृन्तनम् ॥ इति ॥**

तास्वष्टोत्तरशतोपनिषत्सु दशोपनिषदः प्रधान भूताः तासां दशोपनिषदः ऋग्वेदीयाः एकोनविंशत्युपनिषदः, शुक्लयजुर्वेदीयाः, द्वात्रिंशदुपनिषदः कृष्णयजुर्वेदीयाः, षोडशोपनिषदः सामवेदीयाः एकत्रिंशदुपनिषदः अथर्ववेदीयाः, इति ज्ञायते। यथा मुक्तिकोपनिषदि -- रामांजनेयसम्वादे

**ईशकेनकठप्रश्नमुण्डमाण्डूक्यतित्तिरिः ।**
**ऐतरेयं च च्छान्दोग्यं बृहदारण्यकं तथा ॥**

ब्रह्मकैवल्यजाबालश्वेताश्वो हंस आरुणिः ।
गर्भो नारायणो हंसो बिन्दुनादशिरश्शिखा ॥
मैत्रायणी कौषीतकी बृह्ज्जाबालतापिनी ।
कालाग्निरुद्रमैत्रेयी सुबालक्षुरि मन्त्रिका ॥
सर्वसारं निरालम्बं रहस्यं वज्रसूचिकम् ।
तेजो नादध्यानविद्या योगतत्वात्मबोधकम् ॥
परिव्राट् त्रिशिखी सीता चूडा निर्वाणमण्डलम् ।
दक्षिणा शरभं स्कन्दां महानारायणाद्वयम् ॥
रहस्यं रामतपनं वासुदेवं च मुद्गलम् ।
शाण्डिल्यं पैंगलं भिक्षु महच्छारीरकं शिखा ॥
तुरीयातीतसन्यास परिव्राजाक्षमालिका ।
अव्यक्तैकाक्षरं पूर्णा सूर्याक्ष्याध्यात्मकुण्डिका ॥
सावित्र्यात्मा पाशुपतं परं ब्रह्मावऽधूतकम् ।
त्रिपुरा तपनं देवी त्रिपुरा कण्ठभावना ॥
हृदयं कुण्डली भस्म रुद्राक्ष गणदर्शनम् ।
तारसारं महावाक्यं पंचब्रह्माग्निहोत्रकम् ॥
गोपालतापनं कृष्णं याज्ञवल्क्यं वराहकम् ।
शाठ्यायनी हयग्रीवं दत्तात्रेयं च गारुडम् ॥
कलिजाबालि सौभाग्य रहस्य ऋच मुक्तिका ।
एवमष्टोत्तरं शतं भावनात्रयनाशनम् ॥
ज्ञानवैराग्यदं पुंसां वासनात्रयनाशनम् ।
(निर्देह) विदेहमुक्ताविच्छा चेत् अष्टोत्तरशतं पठ ॥

एवं च भारतीयाध्यात्मिकविचारधारया उपजीव्यत्वात् उपनिषदः प्रस्थानत्रये प्रथमगणनामर्हन्ति। यद्यप्युपनिषदः असंख्याकाः, तथापि याः उपनिषदः अद्वैतसिद्धान्तमूलभूताः, याश्च गौडपाद श्रीशंकरभगवत्पादादिभिः अद्वैताचार्यैः व्याख्याताः ताः एवात्र सव्याख्योपव्याख्या वर्णमालाक्रमेण

यथोचितं निर्दिश्यन्ते।

**उपनिषदां व्याख्यानादिपरम्परा** :-- अथर्वशिरोपनिषदः नारायणाश्रमिना कृता दीपिका, शंकरानन्देनापि अस्याः दीपिका इति व्याख्या विरचिता। अथर्वशिर उपनिषदः दीपिका इति नारायणाश्रमिणा शंकरानन्देन च पृथक्तया कृतम्। शंकरानन्देन अमृतनादोपनिषदः दीपिका इति व्याख्या लिखिता। नारायणाश्रमी शंकरानन्दसदाशिवेन्द्रसरस्वतीभिः अमृतबिन्दूपनिषदः दीपिका इति व्याख्याः लिखिताः। नारायणाश्रमी शंकरानन्दाभ्यां आत्मप्रबोधोपनिषदः दीपिका इति व्याख्या लिखिता। नारायणाश्रमीशंकरानन्दाभ्यां आरुणिकोपनिषदः दीपिका इति व्याख्या लिखिता। श्रीशंकरभगवत्पादैः ईशावास्यभाष्यम्, तद्व्याख्योपरि आनन्दगिरिणा व्याख्या, शिवानन्दयतिना भाष्यस्य टिप्पणी च कृता। आनन्दभट्टेन ईशावास्दभाष्यम्, उपनिषद्ब्रह्मेन्द्रकृतं ईशावास्यविवरणम्, उव्वटाचार्यकृतम् ईशावास्यभाष्यम्, गोपालनन्दकृतां ईशावास्यटीकां, नरसिंहभट्टकृता ईशावास्यटीका, ब्रह्मानन्दसरस्वतीकृतं ईशावास्यरहस्यं, भास्करानन्दसरस्वतीकृता व्याख्या, रामचन्द्रपण्डितेन रहस्यविवृतिः, श्रीधरानन्देन विवेकः, सच्चिदानन्दस्वामिना, शंकरानन्देन च ईशावास्यदीपिका, सदानन्देन ई. वा. चिन्तामणिः लिखिता।

श्रीशंकरभगवत्पादैः ऐतरेयोपनिषदः भाष्यं लिखितम्। अभिनवनारायणेन्द्रेण भाष्योपरि व्याख्यामेकां लिखिता। आनन्दगिरिणा श्रीशंकरभाष्योपरि टिप्पणी रचिता। एवमेव ज्ञानामृतयतिना टिप्पणी, उपनिषद्ब्रह्मेन्द्रेण विवरणं, भास्करानन्देन दीपिका, विद्यातीर्थेन चान्या दीपिका, पंचदश्यादिबहुग्रन्थकर्त्रा विद्यारण्येन चान्या दीपिका, शंकरानन्देन चान्या दीपिका लिखिता।

श्रीशंकरभगवत्पादैः कठोपनिषदः भाष्यं लिखितम्। आनन्दगिरिणा भाष्योपरिटीका, अच्युतकृष्णानन्देनान्याटीका, गोपालबालयतिना भाष्योपरि विवरणं, शिवानन्दयतिना भाष्योपरि टिप्पणी, श्रीधरशास्त्रिपाठकेन

"बालबोधिनी" इति व्याख्या, अभिनवनारायणेन्द्रेणैका व्याख्या, उपनिषद्-ब्रह्मेन्द्रेणान्या व्याख्या, दिगम्बरानुचरेण "अर्थप्रकाशिकेति" अन्या व्याख्या, "नारायणगजपतिराज्ञा" द्विमतप्रकाशिका इत्येका व्याख्या, नारायणाश्रमिणा "दीपिका" शंकरानन्देन चेका दीपिका, भास्करानन्दसरस्वतिना एका व्याख्या रचिता।

केनोपनिषदः पदभाष्यं वाक्यभाष्यं चेति भाष्यद्वयं श्रीशंकरभगवत्पादैरेव लिखितमिति अनुमीयते। अभिनवनारायणेन्द्रेण भाष्योपरि टीका, आनन्दगिरिणा टिप्पणी, शिवानन्दयतिना भाष्योपरि टिप्पणी, श्रीधरशास्त्रिपाठकेन बालबोधिन्येका व्याख्या। उपनिषद्ब्रह्मेन्द्रेण विवरणं, कृष्णलीलाशुकेन "शंकरहृदयंगमा" इति एका व्याख्या, नारायणाश्रमिणा "दीपिका" शंकरानन्देनेका "दीपिका" भास्करानन्देनेका व्याख्या च रचिता।

कैवल्योपनिषदः उपनिषद्ब्रह्मेन्द्रेण कृतं विवरणं, नारायणाश्रमिना कृता टीका, शंकरानन्देनान्या टीका, सदाशिवब्रह्मेन्द्रसरस्वतिना कृतान्या दीपिका। कौषीतकी उपनिषदः उपनिषद्ब्रह्मेन्द्रेण कृतं विवरणं नागरनारायणेन कृता ज्ञानमाला, नारायणश्रिमिना कृता दीपिका, शंकरानन्देनान्या दीपिका चोपलभ्यते। क्षुरिकोपनिषदः उपनिषद्ब्रह्मेन्द्रकृतं विवरणं, नारायणाश्रमिना कृता "दीपिका", शंकरानन्देन कृता अन्या "दीपिका" उप्लभ्यते। गोपालतापिन्युपनिषदः उपनिषद्ब्रह्मेन्द्रेण कृतं "विवरणं" नारायणाश्रमिना कृता "दीपिका", विश्वेश्वरकृतान्या "दीपिका" च वर्तन्ते। छान्दोग्योपनिषदः द्रमिडाचार्यैः कृतं "भाष्यं", ब्रह्मनन्दिकृतं "छान्दोग्यवाक्यं", श्रीशंकरभगवत्पादैः कृतं "भाष्यं", आनन्दगिरिकृता "भाष्यव्याख्या" अभिनवनारायणेन्द्रकृता "भाष्यटीका", उपनिषद्ब्रह्मेन्द्रकृतं "ऋजुविवरणं", त्यागराजशास्त्रिकृतः (राजुशास्त्री) "सद्विद्या विलासः" (रसानुभूतिः) नित्यानन्दाश्रमिकृता "मिताक्षरा" च दृश्यते। जाबालोपनिषदः नारायणाश्रमिकृता "दीपिका", बल्लभेन्द्रसरस्वतीकृता "मोक्षलक्ष्मीविलासा"

इति व्याख्या, शंकरानन्दकृता "दीपिका", श्रीनिवासशास्त्रिकृतं भाष्यं चवर्तते।

तैत्तिरीयोपनिषदः श्रीशंकरभगवत्पादैः कृतं "भाष्यं", अच्युतकृष्णानन्दकृत "वनमाला" इति भाष्यव्याख्या, अभिनवनारायणेन्द्रकृता "भाष्यटिप्पणी" आनन्दगिरिकृता "भाष्यटिप्पणी", सुरेश्वराचार्यकृतं "भाष्यवार्तिकं" आनन्दगिरिकृता "वार्तिकव्याख्या", लिंगनसोमयाजिकृतं "कल्याणविवरणं", विश्वानुभवकृता "भाष्यवार्तिकसंगतिः", अद्वैतानन्दतीर्थकृता "दीपिका", उपनिषदब्रह्मेन्द्रकृतं "विवरणं" तारकब्रह्माश्रमिकृतः "सारसंग्रहः", नारायणाश्रमिकृता "दीपिका", बालकृष्णानन्द सरस्वतीकृतं "विवरणं" भास्करानन्दकृता व्याख्या, विज्ञानात्मकृता "विवृतिः", विद्यारण्यकृता "लघुदीपिका", कृष्णानन्द श्रीरामशिष्यकृता "लघुदीपिकाटीका"। वेंकटनाथकृता "तैत्तिरीयटीका", शंकरानन्दकृता "दीपिका", सीतारामकृतं "आगमामृतं" च वर्तन्ते।

नारायणोपनिषदः उपनिषदब्रह्मेन्द्रकृतं "विरणं", नारायणाश्रमिकृता "दीपिका", माधवाचार्यकृतं भाष्यं विज्ञानात्मकृतं "विवरणं"। शंकरानन्दकृता "दीपिका" च वर्तन्ते। नृसिंहतापिन्युपनिषदः उपनिषदब्रह्मेन्द्रकृतं "विवरणं" गौडपादमुनिकृतं भाष्यं, नारायणाश्रमिकृतादीपिका, विद्यारण्यकृता "दीपिका", शंकरभगवत्पादैः कृतं भाष्यं, शंकरानन्दकृता च "दीपिका" वर्तते।

प्रश्नोपनिषदः श्री शंकरभगवत्पादैः कृतं भाष्यं, अभिनवनारायणसरस्वतीकृता "भाष्यकला", आनन्दगिरिकृतं "भाष्यटिप्पणं", शिवानन्दकृता टिप्पणी, उपनिषदब्रह्मेन्द्रकृतं "विवरणं", नारायणाश्रमिकृता "दीपिका" शंकरानन्दकृतान्या "दीपिका" च विद्यते।

बृहदारण्यकोपनिषदः शंकरभगवत्पादैः कृतं "भाष्यं", आनन्दगिरिकृता "भाष्यव्याख्या", महादेवेन्द्रसरस्वतीकृता "भाष्यतात्पर्यदीपिका", शिवानन्दयतिकृतं "भाष्यटिप्पणं", सुरेश्वराचार्यकृतं "भाष्यवार्तिकं", आनन्दगिरिकृता "वार्तिकव्याख्या", आनन्दपूर्णविद्यासागरकृता "वार्तिकव्याख्या", ज्ञानोत्तममिश्रकृता "भाष्यवार्तिकव्याख्या", नृसिंहप्रज्ञकृतं "वार्तिकविवरणं", विश्वानुभवकृता "वार्तिकसम्बन्धोक्तिः"। विद्यारण्यकृतः "वार्तिकसारः", महेश्वरतीर्थकृतः "वार्तिकसारसंग्रहः", उपनिषद्ब्रह्मेन्द्रकृतं "उपनिषद्विवरणं", द्रमिडाचार्यकृतं "बृहदारण्यकभाष्यं", नारायणाश्रमिकृता "दीपिका", नित्यानन्दाश्रमिकृता "मिताक्षरा", वासुदेवब्रह्मकृता "प्रकाशिका" विद्यारण्यकृता "बृहदारण्यकव्याख्या", शंकरानन्दकृता "दीपिका" च विद्यते। ब्रह्मविद्योपनिषदः उपनिषद्ब्रह्मेन्द्रकृतं "विवरणं", नारायणाश्रमिकृता "दीपिका", शंकरानन्देन कृतान्या "दीपिका" च वर्तते। ब्रह्मोपनिषदः उपनिषद्ब्रह्मेन्द्रकृतं "विवरणं" नारायणाश्रमिकृता "दीपिका", शंकरानन्दकृतान्या "दीपिका" च विद्यते। महोपनिषदः अपि "विवरणं" "दीपिका" द्वयं च वर्तते।

माण्डूक्योपनिषदः गौडपादाचार्यकृता "माण्डूक्यकारिका", श्रीशंकरभगवत्पादैः कृतं "कारिकाभाष्यं", अनुभूतिस्वरूपाचार्यकृतं "गौडपादीयभाष्यटिप्पणं", आनन्दगिरिकृता "कारिकाभाष्यव्याख्या", स्वयंप्रकाशयोगिकृता "मिताक्षरा" स्वामियतिकृता "मिताक्षरा", उपनिषद्ब्रह्मेन्द्रकृता "कारिकाव्याख्या" श्रीशंकरभगवत्पादैः कृतं "उपनिषद्भाष्यं" आनन्दगिरिकृतं "माण्डूक्यभाष्यव्याख्या", मधुरानाथशुक्लकृता "भाष्यव्याख्या", राघवानन्दकृतः "भाष्यार्थसंग्रहः", उपनिषद्ब्रह्मेन्द्रकृतं "माण्डूक्यविवरणं", नारायणाश्रमिकृता "दीपिका", भास्करानन्दकृता "माण्यूक्यव्याख्या", शंकरानन्दकृता "दीपिका" च वर्तते। मुण्डकोपनिषदः श्रीशंकरभगवत्पादैः कृतं "भाष्यं" अभिनवनारायणेन्द्रकृता "भाष्यटीका", आनन्दगिरिकृता "मुण्डकभाष्यव्याख्या", शिवानन्दयतिकृता "भाष्यटिप्पणी",

उपनिषद्ब्रह्मेन्द्रकृतं "मुण्डकोपनिषद्विवरणं" नारायणाश्रमिकृता "दीपिका" भास्करानन्दकृतान्या "दीपिका", शंकरानन्दकृता "दीपिका" च लभ्यते।

रामतापिन्युपनिषदः उपनिषदब्रह्मेन्द्रकृतम् "उपनिषद्विवरणं", नागेश्वर-सूरिकृता "दीपिका", भट्टमुद्गलसूरिकृता उपनिषद्व्याख्या, रामयतिकृता "पदयोजनिका", विश्वेश्वरकृता "पूर्वखण्डव्याख्या", सुरेश्वराश्रमिकृता "रामचन्द्रज्योत्स्ना" चोपलभ्यते। श्वेताश्वतरोपनिषदः श्रीशंकरभगवत्पादैः कृतं "भाष्यं", उपनिषद्ब्रह्मेन्द्रकृतं "श्वेताश्वतरविवरणं", नारायणाश्रमिकृता "दीपिका", विज्ञानभगवत्कृतं "श्वेताश्वतरविवरणं", शंकरानन्दकृता "दीपिका" च वर्तते। हंसोपनिषदः उपनिषदब्रह्मेन्द्रकृतं "विवरणं", नारायणाश्रमिकृता "दीपिका", शंकरानन्दकृता अन्या "दीपिका" च वर्तन्ते।

**गीताप्रस्थानप्रस्तावना :--** एवम् असंख्याकाभिः उपनिषद्भिः अद्वैतवेदान्तभावाः प्रकटिताः। एवमपि उपनिषत्समय एव क्वचिद्वैदिकधर्मविरोधिनां विभिन्नानां दर्शनानां सूक्ष्मसद्भावः ऊहितुं शक्यते। एतेषां विभिन्नानां सिद्धान्तामनुयायिनां प्रभवाः प्रजासु विभिन्नाः भावाः प्रचालिताः प्रचलिताश्चासन्। कारणदस्मात् भारतीयाध्यात्मिकवायुमण्डले लोकायतिकादयः मतोदयाः समभुवन्। तस्मात् वैदिकमतानां हानिरप्याभूत्। विभिन्नदर्शनानां खण्डनस्य वैदिकधर्मस्य पुनः प्रतिष्ठायाश्चावश्यं कर्तव्यम् अनिवार्यं संजातम्। तस्मात् भगवान् व्यासः पंचमवेदतुल्यं महाभारतं, अष्टादश महापुराणानि उपपुराणानि च निर्मितबान्। तत्पुराणपठनात् असंख्यानि दर्शनानि क्वचित्स्वनामनिर्देशं क्वचित्स सिद्धन्तानुवादं खण्डितानि दृश्यन्ते।

महाभारतस्थशान्तिपर्वानुशासनीकपर्वच महाभारतकालिन्याः आध्यात्मिकभावनायाः प्रत्यक्षं निदर्शनं, महाभारतादिषु इतिहासग्रन्थेषु महापुराणोपपुराणादिषु च वैदिकमतप्रतिष्ठापनाय आध्यात्मिकविज्ञान प्रतिपादकाः निखिलवेदान्तसारभूताश्च गीताः तादृश स्थानमलभन्त। तादृश्यः आध्यात्मिकभावनाप्रधानाः गीताः अद्वैतवेदान्तसाहित्यस्य द्वितीयं

प्रस्थानम् भवति। यद्यपि प्रतिपुराणेषु बह्वयः गीताः श्रूयन्ते तथापि याश्चाद्वैतवेदान्ताविरोधिन्यः याशचाद्वैताचर्यैः व्याख्याताः ताः एव गीताः अत्र दिङ्मात्रेण वर्णमालाक्रमेण निर्दिश्यन्ते।

**गीतान्तराणि तेषां व्याख्यानादिकम् :--** १. अगस्त्यगीता भद्राश्वागस्त्य-सम्वादरूपात्मिका भवति। २. अनुगीता-- महाभारतस्याश्वमेथिक-पर्वणि षोडशोध्यायादारभ्य प्रवृत्तः कृष्णार्जुनसम्वादः, अनुगीताशब्देन व्यवहृतः। तस्य गौडपादमुनिकृतं "अनुगीताभाष्यम्"। ३. अवधूतगीतायाः दत्तगीता, जीवन्मुक्तगीतेति नामान्तरेण प्रसिद्धिः, अस्याः परमानन्दतीर्थकृता "टीका", शंकरभगवत्पादैः कृतः "अवधूतगीतासारः" च वर्तते। ४. अष्टावक्रगीतायाः "अष्टावक्रीयं", अष्टावक्रसूक्तं अवधूतानुभूतिरिति नामभिः प्रसिद्धम्। अस्याः पूर्णानन्दकृता व्याख्या, भासुरानन्दकृतान्या व्याख्या मुकुन्दमुनिकृतापरा व्याख्या, विश्वेश्वरपण्डितकृता "दीपिका" च वर्तते। ५. ईश्वरगीता तु कूर्मपुराणान्तर्गता वर्तते। अस्याः यज्ञेश्वरसूरिकृता व्याख्यापि वर्तते। ६. उत्तरगीता कृष्णार्जुनसम्वादात्मकेयम्। अस्याः काण्डद्वयातीतयोगिकृता व्याख्या, गौडपादाचार्यकृता "दीपिका", परमानन्दतीर्थकृता टीका च वर्तते। ७. ऋभु गीता तु शिवरहस्यान्तर्गता भवति। ८. कपिलगीता तु देवहूतिभगवत्सम्वादरूपेयं पद्मपुराणान्तर्गता, अन्याकाचनशिवपार्वतीसम्वादात्मिका कपिलगीतापि वर्तते। ९. गणेशगीता तु गजाननवरेण्यसम्वादमुखेन प्रवृत्तेयम्। अस्याः नीलकण्ठतीर्थकृता गणपतिभावदीपिका व्याख्या विद्यते। १०. जीवन्मुक्तिगीता तु कृष्णार्जुनसम्वादमुखेन जीवन्मुक्तस्वरूपं वर्णयति, ११. ज्ञानगीता १२. देवीगीता तु योगत्रयप्रतिपादिकेयं गीता, देवीभागवतसप्तमस्कन्धान्तर्गता विद्यते। १३. बोधानन्दगीतायां ईशादिबृहदारण्यकान्तानां दशोपनिषदां भाष्यानुसारिणमर्थं संगृह्यते, इयं गीता द्वादशभिः परिच्छेदैः वर्तते। १४. ब्रह्मगीता तु वसिष्टरामसम्वादमुखेन योगवासिष्ठोत्तरार्धगतनिर्वाणप्रकरणान्तर्गता प्रवृत्तेयं

गीता। अन्या च ब्रह्मगीता स्कान्धपुराणान्तर्गतसूतसंहितान्तर्गता भवति। अस्याः कृष्णानन्दचित्प्रकाशिनी, माधवाचार्यकृता तात्पर्यदीपिका, वेंकटेशस्त्रिकृता तात्पर्यबोधिनी च विद्यते। १५. रामगीता तु तैत्तिरीयोपनिषदः वाजसनेयश्रुतिं च प्रमाणयन्तीयं वर्तते। १६. रुद्रगीता तु रुद्रभंद्रबाहुसम्वादमुखेन प्रवृत्ता बृहदब्रह्मसंहितान्तर्गतियम्, १७. वसिष्ठगीता तु आत्मविश्रान्तिस्वभावविश्रान्तिविषयिणीयं योगवासिष्ठोत्तरार्धगतनिर्वाण-प्रकरणान्तर्गता विद्यते। १८. शिवगीता तु अगस्त्योपदेशमुखेन प्रवृत्ता षोडशभिरध्यायैः पूर्णेयं। अस्याः व्याख्या परमशिवेन्द्रसरस्वतीकृता शिवगीतातात्पर्यप्रकाशिका ब्रह्मानन्दसरस्वतीकृता व्याख्या, लक्ष्मीनरहरि-सूनुकृता बालनन्दिनी, शंकरानन्दकृता शिवगीताव्याख्या च विद्यते। १९. शिवरामगीता च शिवरामसांवादसरण्य प्रवृत्तेऽयं ग्रन्थः, योगाद्वैतसिद्धान्तान् प्रतिपादयति। २०. श्रुतिगीता च भागवत-दशमस्कन्धान्तर्गतेयं ब्रह्मस्तुतिरूपा विद्यते। अस्याः शंकरानन्दकृता अपरा व्याख्या विद्यते। २१. सिद्धगीता च योगवासिष्ठोदशम-प्रकरणान्तर्गतोऽयं। २२. सिद्धान्तगीता च अथर्वणवेदरहस्या-न्तर्गता २३. सूतगीता च सूतसंहितान्तर्गतेयं। अस्याः माधवमन्त्रि-कृता तात्पर्यदीपिका व्याख्या विद्यते। २४. सूर्यगीता च सूर्यारुण-सम्वादरूपेण प्रवृत्ता वासिष्ठतत्त्वसारायणान्तर्गतेयं विद्यते। २५. हंसगीता च कृष्णोद्धवसम्वादमुखेन प्रवृत्तेयं।

**द्वितीयप्रस्थानस्य विवरणम्** :-- भगवद्गीता अष्टादशभिरध्यायैः सप्तशतश्लोकैश्च पूर्णेयं, निश्श्रेयसप्राप्त्युपायान् स्वभावमधुरैः पदविन्यासैः प्रतिपादयति।

> **श्लोकैकं धृतराष्ट्रस्य नवदुर्योधनस्तथा।**
> **द्वात्रिं शत्संजयप्रोक्तं वेदाष्टौ अर्जुनस्य च॥**
> **तत्त्वावबोधो वेदाब्धः पंचकेशवनिर्मितम्।**
> **एवंगीता प्रमाणं च श्लोकाः सप्तशतानि च॥**

इत्ययं श्लोकः गीताविषये प्रसिद्धः। भगवद्गीता विभिन्नदार्शनिकवादेषु निर्लिप्ता। आध्यात्मिकतत्त्वनिरूपणापरवैदिकधर्ममात्रानुसारिणी राजते। गीतायां आत्मापरोक्षानुभूतिप्रतिपादिकानां उपनिषदाम्, अद्वैतसिद्धान्तः, प्रकृतिपुरुषविवेकज्ञानान्मोक्षः इति प्रतिपादिका सांख्याप्रक्रिया, कर्मानुष्ठानजन्यस्वर्गादिफलदायिकर्ममीमांसासिद्धान्तः, अष्टांगसाधनेन प्रकृतिबन्धनात् मुक्तस्य जीवस्य कैवल्यमिति योगसिद्धान्तः, रागात्मकभक्तिप्रधानः सर्वकर्मणां परमात्मार्पणप्रधानश्च पांचरात्रागमसिद्धान्तश्च तत्र तत्र प्रतिपादितः। अत एव गीतायाः आशयः कुत्रेति न निर्णेतुं शक्यत इति केचिद्वदन्ति, एवमेव तत्तदाचार्यैः गीतां प्रमाणीक्रियते। श्रीशंकरभगवत्पादैश्च गीताप्रस्तानभाष्ये "तदिदं गीताशास्त्रंसमस्तवेदार्थसारसंग्रहभूतं दुर्विज्ञेयार्थं" इत्युच्यते। श्रीमच्छंकरभगवत्पादाचार्यभाष्यानुसारं उपक्रमोपसंहारप्रमाणात् भगवद्गीतायाः ज्ञानयोगे एव तात्पर्यम् अन्ये तु तदंगाः एवेति प्रतिपाद्यते।" उक्तं च वराहपुराणान्तर्गतगीतामाहात्म्ये --

गीताश्रयोऽहं तिष्ठामि गीता मे चोत्तमं गृहम्।
गीताज्ञानमुपाश्रित्य त्रीन् लोकान् पालयाम्यहम्॥
चिदानन्देन कृष्णेन प्रोक्ता स्वमुखतोऽर्जुनम्।
वेदत्रयी परानन्दा तत्त्वार्थज्ञानमंजसा॥
योष्टादशजपेन्नित्यं नरो निश्चलमानसः।
ज्ञानसिद्धिं स लभते ततो याति परं पदम्॥
गीतार्थं ध्यायते नित्यं कृत्वा कर्माणि भूरिशः।
जीवन्मुक्तः स विज्ञेयः देहान्ते परमं पदम्॥
गीतामाश्रित्य बहवः भुभुजो जनकादयः।
निर्धूतकल्मषा लोके गीता याताः परं पदम्॥
प्रारब्धं भुज्यमानोऽपि गीताभ्यासरतः सदा।
स मुक्तः स सुखी लोके कर्मणा नोपलिप्यते॥

भगवद्गीतायां अर्जुनविषादयोगेन प्रथमाध्यायः, सांख्ययोगत्वेन द्वितीयोऽध्यायः, कर्मयोगत्वेन तृतीयोऽध्यायः, ज्ञानयोगेन चतुर्थोऽध्यायः, कर्मसन्यासयोगत्वेन पंचमोऽध्यायः, आत्मसंयमयोगत्वेन षष्ठोऽध्यायः, विज्ञानयोगत्वेन सप्तमोऽध्यायः, अक्षरपरब्रह्मयोगत्वेन अष्टमोऽध्यायः, राजविद्याराजगुह्ययोगत्वेन नवमोऽध्यायः, विभूतियोगत्वेन दशमोऽध्यायः, विश्वरूपसन्दर्शन योगत्वेन एकादशोऽध्यायः, भक्तियोगत्वेन द्वादशोऽध्यायः, क्षेत्रक्षेत्रज्ञविभागयोगत्वेन त्रयोदशाध्यायः, गुणत्रयविभागयोगत्वेन चतुर्दशोऽध्यायः, पुरुषोत्तमप्राप्तियोगत्वेन पंचदशोऽध्यायः, देवासुरसम्पद्विभागत्वेन षोडशोऽध्यायः, श्रद्धात्रयविभागयोगत्वेन सप्तदशोऽध्यायः, मोक्षसन्यासयोगत्वेन अष्टादशोऽध्यायः च विद्यते।

**द्वितीयप्रस्थानस्य व्याख्योपव्याख्यादिकम्** :-- श्रीशंकरभगवत्पादैः कृतं गीताभाष्यं, अनुभूतिस्वरूपाचार्यकृतं गीताभाष्यटिप्पणम्। आनन्दगिरिकृतं भाष्यविवेचनं, केशवसाक्षिभगवत्पादकृतः भाष्यसंक्षेपः, रामानन्दसरस्वती-कृतः गीतातिशयः, भगवतानन्दकृतं भाष्यविवेचनं उपनिषद्ब्रह्मेन्द्रकृता अर्थप्रकाशिका (ब्रह्मतत्त्वप्रकाशिका) कल्याणभट्टकृता भगवद्गीता टीका, कृष्णपण्डितकृता गीताभावप्रकाशिका कृष्णानन्दसरस्वतीकृतः गीतैकदेशपरामर्शः, धनपतिसूरिकृता गीताभाष्योत्कर्षदीपिका, नीलकण्ठ-तीर्थकृतः गीतार्थप्रकाशकः, भारद्वाजकृता गीतासंगतिमाला, मधुसूदन-सरस्वतीकृता, धर्मदत्तबच्चाशर्मकृतः गूढार्थदीपिका रघुनाथसूरिकृतं पदभूषणं, राघवानन्दकृता तत्त्वार्थचन्द्रिका रामचन्द्रानन्दसरस्वतीकृता तत्त्वदीपिका, रामानन्दसरस्वतीकृतः गीताशयः, वासुदेवशास्त्री अभ्यंकरकृतः अद्वैतांकुरः, वासुदेवशिष्यकृताः कुमारकारिकाः, वेंकटनाथकृता एकाव्याख्या ब्रह्मा-नन्दगिरिः एकाव्याख्या श्रीधरस्वामिकृता सुबोधिनी, शंकरानन्दकृता तात्पर्य-द्योतिनी, सदानन्दव्यासवरकृतः गीताभावप्रकाशः, हनुमत्कृतं पैशाचभाष्यम्, विद्यते।

तृतीयप्रस्थानम् -- प्रस्थानीयप्रस्तावना।

अधिगतभिदा पूर्वाचार्यानुपेत्य सहस्रधा
सरिदिव महीभेदा सम्प्राप्य शौरिपदोद्गता।
जगति भगवत्पादश्रीमन्मुखाम्बुजनिसृता
जननहरिणी सूक्तिः ब्रह्माद्वैकपरायणा॥

(श्रीमदप्पय्यदीक्षितानां सिद्धान्तलेशसंग्रहः)

यद्वक्त्राम्बुजनिश्रुतं परमकं श्रीसूत्रभाष्यामृतं
पीत्वा मादृशजीवभृंगनिचया नन्दन्तिमोक्षांगणे।
नानावादिमदेभभंजनमहाव्यग्रोग्रकण्ठीरवान्
वन्दे व्यासमुनीन्द्रशंकरमहान् सद्देशिकान् तानहम्॥
वेदान्ताम्भोनिधिगभीरा नयमकरकुला ब्रह्म विद्याब्जषण्डा,
पाषण्डोत्तुंगवृक्षप्रमथननिपुणामानवीचीतरंगा।
यस्याऽस्योत्था सरस्वत्यखिलभवभयध्वंसिनी शंकरस्य
गंगाशम्भोः कपर्दाविव निखिलगुरोर्नौमि तत्पादपद्मम्॥

सर्वकारणकारणं एकमेवाद्वितीयं सत्यंज्ञानान्दस्वरूपं अनन्तं असंगं नित्यं ब्रह्म तज्ज्ञानान्मोक्षः इत्यादिकं सर्वं अलौकिकविषयान्तर्गतम्। एतादृशे अलौकिके विषये अनादिः अपौरुषेयश्रुतिरेव प्रमाणम्। श्रुतिश्चात्यन्तं दुरव बोधा, यतः श्रुतिवाक्यं संक्षिप्तं संगतिप्रदर्शकवाक्यैः प्रायशो विवृताविभाषा च अतिपुरातनी, लोकाश्च उत्तरोत्तरं मन्दबुद्धयः। एवं च श्रुतिप्रदर्शितो मार्गः मीमांसकरादिविविधदर्शनकारैः कलुषीकृतः आसीत्। उपनिषद्भागोऽयं न श्रूतिशिरोभूतः, किन्तु जीवात्मनः अविनाशित्वप्रतिपादनेन स्वर्गादिपारलौकिके सुखे विश्वासोत्पादनद्वारा यज्ञादिकर्मकाण्डस्यैव उपोद्बलकः तदंगभूतश्चेति लोकानांमतिरभवत्। एतादृशं लोकप्रत्ययं निराकरिष्णुः भगवान् बादरायणः ब्रह्मसूत्राणि प्रणिनाय। ब्रह्मसूत्राणि च श्रुतिमीमांसामुखेनैव तत्त्वोपदेशाय प्रवृत्तानि श्रुत्यर्थनिर्णयार्थं यो लोकवेदसाधारणो नियमः मीमांसकैराविष्कृतः

अवधारितश्च तेनैव नियमेन श्रुत्यर्थं अद्वैतमते निरूप्यते। स एव वेदान्तसिद्धान्तः। सोऽयं सिद्धान्त एव ब्रह्मसूत्रैः प्रतिपाद्यते। च अत एव "वेदान्तवाक्यकुसुमग्रथनार्थत्वात् सूत्राणाम्" इति (१-१-२) श्रीमच्छंकरभगवत्पादैः सूत्रभाष्ये उपवर्णितम्।

प्रायेणवेदान्तवादिनः, वेदान्तमतविरोधिनः सर्वेऽपि वेदान्तमतखण्डनाय अद्वैतमतमेव खण्डितवन्त इति "व्यासतात्पर्यनिर्णये" अप्पय्यदीक्षितैः प्रदर्शितम्। तेनेदं स्पष्टं ज्ञायते यत् -- "प्राचीनाः ऋषयः वेदान्तशब्देन अद्वैतमेव ज्ञातवन्तः बोधितवन्तश्च। शाण्डिल्यभक्तिसूत्रेऽपि "शाण्डिल्यपरां बादरायणः" (३०-सूत्रम्) इति सूत्रेण बादरायणमतस्याद्वैतमतमेव ऐदम्पर्यमुक्तमिति ज्ञायते। जैन - बौद्धादयो द्वैतिनः च सर्वेऽपि अद्वैतमेव खण्डयन्ति। तस्मात् बादरायणव्यासनिर्मितानि ब्रह्मसूत्राणि अद्वैतमतमूलभूतानि। अद्वैतवेदान्ते तृतीयं प्रस्थानं सूत्र प्रस्थानमिति विशिष्यते। तस्मात् प्रकरणेऽस्मिन् ब्रह्मसूत्राणि तेषां वृत्यादयाः ग्रन्थाः, भाष्यं, भाष्यव्योपव्याख्याः इत्यादयः सर्वेऽपि ग्रन्थाः यथाक्रमं निरूप्यन्ते।

ऋषिभिः बहुधा गीतं छन्दोभिर्विविधैः पृथक्।
ब्रह्मसमत्रपदैश्चैव हेतुमद्भिः विनिश्चितैः ॥ (गीता. १३-३)

**तृतीयप्रस्थानस्य विवरणम्** :-- वेदान्तसूत्राणि, तु शारीरकसूत्राणि, ब्रह्ममीमांसासूत्राणि उत्तरमीमांसासूत्राणि इति नाम्ना प्रसिद्धानि, ब्रह्मसूत्राणि व्यासरचितानि इति प्रसिद्धि तु। सूत्राण्येतानि निखिलोपनिषदामर्थसंग्राहकानि इति। तानि सूत्राणि समन्वयाविरोधसाधनफलाख्यैः चतुर्भिरध्यायैः संपूर्णोऽयं ग्रन्थः। प्रत्याध्यायं चत्वारः पादाः, प्रतिपादं बहूनि अधिकरणानि। प्रत्यधिकरणं भिन्नाः, विषयाः श्रीशांकरमतेन सूत्राणां समष्टिसंख्या 555, अधिकरणानि १९१, सन्ति।

ब्रह्मसूत्रेषु "अथातो ब्रह्मजिज्ञासा" "इत्यारभ्य" अनावृत्तिशशब्दादना-वृत्तिशब्दात् इत्यन्तं भवति। तत्र सर्वेषामपि वेदान्तवाक्यानां साक्षात् परम्परया

वा प्रत्यगात्माभिन्ने अद्वितीये ब्रह्मणि तात्पर्यमिति समन्वयः प्रथमाध्याये प्रदर्शितः। तत्प्रथमे पादे स्पष्टब्रह्मलिंगयुक्तानि वाक्यानि विचारितानि। द्वितीयपादे तु अस्पष्टब्रह्मलिंगयुक्तानि, उपास्यब्रह्मविषयाणि। तृतीयपादे स्पष्टब्रह्मयुक्तानि प्रायशो ज्ञेयब्रह्मविषयाणि। एवं पादत्रयेण तादृशविचारं समाप्य, चतुर्थपादे प्रधानविषयत्वेन सन्दिह्यमानानि अव्यक्तजातिपदानि चिन्तितानि। तथा द्वितीयाध्याये वेदान्तानामद्वये ब्रह्मणि समन्वये समुत्पन्ने, तत्र सम्भावितस्मृतितर्कादिविरोधमाशंक्य तत्परिहारपुरस्सरं तदविरोधः प्रदर्शितः। तत्राद्यपादे सांख्ययोगकाणादादिस्मृतिभिः सांख्यादिप्रयुक्तैः तर्कैः च विरोधो वेदान्तसमन्वयस्य परिहृतः। द्वितीयपादे सांख्यादिमतानां दुष्टत्वं प्रतिपादितम्, स्वपक्षस्थापनपरपक्षनिराकरणपुरस्सरम् कृतं। तृतीयपादे तु महाभूतसृष्ट्यादिश्रुतीनां परस्परविरोधः परिहृतः पूर्वभागेन, उत्तरभागेन च जीवविषयाणाम्। चतुर्थपादे सूक्ष्म भूतसृष्ट्यादि श्रुतीनां वर्तमानपरस्परविरोधपरिहारः कृतः। तृतीयाध्याये तु साधननिरूपणं, तत्र प्रथमपादे जीवस्य परलोकगमनेन वैराग्यं निरूपितम्। द्वितीयपूर्वभागेन त्वं पदार्थः शोधितः, उत्तरभागेन च तत्पदार्थः शोधितः, तृतीयपादे निर्गुणे ब्रह्मणि नानाशाखाः पठिताः पुनरुत्तरपादोपसंहारः कृतः। प्रसंगाच्च सगुणविद्यासु शाखान्तरीयगुणो पसंहारानुपसंहारो निरूपितौ। चतुर्थपादे च पुनः निर्गुणब्रह्मविद्यायाः बहिरंग साधनानि, आश्रमयज्ञादीनि, अन्तरंगसाधनानि च शमदमनिदिध्यासनादीनि निरूपितानि। चतुर्थाध्याये गुणनिर्गुणविद्ययोः फलविशेषनिर्णयः कृतः। तत्र प्रथमपादे श्रवणाद्यावृत्या निर्गुणं ब्रह्म, उपासनावृत्या सगुणं ब्रह्म, साक्षात्कृत्य जीवतः पापपुण्यापेक्षणा जीवन्मुक्तिरभिहिता। द्वितीयपादे म्रियमाणस्योत्क्रान्तिप्रकारः चिन्तितः। तृतीयपादे सगुणब्रह्मविदः मृतस्योत्तरमार्गोऽभिहितः। चतुर्थपादे च पुनः पूर्वभागेन निर्गुणब्रह्मविदां विदेहकैवल्यप्राप्तिः उत्तरत्र उत्तरभागेन च पुनः सगुणब्रह्मविदः। ब्रह्मलोके स्थितिरुक्ता। नूनं वेदान्तशास्त्रमिदं सर्वेतरशास्त्राणां मूर्धन्यत्वेन समाद्रियते विद्वद्भिः इति।

**तृतीयप्रस्थानस्यव्याख्योपव्याख्यादिकम् :--** श्रीमच्छंकरभगवत्पादैः कृतं ब्रह्मसूत्रभाष्यम्। आनन्दगिरिकृता शारीरकन्यायनिर्णयेति सूत्रभाष्यव्याख्या, अद्वैतानन्दबोधेन्द्रेण कृतं ब्रह्मविद्याभरणं, अनुभूतिस्वरूपाचार्यकृतं प्रकटार्थविवरणं, चित्सुखाचार्यकृतं भाष्यभावप्रकाशिका, नृसिंहाश्रमिकृता भाष्यदीपिका, ज्ञानोत्तमभट्टारकेण कृतं सूत्रभाष्यव्याख्यात्मिका "विद्या श्रीः", महामहोपाध्यायानन्तकृष्णशास्त्रिभिःकृतः प्रदीपः, गोविन्दानन्दगिरिकृता सूत्रभाष्यार्थप्रदीपिंका, रामरायकविकृतो "सूत्रभाष्यार्थसंग्रहः"। रामचन्द्रतीर्थकृता "सुबोधिनी" (चतुस्सूच्यन्तं) – शिवनारायणानन्दकृता "सुबाधिनी"। नारायणतीर्थ (नारायणसरस्वती) कृतं "शारीरकमीमांसाभाष्यवार्तिकम्" (गद्यमयोऽयं) महादेवकैलासेशगुरुकृतं (पद्यमयोऽयं) "शारीरकमीमांसाभाष्यवार्तिकम्"। भास्करशर्मकृतः "शारीरकभाष्यसंग्रहः"। उपनिषदब्रह्मेन्द्र (रामचन्द्रेन्द्रः) कृतः (भाष्यस्य प्रत्यधिकरणसारार्थरूपः) "ब्रह्मसूत्रसिद्धान्तसंग्रहः"। ब्रह्मानन्दकृतः "सूत्रभाष्यसिद्धान्तसंग्रहः"। सुब्रह्मण्यसूरिकृता "ब्रह्मसूत्रभाष्यार्थरत्नमाला" (पद्यमयोऽयं)। रामसुब्रह्मण्यशास्त्रिकृतं "सूत्रभाष्यगाम्भीर्यनिर्णयः", गौरीनाथशास्त्रिकृतं "भाष्यगाम्भीर्यार्थनिर्णयखण्डनम्"। वेंकटराघवशास्त्रिकृतं "भाष्यगाम्भीर्यार्थं निर्णयमण्डनम्"। अनन्यानुभवकृता "शारीरकन्यायमणिमाला"।

**बिम्बप्रतिबिम्बवादीयाः व्याख्याः (पंचपादिकाविवरणम्) :--** पद्मपदाचार्यकृता "पंचपादिका"। विज्ञानवासोयतिकृतः कण्ठीरवः। धर्मराजाध्वरिकृता "पदयोजनिका"। आत्मस्वरूपकृता "प्रबोधपरिशोधिनी" उत्तमयज्ञयतिकृता "वक्तव्यप्रकाशिका"। नृसिंहाश्रमिकृतः "वेदान्तरत्नकोशः" विज्ञानात्मा (परमानन्दमस्करी) कृता "तात्पर्यद्योतनिका"। प्रकाशात्मश्रीचरणकृतंपंचपादिकाविवरणम्। यज्ञेश्वरदीक्षितकृता "विवरणोज्जीविनी"। सर्वज्ञविष्णुभट्टोपाध्यायकृतं "ऋजुविवरणं"। रमानन्दतीर्थकृता "ऋजुविवरणव्याख्यात्रय्यन्तभावदीपिका"। आनन्दपूर्ण

(विद्यासागरः) कृतं विवरणव्याख्यानं "टीकारत्नं"। अखण्डानन्दमुनिकृतं "तत्त्वदीपनम्"। विनायककृतः "विवरणतत्वदीपनसारः" चित्सुखाचार्य-कृता "विवरणभावद्योतनिका"। परिव्राजकाचार्यकृता "नृसिंहाश्रमि-विवरणभावप्रकाशिका"। नृसिंहाश्रमिकृता भावप्रकाशिका। रंगराजा-ध्वरिकृतं विवरणदर्पणम्। रमानन्दसरस्वतीकृतः विवरणोपन्यासः। पंचदशीत्यादिग्रन्थकर्ता विद्यारण्यकृतः "विवरणप्रमेयसंग्रहः" बोधेन्द्र-सरस्वती (गीर्वाणेन्द्रः) कृतम् "अद्वैतभूषणम्"। वासुदेवेन्द्रकृता "अद्वैत-भूषणव्याख्या" "आनन्ददीपिका"। रामतीर्थकृता पंचपादिकाविवरण-व्याख्या। श्रीकृष्णपण्डितेनेकृता व्याख्या, नरेन्द्रपूरिकृता एका व्याख्या विद्यते।

**तृतीयप्रस्थाने अवच्छेदकवादीयाः व्याख्याः (भामती) :--** श्री शंकरभाष्य-व्याख्यात्मकोऽयं अद्वैतवेदान्तशास्त्रे विशिष्टप्रस्थानस्य भामती प्रस्थानाख्यस्य मूलं महान् ग्रन्थराजः। तत्तु वाचस्पतिमिश्रैः भामतीति नाम्ना व्याख्यात्मिका लिखिता। अमलानन्दकृतः "कल्पतरुः"। अप्पय्यदीक्षितकृतः "परिमलः"। तारकब्रह्माश्रमिकृतः "परिमलसंग्रहः"। लक्ष्मीनृसिंहकृतः "आभोगः"। श्रीरामशास्त्रीकृता "आभोगटिप्पणी"। भट्टवैद्यनाथ (वैद्यनाथ पायगुण्डे) कृता "कल्पतरुमन्दारमंजरी"। अखण्डानन्दसरस्वतीकृता भामतीव्याख्या "ऋजुप्रकाशिका"। अल्लाल-सूरिकृतं "भामतीतिलकम्"। अच्युतकृष्णानन्दतीर्थकृता "भामतीभाव-दीपिका"। सुब्रह्मण्यशास्त्रिकृतं "भामतीविवरणम्"। चतुस्सूत्री-भामती टीकायाः "प्रकाश भामती विकासस्य" च कर्ता लक्ष्मी-नाथझा।

**श्रीशांकरभाष्यस्य साक्षाद्याख्याश्च :--** रामानन्दविरचिता सूत्रभाष्यव्याख्या "रत्नप्रभा"। अच्युतकृष्णानन्दतीर्थकृता "रत्नप्रभाभावदीपिका"। पूर्णानन्दसरस्वतीकृता "रत्नप्रभाव्याख्या" पूर्णानन्दीया। प्रकाशानन्दीया एका व्याख्या।

**ब्रह्मसूत्रवृत्तिग्रन्था** :-- उमामहेश्वरकृतः शांकरभाष्यानुसारिणी वृत्तिरूपेऽयम् "अद्वैतकामधेनुः"। दुर्गाप्रसादयतिकृतः (नारायणीया) "अद्वैतप्रकाशः"। ज्ञानेन्द्रस्वामिकृता "अद्वैतमंजरी"। सीतारामशास्त्रीकृता "अद्वैतसुधा"। कृष्णावधूतपण्डितकृता "अद्वैतसूत्रार्थपद्धतिः"। ब्रह्मेन्द्रसरस्वती (वाणीगिरिः) कृतं "अद्वैतामृतम्"। रामकृष्णकृता "अधिकरणकौमुदी"। कृष्णशास्त्रिकृता "अधिकरणचतुष्टयी"। चित्सुखाचार्यकृता "अधिकरणमंजरी"। सुखप्रकाशकृता "अधिकरणरत्नमाला"। चित्सुखाचार्यकृतः "अधिकरणसंगतिः"। श्रीसाधनयोगिकृतः। "अधिकरणार्थसंग्रहः"। जयरामपण्डितकृता "अर्थप्रकाशिका"। वेंकटपण्डितकृता "अर्थदीपिका"। ब्रह्मानन्दतीर्थकृता ब्रह्मसूत्रवृत्तिरूपा "अर्थसंग्रहनाम्नी"। विज्ञानभिक्षुकृता "ऋजुव्याख्या" भवदेवमिश्रकृता "चन्द्रिका"। गिरिजानाथवेदान्तरत्नविरचिता "तत्त्वप्रबोधनी"। शंकरानन्दकृता "तात्पर्यबोधिनी"। भैरवतिलककृतं "तात्पर्यविवरणम्"। त्रयंबकशास्त्रि (त्रयम्बकभट्ट) कृता "भाष्यंभानुप्रभा" इति "त्रयम्बकवृत्तिः"। शंकरानन्दकृता "दीपिका"। निर्मलकृष्णकृता "निर्मलकृष्णवृत्तिः"। अप्पय्यदीक्षितकृतं "न्यायरक्षामणिः"। नित्यानन्दाश्रमिकृतः "न्यायसंग्रहः"। ज्ञानेन्द्रसरस्वतीकृतः "पुरुषार्थसुधानिधिः"। कृष्णानन्दसरस्वतीकृतं "ब्रह्मसूत्रकुतूहलम्"। अद्वैतानन्दतीर्थकृता "ब्रह्मसूत्रतात्पर्यदीपिका"। गुरुस्वामिशास्त्रिकृता "तात्पर्यदीपिका" व्याख्या "विमर्शनी"। सदानन्दसरस्वतीकृतः "तात्पर्यप्रकाशः"। तिलकोपनामा भैरवशर्मकृतं "तात्पर्यविवरणं"। रामभट्टकृता ब्रह्मसूत्रभाष्यान्वयार्थसूत्रवृत्तिः। वासुदेवेन्द्रकृतं "विषयवाक्यविवरणं"। रामानन्दसरस्वतीकृता "विषयवाक्यवृत्तिः"। जयसिंहकृता "ब्रह्मसूत्रव्याख्या"। परमानन्दघनकृतं "ब्रह्मसूत्रविवरणम्"। रामसुब्रह्मण्यशास्त्रीकृतः "तत्त्वार्थविलासः"। सुब्रह्मण्यशास्त्रिकृता "रत्नावली"। प्रज्ञानेन्द्रमुनिकृतः "ब्रह्मसूत्रसारसंग्रहः"। वनमालिमिश्रकृता "ब्रह्मसूत्रसिद्धान्तमुक्तावली"। कृष्णानुभूतियतिकृता "अधिकरणन्यायानु-

क्रमणिका"। कृष्णशास्त्रिकृतः ब्रह्मसूत्रानुगुण्यसिद्धिः। वांच्छेश्वरकृतः "ब्रह्मसूत्रचिन्तामणिः"। परमेश्वरभारतीकृतः "ब्रह्मसूत्रोपन्यासः"। रामचन्द्रेन्द्रकृता "आर्याद्विशतिका"। जगज्ञीवनविद्वान्कृता "ब्रह्मानन्दप्रकाशिका"। रामकिंकरकृता "ब्रह्मामृतवर्षिणी"। सदाशिवानन्दकृता "ब्रह्मामृतवर्षिणी"। अन्नम्भट्टकृता "मिताक्षरा"। "ब्रह्मसूत्ररत्नप्रकाशिका" अखण्डानुभूतिकृता। स्वयंप्रकाशकृतं "लघुवार्तिकम्"। रंगनाथकृता "विद्वज्जनमनोरंजनी"। वेंकटाद्रिसूनु (वेंकटाद्रिभट्टारक) कृतं "विद्वन्मुखभूषणम्"। सीतारामकृतः "वेदान्तकौस्तुभः"। चोक्कनाथ (सुन्दरेशः) कृता "वेदान्तदीपिका"। स्वयंप्रकाशानन्दकृतं "वेदान्तनयभूषणम्"। नीलमेघशास्त्रिकृता "वेदान्तनवमालिका"। पुरुषोत्तमतीर्थकृता "वेदान्तन्यायरत्नावली"। नागेशभट्टकृतं वेदान्तभाष्यप्रतिपाद्यानि विषयाणि। विठ्ठलबुधभण्डारककृतं "वेदान्तशोधनम्"। विश्वनाथसिंहदेवकृतं "वेदान्तसूत्रभाष्यम्"। ब्रह्मानन्दसरस्वती कृता "वेदान्तसूत्रमुक्तावली"। केशवदेवकृता "वेदान्तसूत्रार्थचन्द्रिका"। भारतीतीर्थकृता "वैय्यासिकसूत्रोपन्यासः"। बेल्लंकोण्डरामरायकविकृतः "शारीरकचतुस्सूत्रीविचारः"। प्रकाशात्माकृतः "शारीरकन्यायनिर्णयः"। कृष्णानुभूतियोगिकृतः "शारीरकमीमांसाशास्त्रसंग्रहः"। सुब्रह्मण्याग्निकृता "शारीरकरहस्यार्थप्रकाशिका"। राघवार्यकृतः "शारीरकार्थसंक्षेपः"। अमलानन्दकृतं "शास्त्रदर्पणम्"। रघुनाथसूरिकृतं "शंकरपादभूषणम्"। बेल्लंकोण्डरामरायकविकृतः "शंकराशंकरभाष्यविमर्शः"। अनूपनारायणतर्कशिरोमणिकृता "समन्वयसूत्रवृत्तिः"। रघुनाथभट्टाचार्यकृता "सिद्धान्तार्णवशांकरब्रह्मसूत्रभाष्यव्याख्या"। गंगाधरभक्तिकिंकरकृता "सुबोधिनी"। रामब्रह्मेन्द्रसरस्वतीकृतः "सूत्रभाष्यसंग्रहः"। रामधनकृता "सूत्रसंक्षिप्तवृत्तिः"। कृष्णावधूतपण्डितकृता "सूत्रार्थामृतलहरी"। कौण्डिन्यकृता "सूत्रवृत्तिः"। वैद्यनाथकृता "सूत्रवृत्तिः", चिन्मयमुनिः (वेङ्कमात्य) एका वृत्तिः, नारायणतीर्थकृता एका वृत्तिः। प्रकाशात्मीया एका वृत्तिः। हरिदीक्षितकृता

एका सूत्रवृत्तिः। सुरेश्वराचार्यकृतेका वृत्तिः। देवरामभट्टीया एकावृत्तिः। भर्तृहरीया एका सूत्रवृत्तिः आसीत्। शुकभगवत्पादीया एका वृत्तिः च आसीत्।

**श्रीशांकरदर्शने प्रकरणग्रन्थप्रस्थानम्** :-- प्रस्थानत्रयान्तर्गताः सर्वे ग्रन्थाः व्याख्योपव्याख्यासहिताः निरूपिताः, यथा शांकरदर्शने प्रस्थानत्रयस्य कीदृशं स्थानं वर्तते, तादृशं स्थानमेव प्रकरणप्रस्थानस्यापि वर्तते। एतत् मनसि कृत्वा श्रीमच्छंकरभगवत्पादैः प्रस्थानत्रयरचनानन्तरं मन्दमतीनां अनुजिघृक्षया विविधशैल्या गहनं अद्वैततत्त्वं सुगमयितुम् प्रकरणग्रन्थरचना कृता। अद्वैतवेदान्तदर्शनस्थं एकैकं विषयं स्वीकृत्य अतिविपुलतया, सन्दर्भानुसारेण कुत्रचिदपि सूक्ष्मरूपेण च, प्रतिपाद्यं तत्त्वं प्रकरणग्रन्थेषु सुष्ठु वर्तते। प्रायशः प्रकरणग्रन्थानि एते गद्यपद्योभयात्मिकाः भवन्ति। तत्त्वस्य यथा हानिः न भवति तथा स्वानुभवेन सरलसुगमोदाहरणपुरस्सरं प्रतिपादितम्। अपेक्षितेषु स्थलेषु अतिविस्तुतया, अनपेक्षितेषु स्थलेषु अतिसंक्षेपेण अतिसुलभशैल्या हृदयंगमः भवति प्रकरणग्रन्थस्थविषयः।

प्रायशः दर्शनेऽस्मिन् प्रकरणग्रन्थाः सिद्धान्तमात्रप्रदर्शपराः केचन, खण्डनपराः केचन, मण्डनपराः केचन, अनुभवात्मकस्वीयभावाविष्करणपराः केचन, काव्यशैल्या सिद्धान्तप्रदर्शनपराः केचन, खण्डनमण्डनोभयात्मकाः केचन, स्तोत्रपराः केचन भवन्ति। यथा--

**शास्त्रैकदेशसम्बद्धं शास्त्रकार्यान्तरे स्थितम्।**
**आहुः प्रकरणं नाम ग्रन्थभेदं विपश्चितः ॥ इति ॥**

प्रकरणप्रस्थाने अद्वैतसिद्धान्तप्रतिपादकाः सव्याख्यानिर्व्याख्याः विभिन्नाचार्यकृताः ग्रन्थाः प्रायशः सहस्राधिकाः उपलभ्यन्ते। एतदेव महत्त्वपूर्णं यत् अद्वैतप्रकरणप्रस्थानस्य (दर्शनस्य) दर्शनान्तरापेक्षया कोणान्त-रान्तरेषु सर्वेष्वपि महान् विस्तारः। श्रीतंगस्वामिशर्मकृताद्वैतवेदान्त-साहित्येतिहासकोशे एवं वर्तते प्रकरणग्रन्थविषयमधिकृत्य। केवलं

सिद्धान्तप्रतिपादनपराः ग्रन्थाः ७०५ वर्तन्ते। वादप्रधानाः, खण्डनमण्डन-पराश्च प्रकरणग्रन्थाः १२८ वर्तन्ते। विभिन्नग्रन्थेषु प्रमाणत्वेनोपन्यस्ताः नाममात्रावशिष्टाश्च ग्रन्थाः ४१ वर्तन्ते। विभिन्नपुस्तकालयस्थाः मुद्रिताः, अमुद्रताश्चज्ञाताज्ञातकर्तृनाममधेयाः, अद्वैतसिद्धान्तप्रधानाः प्रकरणग्रन्थाः ४७ वर्तन्ते। केचन ग्रन्थाः जयपुरपोटीखानासूच्यां दृश्यन्ते। ते च ज्ञात-कर्तुकाः अज्ञातकर्तृकाश्चोभयविधाः सन्ति ते तु २४ भवन्ति इति उक्तं।

**प्रकरणग्रन्थेषु प्रकृतग्रन्थस्यान्तर्भावः** :-- वर्तमानेषु विराजमानेषु अद्वैतवेदान्त प्रकरणग्रन्थेषु कम्भम्पाटिकुलजलधिपूर्णचन्द्रायमानामरेश्वरशास्त्रिभिः रचितं "अज्ञानध्वान्तचण्डभास्कराख्यं" ग्रन्थं प्रकरणरत्नं भवति। प्रायशः प्रकरणग्रन्थाः सिद्धान्तमात्रप्रदर्शनपराः केचन भवन्ति। खण्डनमण्डनपराः केचन भवन्ति। अनुभवात्मकस्वीयभावाविष्करणपराः केचन भवन्ति, प्रकृतग्रन्थः अयं अनुभवात्मकस्वीयभावाविष्करणपरेषु अन्तर्भवति। कथमिति चेत् ग्रन्थस्याज्ञानध्वान्तचण्डभास्करस्य उपोदघातोपसंहारपर्यालोचनेन स्वयं ग्रन्थकर्त्रा उपोदघाते उदघोषितं यथा -- "अज्ञानदुःखनिवृत्तिपूर्वकानन्दाविर्भावरूपं मोक्षं कामयमानाः ब्राह्मणाः संसारदुःखसमुद्रं समुत्तीर्य मोक्षानन्दरूपं परं परमानन्दमास्वद्य सुखिनो भवन्त्विति मनीषया स्वानुभवावष्टम्भेन अज्ञानध्वान्तचण्डभास्करसंज्ञं वेदान्तप्रकरणमारभमाणाःवयं प्रथमे अनुबन्धचतुष्टय इति विचारयामः।"

उपसंहारे यथा -- "हे शिष्य अस्मच्चरणपरिचरणनिपुणस्य भवतः संसारदुःखसागरसमुत्तीर्णमहोपायभूतब्रह्मात्मैक्यज्ञानसिद्धये सर्ववेदान्त-परमार्थरहस्यम्" स्वानुभवावष्टम्भेन विचारदशकरूपेण अज्ञानध्वान्तचण्ड-भास्करसमाख्यानेन वेदान्तप्रकरणेन सम्यगुपदिष्टम्।

**एतावानुपदेशस्स्यात् वेदे श्रेयोर्थिनां नृणाम्।**
**कृतकृत्यो भवेत्क्षिप्रमेतत ज्ञात्वानुशासनम्॥**
**अनृणो विन्दते सौख्यं यस्य संस्मरणान्मुनेः।**
**गूढमद्वैतसद्रत्नं गृह्यतां ब्राह्मणोत्तमैः॥**

करालमायाभिधरात्रिशायिभिः कर्मातिदुश्शीतविकम्पितात्मभिः।
अज्ञानविध्वान्तसुचण्डभास्करो मयोदितो विप्रवरैः विलोक्यताम् ॥
श्रीदक्षिणामूर्तिकटाक्षवीक्षणप्रध्वस्ततत्त्वावरणेन धीमता
अज्ञानविध्वान्तसुचण्डभास्करः प्रकाश्यते मोहतमो निवृत्तये ॥

स्वानुभवावष्टम्भस्य कारणत्वविचारः :-- अज्ञानध्वान्तचण्डभास्कराख्यग्रन्थ-कर्तुः कम्भम्पाटि अमरेश्वरशास्त्रिणः। एतत् ग्रन्थरचने एवं, प्रथमं कारणं देवतानुग्रहः, द्वितीयकारणं तु गुरोरनुग्रहः। ज्ञानदाता गुरुः उपास्योदेवश्च एक एवेति ग्रन्थादस्मात् ज्ञायते ग्रन्थस्य प्रस्तावनायां यथा--

यत्तत्त्वं निखिलस्य यत्र निवसत्येतत् समस्तं जगत्,
यत्सत्वान्वयतोस्य सत्वमिहयद्भासाखिलस्यास्यधीः।
यत्साक्षात्कृतिरात्मतत्त्वविषयाज्ञानापहारक्षमा,
तत्तेजो हृदि भावयेयमभयं श्रीदक्षिणस्याभिधम् ॥

महामायागुहालीनं मायातीतं महोत्तमम्।
दक्षिणस्याभिधं ज्योतिः आविरस्तु ममाग्रतः ॥

उपास्यास्य श्रीदक्षिणामूर्तिदेवस्य अनुग्रहेण आत्मतत्त्वविषयका-ज्ञानापहारक्षमं यत्तेजः वर्तते तदेव तेजः मम हृदि लब्धम्।

उपास्यदेवस्य चिन्मुद्रायाः च माहात्म्यम् :--

देवस्तत्त्वमसीति बोधयतु मां मुद्रावता पाणिने--
त्येवं प्रांजलिना मया सविनयं स्वप्नेर्थितस्वेशितुः।
यस्य श्रीकरुणाकटाक्षविभवत्प्राप्तात्मविद्योऽस्म्यहम्
तं वन्दे मुनिवन्दनीयचरणं श्रीदक्षिणास्यं गुरुम् ॥
अंगुष्ठतर्जनीयोगमुद्राव्याजेन देहिनाम्।
श्रुत्यर्थं ब्रह्मजीवैक्यं दर्शयन्नोऽवताच्छिवः ॥
मौनव्याख्याप्रकटितपरब्रह्मतत्त्वं युवानं
वर्षिष्ठान्ते वसदृषिगणैरावृतं ब्रह्मनिष्ठैः।

आचार्येन्द्रं करकलितचिन्मुद्रमानन्दमूर्तिं
स्वात्मारामं मुदितवदनं दक्षिणामूर्तिमीडे ॥
ओं नमः प्रणवार्थाय शुद्धज्ञानैकमूर्तये ।
निर्मलाय प्रशान्ताय दक्षिणामूर्तये नमः ॥
चिद्घनाय महेशाय वटमूलनिवासिने ।
सच्चिदानन्दरूपाय दक्षिणामूर्तये नमः ॥
चित्रं वटतरोर्मूले वृद्धाः शिष्याः गुरुर्युवा ।
गुरोस्तु मौनव्याख्यानं शिष्यास्तु च्छिन्नसंशयाः ॥
गुरवे सर्वलोकानां भिषजे भवरोगिणाम् ।
निधये सर्वविद्यानां दक्षिणामूर्तये नमः ॥
यो वेदमणिसंच्छिन्न प्रणवोन्नतपीठगे ।
ताभ्यां श्रीदक्षिणामूर्तिपादुकाभ्यां नमो नमः ॥

प्रकृतग्रन्थकर्तृपरिचयः :-- प्रकृतग्रन्थस्याज्ञानध्वान्तचण्डभास्कराख्यस्य-ग्रन्थस्य कर्तुः नामा कम्भम्पाटिअमरेश्वरशास्त्रीति। स्वग्रन्थेषु दक्षिणामूर्तिं नमस्कुर्वाणः अयं, आन्ध्रदेशीयः भारद्वाजगोत्रीयः, यः अमरेश्वरशास्त्री। दक्षिणामूर्तिप्रसादेन लब्धः महावाक्योपदेशः। न केवलं श्रीदक्षिणामूर्तीश्वर-प्रसादलब्धोपदेशः, परन्तु अयं अमरेश्वरशास्त्री दक्षिणामूर्ती-श्वराचार्यस्य शिष्यः इति स्वीयबिम्बदृष्टिविचाराख्यग्रन्थात् ज्ञायते ।

आन्ध्रप्रदेशे ब्राह्मणवंशेषु बहुविधाः वर्तन्ते। तत्र प्रधानतया विभागद्वयं भवति। तत्तु वैदिक अवैदिकत्वरूपेण। वैदिकाः स्मार्तत्वेन आहूयन्ते। अवैदिकाः नियोगित्वेनाहूयन्ते। पूर्वकाले एते अवैदिकाः नियोगिनः ग्रामाधिकारीभूत्वा ग्रामस्थजनानां सकाशे शुल्कं स्वीकृत्य, प्रभूणां सन्निधौ प्रेषयन्ति। प्रभूणां आज्ञानुसारं तान् तान् ग्रामान् पालयन्ति। इति कृत्वा तेषां नाम अन्वर्थमभूत्। तेषु प्रथमशाखिनः इति नाम्ना, केचन आरुवेलनियोगुलु इति नाम्ना च केचन वर्तन्ते। प्रायशः एतेषु शैवाः केचन, वैष्णवाः केचन तत्तदभिरुचिं निमित्तीकृत्य परिणमन्ति।

वैदिकाः ये स्मार्ताः तथा न भवन्ति। स्मार्ताः अद्वैतिनः एव। तेषु तेलघाण्युलु, वेलनाडु इति प्रधानं भेदद्वयं भवति। अन्ये च मुरिकिनाडु, कासरनाडु इति अनेके विभागाः सम्प्रति भवन्ति। एते अमरेश्वरशास्त्रिणः स्मार्तेषु वेलनाडुब्राह्मणः भवितुमर्हति। प्रायः कम्भम्पाटिवंशीयाः कृष्णयजुर्वेदिनः, आपस्तम्बसूत्रीयाः तैत्तिरीयशाखिनः, कृष्णातीरे, गोदावरीतीरे चासन्, प्रायः एते अमरेश्वरशास्त्रिणः कृष्णातीरवासिनः एव भवितुमर्हंति।

आन्ध्रप्रदेशे प्रायः एकस्मिन् ग्रामे कंचित्कालं उषित्वा कारणान्तरेण यदि ग्रामान्तरं गमिष्यन्ति, ग्रामीणाः जनाः तदा तेषां पूर्वग्रामनाम्ना गृहनाम व्यवह्रियते, आन्ध्रप्रदेशे "प्रकाशं" मण्डले "खम्भम्" इति ग्रामो अस्ति। अमरेश्वरशास्त्रिणां पूर्वजाः तस्मिन् ग्रामे कंचित्कालमुषित्वा ग्रामान्तरं गताःस्युः। अतः तेषां गृहनाम कम्भम्पाटि इति आगतं स्यात्॥

ग्रन्थेऽस्मिन् अज्ञानध्वान्तचण्डभास्करे ग्रन्थकर्तुः स्वीयवंशावलिः, निवासदारपुत्रादिकं, कालसतीर्थादिकं च नैव सूचितं। प्रायः अस्य ग्रन्थान्तरेष्वपि एतादृशविचारः नास्ति। अज्ञानध्वान्तचण्डभास्करोऽयं ग्रन्थान्तरस्य अनुवाद रूपो वा अनुसरणरूपो वा व्याख्योपव्याख्यारूपो वा न भवति। स्वानुभवावष्टम्भेनायं वेदान्तप्रकरणं आरभ्यते इति ग्रन्थस्यारम्भेऽन्ते च ग्रन्थकर्त्रा प्रतिज्ञातम्। अतः ग्रन्थोऽयं स्वतन्त्रः इत्यवगम्यते। अस्य ग्रन्थस्यांध्रभाषानुवादः -- अनेनैव ग्रन्थकर्त्रा लिखितमुपलभ्यते।

ग्रन्थकर्तुः कालनिर्णयाय एकमेवालम्बनमुपलभ्यते। दशमप्रकरणे उपसंहारे "भगवद्भाष्यकारादिपरमहंसपरिव्राजकाचार्य श्रीविद्यारण्यमत्तातपादाद्यभियुक्तानां च अभिमतं तदनुकूलाश्च उपपत्तयः अत्रैव परिसमाप्ताः" इति। अनेन ज्ञातं यत् श्रीविद्यारण्याः ग्रन्थकर्तुः अमरेश्वरशास्त्रिणः तातपादाः इति तेषां विद्यारण्यानां अभिमतानुसारेण रचितमिति ग्रन्थस्यवाक्यात् ज्ञायते। विद्यारण्यानां कालः १२९६-१३८६ (एडि) मध्ये भवति। अतः अमरेश्वरशास्त्रिणां कालः अनन्तरमेव भवितुमर्हति। कम्भम्पाटिवंशीयाः नियोगिब्राह्मणेषु अपि वर्तन्ते। गुरुगीताकर्ता कम्भम्पाटि नारायणामात्यः

नियोगिब्राह्मणः क्रिस्तु १६५०-१७५० मध्ये अस्य जीवनकालः भवति।

श्रीविद्यारण्यानां पूर्वाश्रमस्य नाम माधवाचार्यः इति। एष माधवाचार्यः भारद्वाजगोत्रजः। अमरेश्वरशास्त्रिणः गोत्रोऽपि भारद्वाजगोत्रः। अतः एतावुभौ सगोत्रीकौ ज्ञातिनौ, परन्तु अमरेश्वरशास्त्रिणां गृहनामव्यत्यासेन एषः वंशान्तरस्य गृहान्तरस्य च पोषकत्वेन गतवान् वा स्यात्।

आन्ध्रप्रदेशे उपासनाविद्यासु दक्षिणामूर्तिः, मेधादक्षिणामूर्तिः दत्तात्रेय, लक्ष्मीगणपत्यादिबहवः उपासनासाम्प्रदायाः वर्तन्ते। तेषु सम्प्रदायेषु अयं अमरेश्वरशास्त्री दक्षिणामूर्तिसम्प्रदायानुवर्ती भवति। प्रायः आन्ध्रप्रदेशे वैदिकवंशेषु सर्वेष्वपि सम्प्रदायोऽयं भवति।

अमरेश्वरेति नामधारणत्वात् अयं अवश्यं कृष्णातीरवासी इति निश्चेतुं शक्यम्। गुण्टूर् (गर्तपुरी) मण्डलान्तर्गते प्रसिद्धं शिवक्षेत्रं वर्तते। तत्क्षेत्रं कृष्णानदीमाश्रित्यैव वर्तते। तत्क्षेत्रस्वामिनः नाम अमरेश्वर इति अमरेश्वरस्वामिनः अनुग्रहेण जायमानत्वात् एषोऽपि अमरेश्वरः भवितु-मर्हति।

अमरेश्वरशास्त्रिणः पंचदशीग्रन्थकर्तारं श्रीविद्यारण्यस्वामिनं "तात-पादत्वेन" स्वीकृतवान् इति विद्यारण्याः पितामहो वा मातामहोवा प्रपिता-महोवा भवितुमर्हति। अतः अस्य कालः षोडशशतके वा सप्तदशशतके वा भवितुमर्हति।

**ग्रन्थकर्ताऽनुभववेदान्ती** :-- अयं अमरेश्वरशास्त्री अनुभववेदान्ती। स्वीयवेदान्तानुभवेन अनेकशिष्यान् प्रबोधितवन्तः प्रभावितवन्तश्च अनेकान् इति ग्रन्थेनानेन अज्ञानध्वान्तचण्डभास्करेण ज्ञायते। अस्य प्रबोधे प्रभावितेषु बहुषु शिष्येषु "सौम्यः" एकः। ग्रन्थंस्याद्योपसंहारे स्वीयं शिष्यं सौम्यं प्रति -- हे शिष्य, अस्म-च्चरणपरिचरणनिपुणस्य भवतः संसारदुःखसागरसमुत्तीर्णमहोपायम्भूत ब्रह्मा-त्मैक्यज्ञानसिद्धयेसर्ववेदान्तपरमार्थरहस्यं "स्वानुभवावष्टम्भेन" विचार-

दशकरूपेणअज्ञानध्वान्तचण्डभास्करसमाख्यानेनानेन वेदान्तप्रकरणेन सम्यगुपदिष्टम्। इत्थमस्माभिः अस्मिन्श्च प्रकरणे तव अस्मदुपदिष्टं परमार्थरहस्यं सर्ववेदान्तसमुपबृहंकस्मृतीतिहासपुराणागमसम्मतं हरिहरादीश्वराणां, वसिष्ठादिऋषिणां, शुकादियोगिनां, याज्ञवल्क्यदिब्राह्मणानां, जनकादिक्षत्रियाणां, बलिप्रह्लादादिभक्तानां मैत्रेय्यादिस्त्रीणां भगवद्भाष्यकारादिपरमहंसपरिव्राजकाचार्यश्रीविद्यारण्यमत्तातपादाद्यभियुक्तानां चाभिमतं तदनुकूलश्चोपपत्तयः अत्रैव परिसमाप्ताः।

ममाप्येवमेवानुभवः सम्यगवस्थितः। अथ श्रेयोर्थिनां ब्राह्मणानामतिरिक्तं वक्तव्यम्, श्रोतव्यं, मन्तव्यं, वा प्राप्तव्यं वा किमपि नास्ति। इमं च परमार्थोपदेशं श्रद्धासमृद्धिसदधनो दीर्घकालनैरन्तर्यसत्कारैः निष्पक्षपातं सम्यग्विचारयसि चेदेतद्विचारपरिपाकपरिप्राप्तसम्यग्प्रज्ञानौकासमारूढः, तमः कूर्मं, रजोमीनं, क्रोधनक्रं, कामशैवालं, जन्ममरणतरंगं, रोगबुद्बुदं, लोभफेनं, मोहवेलं, दुःखागाधजलप्रवाहगम्भीरमिमं मूलाज्ञानसंसारापरमहांदुःखसमुद्रं समुत्तीर्य मोक्षसाम्राज्यानन्दरूपं परं पारमवाप्स्यसि।

एतावानुपदेशः स्यात् वेदे श्रेयोर्थिनां नृणम् ।
कृतकृत्यो भवेत्क्षिप्रं एतज्ज्ञात्वानुशासनम् ॥
ज्ञातमेव विजानाति विमुक्ताश्च विमुच्यते ।
निवर्तते निवृत्तन्तु त्रिवर्गः शपथाम्यहम् ॥
विदितं वेदरहस्यं विदितो देहादिरयमनात्मेति ।
विदितः पर इति चात्मा किमतः परमस्ति जन्मसाफल्यम् ॥
करालमायाभिधरात्रिशायिभिः,
कर्मातिदुश्शीतविकम्पितात्मभिः ।
अज्ञानविध्वान्तसुचण्डभास्करो,
मयोदतो विप्रवरैः विलोक्यताम् ॥

प्रकृतग्रन्थप्रतिपाद्यविषयसंग्रहः पूर्वाचार्यप्रार्थना :--

यद्वक्त्राम्बुजनिस्सृतंप रमकं श्रीसूत्रभाष्यामृतं,

पीत्वा मादृशजीवभृंगनिचयाः नन्दन्ति मोक्षांगणे।

नानावादिमदेभभंजनमहाव्यग्राप्रकण्ठीरवान्

वन्दे व्यासमुनीन्द्रशंकरमहान् सद्देशिकांस्तानहम्॥

अनृणो विन्दते सौख्यं यस्य संस्मरणान् मुनिः।

गूढमद्वैतसद्रत्नं गृह्यतां ब्राह्मणोत्तमैः॥

नमो वार्तिककारेभ्यष्टीकृद्भ्यो नमो नमः।

नमः श्रीभामतीकृद्भ्यो ब्रह्मविद्भ्यो नमो नमः॥

स्वगुरुदेवताप्रार्थना :--

श्रीदक्षिणामूर्तिकटाक्षवीक्षण,

प्रध्वस्ततत्त्वावरणेन धीमता।

अज्ञानविध्वान्तसुचण्डभास्करः

प्रकाश्यते मोहतमो निवृत्तये॥

भूमिका :-- अज्ञानमेव ध्वान्तं अज्ञानध्वान्तं (रूपकसमासः) चण्डश्चासौ भास्करश्च चण्डभास्करः (कर्मधारयसमासः) अज्ञानध्वान्तस्य चण्डभास्करः (षष्ठीतत्पुरुषः समासः) अज्ञानध्वान्तचण्डभास्करः। सामान्यरूपस्य ध्वान्तस्यान्धकारस्य तमसः निवारणं तु सामान्यभास्करः करोति। परन्तु अत्र केवलं ध्वान्तं न, अपि तु अज्ञानध्वान्तं, तत्तु अनादिकालमारभ्य अनुसरति। तेनाज्ञानध्वान्तदोषेण सन्मार्गमजानन्तः संसारसागरे मज्जनोन्मज्जनाभ्यां अत्यन्तं खिद्यमानाः, निपतिताः, अविद्याकरालरात्रिः अद्यापि न सुप्रभातेति प्रतीक्षमाणाः, सांसारिकलौकिकवैदिकसर्वकर्मादिदुश्शीतवातादिकम्पिताः, कामक्रोधादिवेतालभयनितान्तभीताः, आशापिशाचीसन्ताडितखिन्नसर्वांगाः, भवन्ति। अतः तादृशाज्ञानध्वान्तनिश्चयसमुच्याटनार्थं चण्डभास्करः एव समर्थः। तादृशचण्डभास्करं उपास्यमानाः उपासकाः यथोक्तवेदाधिकार-युक्ताः सर्ववेदान्ताध्ययनपूर्वक श्रवणमननिदिध्यासनानुष्ठानपरिपाकपरि-

लब्धजीवब्रह्मैक्यसाक्षात्कारजीव न्मुक्तान् पुरुषधौरेयान् ब्राह्मणानव-लोक्य अज्ञानदुःखनिवृत्तिपूर्वका नन्दाविर्भावरूपं परं परमानन्दमास्वाद्य सुखिनो भवन्त्विति मनीषया ग्रन्थकर्त्रा कम्भम्पाटिकुलजलधिपूर्णेन अमरेश्वरशास्त्रिणा "स्वानुभवावष्टम्भेन" अज्ञानध्वान्तचण्डभास्करसंज्ञं वेदान्तप्रकरणमारभ्यते।

अज्ञानध्वान्तचण्डभास्करः दशभिः परिच्छेदैः संपूर्णोऽयं ग्रन्थः। तत्र जीवेश्वरस्वरूपं, सृष्टितत्त्वं, ज्ञानस्वरूपं, वासनाक्षयसाधनानि जीवन्मुक्तिस्वरूपं, इत्यादिविषयाणि प्रतिपादितानि। तत्र बन्धनिवृत्तिरेव मुक्तिः इति प्रतिपाद्य निवृत्तिश्च, प्राप्तिपूर्विकेति प्रथमं बन्धप्राप्तिं सपरिकरं निरूपयन्, तदुच्छेदोपायाश्च विचारयन्, करालमायाभिधरात्रिशायिनां मूलाज्ञानसंसारापरमहासमुद्रमग्नानां मुमुक्षूणां अज्ञानध्वान्तनिचयमुच्चाटयन् चण्डभास्कर इव भातीति अन्वर्थनाम अयंग्रन्थराजः भवति ग्रन्थोऽयं प्रश्नप्रतिवचनरूपेण गुरुशिष्यसम्भाषणरूपेण च वर्तते। अत्र शिष्यस्य नाम "सौम्य" इति। विषयप्रतिपादनशैली अतीव सरला, गम्भीरा चासीत्। ग्रन्थे तावत् प्रथमतः गद्ये विषयप्रस्तावः कृतः तमेव विषयं "भवन्ति चात्रास्मदीया एव श्लोकाः" इति शीर्षिकया प्रतिपादितवान्। ग्रन्थान्तरेषु बहूनि उदाहरणानि स्वीकृतानि परन्तु ग्रन्थस्य नाम तु न निर्दिष्टम्। दशमे प्रकरणे विद्वत्सन्यासविधेः प्रयोगप्रक्रियाऽपि लिखिता प्रायः वेदान्तप्रकरणग्रन्थेषु एषा प्रयोगप्रक्रिया नूतना स्यात्।

> श्रीदक्षिणामूर्तिकटाक्षवीक्षणप्रध्वस्ततत्त्वावरणेन धीमता ।
> अज्ञानविध्वान्तसुचण्डभास्करः प्रकाश्यते मोहतमोनिवृत्तये ॥
> करालमायाभिधरात्रिशायिभिः
> कर्मातिदुश्शीतविकम्पितात्मभिः ।
> अज्ञानविध्वान्तसुचण्डभास्करो
> मयोदितो विप्रवरैर्विलोक्यताम् ॥

**प्रथमप्रकरणस्य संग्रहपरिचयः :--**

गुरुदेवताचार्यादिप्रणामसमनन्तरं ग्रन्थारम्भसूचनाय "इह जन्मनि

जन्मान्तरे वा सम्यगनुष्ठितवेदोक्तनिष्कामकर्मोपासनाराधिताराध्यपाद श्रीदक्षिणामूर्ति ईश्वर परमानुग्रहपरिशुद्धहृदया" "इत्यारभ्य" स्वानुभवावष्टम्भेनाज्ञानध्वान्तचण्डभास्करसंज्ञं वेदान्तप्रकरणमारम्भमाणः प्रथमं अनुबन्धचतुष्टयं विचारयामः "इति प्रस्तावनां करोति" अनन्तरं बन्धस्य स्वरूपं तु जन्मरोगजरामरणाशनयापिपासा शोक, मोह, राग, द्वेषप्रमातृत्व, कर्तृत्वभोक्तृत्वाद्यनेकविधदुःखसम्बन्धः एवात्मनो बन्धो नाम "इत्युक्त्वा बन्धोऽयं आत्मनः स्वाभाविकौपाधिकरूपविचारे" स्फटिकरक्तिमादिवत् औपाधिक एवांगीकर्तव्यः "इति वदति। २. आत्मनः दुःखसम्बन्धः इति चेत्" **शरीरसम्बन्धादेव दुःखसम्बन्धः भवति।** ३. रागादिसम्बन्धः कथमिति चेत्" सर्वक्श्मलकरण्डभूतान्तःकरणतादात्म्य अभिमानवशादेव भवति। ४. मायायाः निर्वचने "**या मा सा माया, या न विद्यते साऽविद्या**" इति वदति। ५. औपाधिकमूलाज्ञानस्य सदसद्विचारविषये तदेवात्मोपाधिरूपं मूलाज्ञानं सदिति वक्तुं न शक्यते। अधिष्ठानात्मतत्त्वज्ञान निवर्त्यत्वात्। असदित्यपि वक्तुं न शक्यते। व्यष्टिसमष्ट्यात्मकप्रपंचरूपेणावं स्थात्रयरूपेण च दृश्यमानत्वात्। सदसद्विलक्षणं तदित्यवोचाम। अत एव **अज्ञानमनिर्वचनीयम्** इत्यनिर्वचनीयख्यातिवादिनः अस्मदीयाः फणन्ति। ६. मूलाज्ञानस्य निवृत्युपाये यथाहि शैत्याद्वा परि-पैत्याद्वप्राप्तकुक्षिशूलशिरोरोगादिपीडानीवृत्युपायभूतौषधादिसेवया कृतार्थी रोगी न तु तद्रोगागमनकारणचिन्तया। यथा वा गृहदाहकाग्न्युप-शान्तिकरोदकसेकादिना कृतार्थी गृही, न तु तदग्नेः लौकिकत्ववैदिकत्व-चिन्तया। सर्वैरपि प्रकारैः सर्वानर्थहेतुभूतमूलाज्ञाननिवृत्युपाय एव ब्राह्मणेन सम्पादनीयः।

**अविचारकृतो बन्धो विचारेण निवर्तते।**
**न रज्वारोपितः सर्पो घण्टाघोषान्निवर्तते॥**

७. अनुबन्धचतुष्टयविचारे अधिकारिविषयसम्बन्धप्रयोजनभेदात्

चतुर्विधाः अनुबन्धाः। तत्राधिकारी नाम साधनचतुष्टयसम्पन्नः एव। साधनचतुष्टयस्य सम्पत्तिर्नाम नित्यानित्यवस्तुविवेकः, इहामुत्र च कर्मफलभोगविरागः शमादिषट्कसम्पत्तिः मुमुक्षुत्वं चेत्येत साधनचतुष्टयस्य सिद्धिरेव अनुबन्धचतुष्टयत्वं। तत्र नित्यानित्यवस्तुविवेको नाम अधीतसर्ववेदान्ततदुपबृंहकस्मृतीतिहासपुराणानि च यस्य व्युत्पन्नस्य श्रद्धावित्तस्य ब्राह्मणस्य परोक्षापातनिश्चयरूपा जायमाना बुद्धिवृत्तिः एव नित्यानित्यवस्तुविवेकः। **इहामुत्रकर्मफलभोगविरागो नाम** यदात्वात्मव्यतिरिक्तपदार्थजातं दृश्यं सर्वमसत्यमिति विवेचनम्।" इहामुत्रकर्मफलभोगस्य विरागः कीदृशः इति पृथक्तया कोणान्तरे सविमर्शकं विवृणोति। ८. **स्त्रीविषयकनिर्विण्णतां** विचारयन् विवेकिनः पुरुषधोरेयाः विचारकुशलाः प्रज्ञातिशयवन्तः ब्राह्मणास्तु सम्यग्विचार्य कुक्षिमलवत्परित्याजन्ति। यथा मुखश्लेष्मकर्णमलनासिकामलदन्तमलजिह्वा मललालाजलादिसर्वदुर्मलचात्वालं स्तनौ तु केवलं मांसग्रन्थिरूपौ बाहुमूलयोः कक्षरोमस्वेद उदकादिभिः दुर्गन्धः स्पष्टः। उदरं कुक्षिमलं जन्तुजालविदूषितं। ऊरुमूलगतानां दोषाणां गणनैव न विद्यते इति वदन्ति।

९. **कामिनीवासनापरित्यागनिरूपणे।**

**स्रवन्मलपरिक्लिन्ने नवद्वारातिदारुणे।**
**कामिनीकायनरके न पतेद्ब्राह्मणः क्वचित्॥**
**कक्षोपस्थशिरोनासाक्लेशकण्टकसंकटम्।**
**कामिनीकायदुर्वृक्षं नाश्रयेद्ब्राह्मणः क्वचित्।**
**मलमूत्रपिरिक्लिन्ने स्त्रीबिले कामलम्पटाः।**
**रमन्ते ये नमस्तेभ्यो साहसं किमतः परम्॥ इति वदति।**

**पुत्रदोषनरूपणे :--अजायमानस्तनयः पितरं क्लेशयेच्चिरम्।**
**लब्धोऽपि गर्भपातेन प्रसवेन च बाधते॥**
**जातस्य ग्रहरोगादिकुमारस्य च धूर्तता।**
**उपनीतेप्यविद्यस्त्वमनुद्वाहश्च पण्डिते॥**

**यूनश्च परदारादिः दारिद्र्यं च कुटुम्बिनः ।**

**पित्रोः दुःखस्य नास्त्यन्तो धनी चेन्म्रियते तदा ॥ इति ।**

११. **अनर्थसंसारसागरनिरूपणे** अर्थसम्पादनकाले कृषिनाणिज्यसेवा-याचनादिबहुविधमहत्तरसर्वकरणक्लेशवशात् पुरुषस्य प्रभूतमेव दुःखं भवति। तत्संरक्षणकाले स्वपरजनदर्शनभयात् अतिदुःखं स्पष्टमेवोपजायते। किं बहुना राजचोरशत्रुमित्रपुत्रभार्यादिभ्यो धनिकस्य दुःखं न केनापि वर्णयितुं शक्यते इति। १२. कर्मणां तुच्छफलत्वनिरूपणे :--

**कर्मनिष्ठाः स्वयं धीराः मूर्खाः पण्डित्तमानिनः ।**

**मूढाः एव न विद्वांसः तेषां नास्ति परागतिः ॥**

**अन्धेनैव यथा चान्धो नीयमानः सुदारुणे ।**

**अन्धकूपे पतेत्येव यथा कर्मरताः जनाः ॥**

**ये लंघयन्ति संसारसागरं कर्मयज्ञतः ॥**

**ते महातमसा सर्वं पश्यन्नेव रविं विना ॥ इति ॥**

१३. **उपासकानां मोक्षविचारे** सगुणब्रह्मोपासनादिपरिपाकसाध्यानां ब्रह्मलोकवैकुण्ठकैलासानां कथं हेयत्वं, तत्र गतानां उपासकानां पुनरावृत्तिराहित्यश्रवणात् इति चेत् शृणु सौम्य । यद्यपि तत्र गतानामुपासकानां पुनःगर्भनरकनिपातः नास्ति । तथापि स तु मोक्षो न भवति । शरीरसम्बन्धस्य सत्वात् । उपासकानां सूर्यमण्डलं, चन्द्रमण्डलं च भित्वा ब्रह्मलोकान् गत्वा तत्र ईश्वरादिसन्निधौ ब्रह्मात्मापरोक्षसम्यग्ज्ञानमवाप्य यावत्कल्पं तत्र सुखेन स्थित्वा महाप्रलये निर्विशेषचरमकारणब्रह्मस्वरूपमात्रावस्थानरूपपरममोक्षस्य प्रतिपादितत्वात् इति । १४. **दृंमात्रं सर्वं अनित्यत्वनिरूपणे** न च वैकुण्ठादिलोकानां प्रलयेऽपि ध्वंसो नास्तीत्याशंकनीयम् । न हि स्वप्नपरिदृष्टपदार्थाः केचिन्नित्याः परिदृश्यन्ते। ब्रह्माण्डदाहकप्रलयाग्निः ब्रह्माण्डाद्बहिरवस्थितं वैकुण्ठलोकादिकं न स्पृशतीति केचिन्मुर्खाः प्रलपन्ति। तदेतत् भ्रान्तप्रलपितम्।

प्रलयाग्निः वैकुण्ठादिकं न स्पृशतीति कोऽयं नियमः । नहि पुरदाहकोऽग्निः पूर्दैवीकुटीरमात्रमवशेषयति तस्मादनित्यमेव सर्वं दृश्यजातं । १५. शरीरमेव महाद्दुःखमिति निश्चयेन निरूपणे -- केचन कर्मठाः उपासकाः च पुण्यलोकान् प्रशंसन्ति चेत् प्रशंसन्तु कामम्

**वानराणां विवाहेषु गर्दभाः एव गायकाः ।**
**परस्परं प्रशंसन्ति ह्यहोरूपमहोध्वनिः ॥ इति ।**

न्यायोऽत्रानुसन्धेयः विवेकिभिः । किं बहुना शरीरमेव महद्दुःखं शरीरोपभोग्याः स्त्री अन्नपानादिब्रह्मलोकान्ताः विषयाश्च विषवत्परित्याज्याः इति ।

१६. शमादिषट्कनिरूपणे शमो नाम :-- स्रक्चन्दनवनितादिविषयेभ्यः प्रतिपादितदोषदृष्ट्या मनस्स्वभावप्रवृत्तं निवर्तयित्वा स्वस्वरूपब्रह्मविचारे मनसः अवस्थानमेव। एवं विधशमवानेव ब्राह्मणो ब्रह्म जानाति ~~नान्यः~~ । दमो नाम :-- शब्दादिविषयेभ्यः श्रोत्रादिसर्वेन्द्रियाणि निवर्तयित्वा स्वात्मविचारे मनसा सह सर्वेन्द्रियाणां संयोजनमेव। उपरतिर्नाम :-- ज्ञानेन्द्रियाणि, कर्मेन्द्रियाणि च स्वस्वविषयेभ्यो मनसा सह निवर्तयित्वा श्रवणमनननिदिध्यासनान्येव पुरुषार्थत्वज्ञानसाधनानीति मत्वा तदर्थं सर्वव्यापारपरित्यागः एव । तितिक्षा नाम :-- शीतोष्णसुखदुःखमानावमानादिद्वन्द्वसहनमेव भवति । आत्मसमाधानं नाम :-- आत्मविचाररूपे श्रवणे श्रवणांगयोः मनननिदिध्यासनयोश्च मनः समाधाय विक्षेप दुःखरहिततया मनसोऽवस्थानमेव । श्रद्धा नाम :-- गुरुवेदान्तवाक्येषु विश्वास एव ।

१७. मुमुक्षुत्वविचारे "बहूपवासकृतांगस्य क्षुधातुरस्य मुमूर्षोः विवाहाद्यासक्तिं विसृज्य केवलभो जनापेक्षावत् संसारानलतापसन्तप्त हृदयस्य सर्वतो निर्विण्णस्य मुमूर्षोः ब्राह्मणस्य भोगेच्छां परिहृत्य जायमाना मोक्षेच्छैव । एवंविध साधनचतुष्टयसम्पन्नः एव ब्राह्मणः ब्रह्मात्मविचाररूपवेदान्तश्रवणे अधिकारी । विषयो नाम :-- शास्त्रस्य

प्रत्यग्ब्रह्मैक्यमेव। सम्बन्धो नाम :-- वेदान्तशास्त्रस्य प्रत्यग्ब्रह्मैक्यस्य च प्रतिपाद्य एव। प्रयोजनंनाम - प्रत्यग्ब्रह्मैक्यावरकाज्ञाननिवृत्तिपूर्वक-निजबिम्बानन्दलाभः एव।

> **कम्भम्पाटिकुलजलधिपूर्णेनामरेश्वरशास्त्रिणा।**
> **प्रसादाद्दक्षिणामूर्तेः कृतं बन्धचतुष्टयम्॥**

**द्वितीयप्रकरणस्य संग्रहपरिचयः :--**

> **विज्ञापयामि यत्किंचित्त्यक्तलज्ञा मनोगताम्।**
> **बुद्धिशुद्ध्यै मया सम्यग्जीवेशौ च विचार्यते॥**

१. **उपासकभेदेन तन्मतविचारे** :-- "हिरण्यगर्भोपासकाः" केचिदुद्गीथ-ब्राह्मणप्रामाण्यात् सर्वसूक्ष्मशरीरेष्वापूर्यावस्थितं चैतन्यं हिरण्यगर्भः। स एव जगत्कारणं ईश्वरः इत्युपासते। "विराडुपासाकास्तु" सर्वस्थूलशरीरेष्वभिव्याप्यावस्थितं चैतन्यं विराट्, स एव ईश्वर इति वर्णयति। केचन "प्रजापतिं" चतुर्मुखं ईश्वरत्वेन वर्ण्यन्ते। भागवताः रामानुजमतानुवर्तिनस्तु :-- विष्णुनाभिकमलात् एव सृष्टिकर्ता चतुर्मुखः समुत्पन्नः इति विष्णुरेवेश्वरः इत्याहुः। शैवास्तु शिवस्य पादं द्रष्टुं विष्णुः न समर्थः अभवत् अतः शिव एव जगत्कारणमित्युपासते, गाणपत्याः शिवः त्रिपुरासुरसंहारं कर्तुमुद्युक्तः सन् गणपतिं पर्यपूजयत् इत्यादिरीत्या गणपतिरेव जगत्कारणमित्युपासते। २. **मौढ्योपासनाविचारे** "केचन जनाः भैरवादीनर्चयन्ति। ततोऽपि केचित्तामसाः प्रेतभूतगणान् पूजयन्ति। अन्ये च गवाश्वादीन्, गरुडादिपक्षिणश्च, अश्वत्थशमीतुलसीबिल्वादिवृक्षान् पूजयन्ति। अपरे तु सम्भ्रान्ताः मृद्दारुशिलाविग्रहानुपासते। अपरे तु कष्टकर्मरताः पुरुषवराकाः कुद्दाललांगलादीन् देवताबुद्धया अर्चयन्ति। लोके एवं विधजपध्यानपूजाहोमपूजादिभिः स्वयं वंचिताः पुरुषार्थविभ्रष्ठाः अपि धनिकजनानां सकाशे स्वव्यापारं प्रदर्श्य अपूर्वपुण्यसम्पादनबुद्ध्या सोदाहरणपूर्वकं तेषां उपदिशन्तः उभावपि अश्रुतग्रन्थौ उभावपि जडात्मकौ अहो मोहस्य माहात्म्यं तत्रैकः शिष्यतां गतः। ३. जीवात्मविचारे --

पुत्रादिलोकदेहान्ताः कारणव्यक्तसंज्ञिकान्।
अर्थानामेव सर्वत्र ब्रह्मानन्दोविजृम्भते ॥
पुत्रभार्यादयो लोकाः दुःखरूपातिदारुणाः।
देहेषु भोगसिद्ध्यर्थं प्रेमालम्बनतां गताः ॥
स्वतो दुःखभयो देहः विनाशोत्पत्तियोगतः।
मनः प्रीतिकरत्वेन प्रेमालम्बनतां गतः ॥
देहं केचिद्वदन्ति खानि चापरे प्राणात्मनश्चापरे।
बुद्धिदं च क्षणिकां स्थिरामथ परे चिद्ब्रह्मडं चेतरे ॥
आत्मानं जडचित्स्वभावमपरे चिद्ब्रह्मडं चेतरे।
सत्यज्ञानसुखाद्वितीयमपरे तत्रास्य को निश्चयः ॥
आहुः केचिदणुं शरीरसदृशं केचिद्विभुं ते परे।
ते तं मानसगोचरं तदपरे नित्यानुमेयं जगुः ॥
अन्ये चिद्विषयं परे तु परमस्वज्योतिराभ्यन्तरम्।
सत्येवं श्रुतियुक्तिभिः विविदिषो युक्तो विचारो मुहुः ॥
स्वदेहे शोभनं सन्तं पुरुषाख्यं च सम्मतम्।
किं मुर्ख शून्यमात्मानं देहातीतं करोषि भो ॥
स्वात्मानं शृणु मूर्खस्त्वं श्रुत्या युक्त्या च पूरुषम्।
देहातीतं सदाकारं सुदुर्दशां भवादृशैः ॥
कम्भम्पाटिकुलजलधिपूर्णेनामरेश्वरशास्त्रणा।
प्रसादाद्दक्षिणामूर्तेः कृतं जीवेशविचारकम् ॥

तृतीयप्रकरणस्य संग्रहपरिचयः :--

विज्ञापयामि यत्किंचित्यक्तलज्ञामनोगताम्।
प्रसादाद्दक्षिणामूर्तेः क्रियते जीवेशरूपकम् ॥

१. उत्पत्तिप्रारम्भविचारे :-- "ब्रह्मैव स्वाविद्यया संसरति" "अस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत्" (श्वेता. ४-१०) इति सत्वरजस्तमोगुणात्मकं सर्वप्राणिकर्मक्षये

सति स्वकार्यसमस्तदृश्यप्रपंचं स्वस्मिन् विलीनं कृत्वावस्थितम्। सर्वसुषुप्तिसमष्टिरूपं, समस्तप्रपंचवासनामयं, अविद्याज्ञानाव्यक्ततमः सुषुप्त्यादिशब्दवाच्यम्, अनाद्यनिर्वचनीयं मायातमः तम इवाकाशे अध्यस्तमासीत्। तस्यां च सत्वसमष्टिरूपशुद्धसत्वप्रधानायां मायायां परमकारणं, अधिष्ठानसाक्षीभूतं, स्वप्रकाशं, ब्रह्मचैतन्यं, प्रतिफलितं भूत्वा जगद्बीजभूतं सद्व्रीहियवादिनानाविधबीजसमष्टिगर्भभूमण्डलं इवाव्यक्तं च सदीश्वरः इत्यभिधीयते। २. ईश्वरः तत्स्वरूपविचारः जगदंकुररूपसूक्ष्मशरीरसमष्ट्याकारपरिणतमायोपाधिकं हिरण्यगर्भचैतन्यं, तदेव सूक्ष्मशरीरसमष्टिभूतभौतिकप्रपंचाकारपरिणतमायोपाधिकं सत् सर्वतः सफलस्य गर्भभूमण्डलमिव स्पष्टतमं सद्विराडिति व्यवह्रियते। अयमेव विराट् तत्तद्व्यापारोन्मुखः सन् विश्वनराभिमानत्वात् वैश्वानरः इति तत्तद्व्यापारफलभाग्भूतत्वात् वैराज इति चाभिधीयते। ३. जीवात्मनोः विचारे :-- जीवात्मा नाम ईश्वरोपाधिभूताविद्यासमष्टिरूपमायैकदेशव्यष्ट्यविद्योपाधिकं ब्रह्म भूतं कूटस्थचैतन्यमेव। स एव जीवः जाग्रत्स्वप्नभोगप्रदकर्मक्षये सति, जाग्रत्स्वप्नवासनाग्रसनशीलः, केवलसुषुत्प्युपाधिकः प्राज्ञः इत्युच्यते। स एव प्राज्ञसंज्ञो जीवः स्वाध्यस्ताविद्योपाधिपरिच्छिन्नत्वात् अवच्छिन्न इति जाग्रत्स्वप्नप्रपंचाबाधितत्वात् पारमार्थिकः इति चाभिधीयते --

**जीवेशतैजसप्राणः विश्ववैराजरूपिणः ।**
**तेषां षण्णां विहारार्थं समष्टिव्यष्टिभेदतः ॥**
**कम्भम्पाटिकुलजलधिपूर्णेनामरेश्वरशास्त्रिणा ।**
**प्रसादाद्दक्षिणामूर्तेः कृतं जीवेशरूपकम् ॥**

**चतुर्थप्रकरणस्य संग्रहपरिचयः :--**

**गुरुश्रीचरणद्वन्द्वं ब्रह्मज्योतिर्मयं जगत् ।**
**तत्स्वरूपं यथा चित्तं क्रियते सृष्टिरूपकम् ॥**

जगत्कर्ता ईश्वरः। जगद्भोक्तुः जीवस्योपभोगार्थं अनात्मप्रपंचविस्तारं असृजदिति लोकवेदप्रसिद्धेः तामेव सृष्टिं विचारयामः।

१. पंचीकरणविचारे :-- "आकाशावच्छिन्नचैतन्यात् स्पर्शगुणको वायुः, वाय्वच्छिन्नचैतन्यात् रूपगुणकं तेजः। तेजोऽविच्छिन्नचैतन्यात् रसगुणकं जलम्। जलावच्छिन्नचैतन्यात् गन्धगुणका पृथिवी इत्येतानि पंचसूक्ष्मभूतानि, सत्वरजस्तमोगुणात्मकानि, अपंचीकृतानि ग़ःमुत्पन्नानि। आकाशादिपंचभूतप्रत्येकं सत्वांशेभ्यः क्रमेण दिग्वातार्क प्रचेतोश्वरूपाभिः अधिष्ठानदेवताभिस्सह श्रोत्रत्वक्चक्षुरसनाघ्राणाभिधानि पंचज्ञानेन्द्रियाणि आसन्।"

पंचभूतसत्वसमष्टेः चन्द्रचतुर्वक्त्ररुद्रक्षेत्रज्ञरूपाभिः अधिष्ठानदेवताभिस्सह मनोबुद्ध्यहंकारचित्ताभिधं अन्तःकरणचतुष्टयं अभवत्। आकाशादि पंचभूतप्रत्येकं रजोऽशेभ्यः क्रमेण वह्नीन्द्रोपेन्द्रमृत्युप्रजापतिरूपाभिः अधिष्ठान देवताभिस्सह वाक्पाणिपादपायूपस्थारूपाणि पंचकर्मेन्द्रियाणि जातानि। पंच भूतरजस्समष्टेः (विशिष्टविश्वकर्तुविश्वयोन्यजजयरूपाभिः अधिष्ठानरूपाभिः) प्राणादिपंचकमुत्पन्नं। इयमेवापंचीकृतभूतकार्यसूक्ष्मप्रपंचसृष्टिः। २. पंचीकरणप्रकारविचारः :-- आकाशादिपंचभूततमोशेषु एकैकं भूततमोशं द्वैधा विभज्य एकमर्थभागमवस्थाप्य (द्वितीय मर्थभागं चतुर्था विभज्य) प्रथमतः अवस्थापितेन आकाशादिभूततमोंशार्धभागेन सह स्वांशं विहायावशिष्टानां वाय्वादिभूततमोंशद्वितीयार्थभागानां चतुर्थाविभक्तानां मध्ये एकस्मिन्नेकस्मिन्नंशं जीवादृष्टसहायेन ईश्वरेण संयोजिते सति पांचभौतिकानि पंचीकृतानि स्थूलभूतानि भवन्ति इति ३. प्रासंगिकलयविचारे :-- प्रसंगात् लयोऽपि संक्षिप्य प्रदश्र्यन्ते। सर्वप्राणिकर्मक्षयसमये प्राप्ते पृथिवीस्वकारणे जले विलीयते। जलं स्वकारणे तेजसि, तेजः स्वकारणे वायौ, वायुः स्वकारणे चाकाशे, आकाशः स्वकारणे अव्यक्ते विलीयते, अव्यक्तं च परमकारणे परस्मिन् ब्रह्मणि विलीयते।

**पंचमप्रकरणस्य संग्रहपरिचयः** :-- १. को वाऽहमिति स्वात्मविचारे देवतिर्यंमनुष्यादिजन्तुजालमध्ये पूर्वस्मिन् जन्मनि कोवाऽहमभवं, इदानीं मनुष्यस्सन् ब्राह्मणशरीरं धृत्वावस्थितः अस्मिन् देहप्राणेन्द्रियान्तः-करणादिसंघाते को वाऽहं स्याम्। उत्तरत्र एतच्छरीरपातानन्तरं सुरनरतिर्यगादिषु को वाऽहं भविष्यामि। शुनीशूकरीखरी-महिष्यादिदेववनितान्ताः उच्चावचः सर्वजन्तुजालमूत्रपरिक्लिन्ननानाविधयोनीः प्रविश्य प्रविश्यामेध्यादिपूर्णः, तदीयगर्भरूपविष्ठागर्तनिमज्जनादिक्लेशमनुभूय-अनुभूय तदीययोनिबिलयन्त्रप्रपीडनात् कामपि कष्टतांरा दशां आपन्नः पुनः पुनः ततो विनिर्गत्य एतज्जातीयकजननीस्तन्यपानं पीत्वा पीत्वा प्रवृद्धिं उपगतः जिह्वो पस्थात्युग्रातिदुस्सहमहावेगरूपः कल्पान्तदहनज्वालामाला-दन्दह्यमानमनः पिशाचपरिभ्रामितः अकर्तव्यसहस्रमाचरन् पापमेव संगृह्य दुःखमेवानुभूय चिरं श्रान्तोऽस्मि। २. सांसारिकचिताग्नि-विचारे :-- कदा वा स्यात् मम दुःखस्यान्तः वर्णधर्माश्रमाचारशास्त्रादि-वासनास्तु मामतीव पीडयन्ति। समतीतानन्तरजन्मानुष्टिततत्प्राक्कर्मा-भावेन ताश्च सम्पादयितुम् अप्यशक्ताः। पुण्यमहं कर्तुमसमर्थोऽस्मि पर-दारापरद्रव्यपरहिंसादिचिन्तापरोत्कर्षासहनदम्भदर्पाहंकारममकारादिसर्वदु-र्विवारैः सर्वदा पापमेवाकरवं। कदा वा मम मोक्षः स्यात्। मोक्षोपायभूतं ब्रह्मै-क्यज्ञानं कदा वा मम स्यात्। परिपूर्णब्रह्मस्वरूपं अहमर्थतयावलोक्य जीव-न्मुक्तः सन् कदा वा विश्रान्तिं एष्यामि। मधुनीवपुष्परसः कदा वा ब्रह्मानन्दा-मृते विलीनः स्याम्। इत्यनुतापतप्तहृदयस्य, सर्वतो निर्विण्णस्य, आत्मज्ञानार्थिनः, उत्तमाधिकारिणः, ब्राह्मणस्याध्यस्थपंचकोशतदधिष्ठानात्म-भेदविचारः एव परमपुरुषार्थभूतमोक्षसाधनब्रह्मात्मैक्याज्ञानमहोपायः नान्यः इति तदर्थं पंचकोशाः विचार्यन्ते। तेतु १. अन्नमय, २. प्राणमय, ३. मनोमय, ४. विज्ञानमय, ५. आनन्दमयाः एव पञ्चकोशाः। ३. **अन्नमयकोशविचारे** पृथिवीसमुत्पन्नाभ्यः व्रीहियवाद्यौषधीभ्यः अन्नरूपाभ्यः स्त्रीपुरुषनिषेवितेभ्यः स्त्रियां लोहितं पुरुषे शुक्लं च जायते। ताभ्यां च लोहितशुक्लाभ्यां

उद्रिक्तकामव्यसनपीडितौ स्त्रीपुरुषावन्योन्यं योनिमेद्रसंस्पर्शं कुर्वाते। ततश्च कालकर्मसम्बन्धनिबन्धनं ऋतुकाले पुरुषशरीरगतं शुक्लं मेद्रद्वारा विनिस्सृतं योनिद्वारा स्त्रीगर्भाशयं प्रविश्य शोणितेन सह मिलितं, प्रथमेऽहनि कललाकारं, द्वितीयेऽहनि बुद्बुदाकारोन्मुखं, तृतीयेऽहनि बुद्बुदरूपं च सद्वासरपक्षमासक्रमेण करचरणाद्यवयवसन्निवेशविशिष्टं शरीरं भूत्वा नवमे, दशमे वा मासि जायते। ततः क्षीरसेवादिना प्रत्यहं प्रवृद्धिमुपगतम्। ततः जरारोगमरणादिविदूषितं मांसास्थिमयं इदं स्तम्भवत्परिदृश्यमानं स्थूलशरीरमेवान्नमयकोशः। **४. देहविभ्रमविचारे :--** सर्वदुर्विकारविहीनः, सर्वदुर्विकारग्रस्तस्यास्य शरीरस्य द्रष्टा सन् घटादिव घटद्रष्टास्मच्छरीराद्विभिन्नोऽस्मदीयः नाहमिदं शरीरं न ममेति च विचारयेत् ममेदं मन्दिरं, ममेदं पुस्तकं, ममेदं कंचुकम् इतिवत् ममेदं शरीरमित्यनुभवात्, शरीरादव्यतिरिक्तः सविकारशरीरकल्पनाधिष्ठान भूतः श्रोत्रादिसर्वेन्द्रियद्वारा शरीरतद्धर्माणां साक्षीभूतः शरीरबाह्याभ्यन्तर परिपूर्णः शुद्धचैदन्यप्रकाश एवाहं न शरीरम्।

**मांसास्थिमयनिर्माणदेहोऽहमिति विभ्रमम् ।**
**त्यज संकल्पनिर्माणदेहाः सन्ति सहस्रशः ॥**

**५. प्राणमयकोशे वायुपंचकविचारे :--** "प्राणमयकोशो नाम वाक् पाणिपाद-पायूपस्थरूपपंचकर्मेन्द्रिययुक्तः, प्राणापानव्यानोदानसमानात्मकः प्राणवायुः। नागकूर्मकृकरदेवदत्तधनंजयाख्यावः पंचोपवायवः क्रमेण प्राणादिपंचवायु-ष्वन्तर्भवन्ति। वह्नीन्द्रोपेन्द्रमृत्युप्रजापतिरूपाभिः अधिष्ठानदेवताभिः प्रेरितानि वाक्पाणिपादपायूपस्थारूपाणि पंचकर्मेन्द्रियाणि क्रमेणवचनादानगमन-विसर्गानन्दरूपेषु स्वस्वविषयेषु प्रवर्तन्ते। "अन्योऽन्तरात्मा प्राणमयः" इत्यादि श्रुतेः अयं प्राणमयोन्नमयात् अभ्यन्तरः अन्नमयं आपूर्यावतिष्ठते। क्षुधावानहं, पिपासावानहं, इति प्राणमयतादात्म्यविभ्रमं गताः। प्राणनिर्वाहार्थम् अन्नादिसेवां कुर्वन्तः क्षुप्तिपासापरिहार एव परमपुरुषार्थः इति मन्यमानाः दुष्पूरोदरपूरणार्थं अकार्यसहस्रमाचरन्तः अज्ञाः संसरन्ति। न तु विवेकिनः

। इति परिपूरितो वायुः यथा नाहं दृश्यत्वात् तथा शरीररूप इति विहतेऽपि प्राणवायुः नाहम्। न ममापि किन्तु शरीरस्येवास्यापि द्रष्टा सन् ततः विभिन्नः एवाहं मम प्राणः इत्यनुभवाच्च प्राणमयात् आत्मा विलक्षणः अतिविस्पष्टमेवेतत्। ६. **मनोमयकोशविचारे** :-- मनोमयकोशो नाम वागादिकर्मेन्द्रिययुक्तः सुखदुःखाद्यादिधर्मकः इच्छाशक्तियुक्तः संशयरूपः साभासान्तःकरणवृत्तिविशेषः एव मनोमयकोशः।

अहो स्वामिन् ग्रन्थान्तरेषु श्रोत्रादिज्ञानेन्द्रियाण्येव मनोमयावयवत्वेन प्रतिपादितानि। अत्र तु एवमुपदिष्टं श्रीमद्भिः इति चेत् प्रबुद्धोऽसि ग्रन्थान्तरे मनः कर्मेन्द्रियैः युक्तं सत्कोशः स्यान्मनोमयः इत्युक्तत्वात् मनसः कुर्वद्रूपत्वात् चात्रास्माभिरेवं उक्तम् इत्युभयधाप्यविरोधः। ७. **मनः प्रीतिरेव पुरुषार्थत्वविचारः** :-- "अन्योन्तरात्मा मनोमयः" "तेनैष पूर्णः" इत्यादिश्रुतेः मनोमयः प्राणमयादप्यन्तरः प्राणमयमापूर्यावतिष्ठते। सुख्यहं दुख्यहं इत्यादिव्यवहरन्तो मनोमयतादात्म्यविभ्रान्तिमापन्नाः पामराः स्त्री अन्नपानादिविषयलाभेन तत्कालिकसुखाभासान् दुःखलभ्यांस्तान्सम्पादयन्तो यथाकथंचित् मनः प्रीतिरेव पुरुषार्थः इति मन्यमानाः संसरन्ति। न तु विवेकिनः। ८. **मनोमयकोशसम्बन्धविचारे** :-- चन्द्राधिष्ठानदेवताप्रेरितं मनोरूपं आध्यात्म्यं मन्तव्यरूपाधिभूते प्रवृत्तं सत्कर्मानुरोधेन सुखदुःखौ अनुभवति। नात्राहं किंचिदनुभवामि, आध्यात्माधिदेवाधिभूतत्रितयान् विविक्तः, तत्सर्वकल्पनाधिष्ठानभूतः, मनोमयबाह्याभ्यन्तरपरिपूर्णः कूटस्थाचलनिर्विकारभेदसाक्षिचैतन्यप्रकाश एवाहं न तु मनोमयः। ९. **कोशसम्बन्धभावात्मनः विचारे** :-- मनोमयेन सह मम सम्बन्धः एव नास्तीति सर्वदा मनोमयाद्विभेदेनात्मानं विचारयन्नेव ब्राह्मणः विद्वद्वरः नान्यः।

**अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः।**
**अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः॥**
**इन्द्रियाणि मनो बुद्धिः अस्याधिष्ठानमुच्यते।**

एतैः विमोहयत्येषः ज्ञानमावृत्य देहिनाम् ॥
तस्मात्त्वं इन्द्रियाण्यादो नियम्य भरतर्षभ।
पाप्मानं प्रजहि ह्येनं ज्ञानविज्ञाननाशनम् ॥
मन एव मनुष्याणां कारणं बन्धमोक्षयोः।

इत्याद्याः श्रुतिस्मृतिसहस्राणि स्वानुभवश्चात्मनः मनोमयाद्विभेदे प्रमाणम्। १०. **विज्ञानमयकोशस्वरूपे** :-- विज्ञानमयकोशो नाम श्रोत्रत्वक्चक्षुरसना-घ्राणरूपपंचज्ञानेन्द्रियसंयुक्तः प्रमातृत्वकर्तृत्वाद्यनेकधर्मविशिष्टः, परलोक-गमनागमनसमर्थः, निश्चयरूपसाभासान्तःकरणवृत्तिविशेषः एव विज्ञान-मयकोशः। विज्ञानमयोऽयं मनोमयाभ्यन्तरः मनोमयमभिव्याप्यावतिष्ठते। ११. **कोशीयान्तःकरणादिविचारे** :-- कोशमेतत् सूक्ष्मशरीर प्रधानावयवभूतं अज्ञानकार्यं अन्तः करणमेव जीवोपाधिः। तस्य चान्तःकरणस्य मनोबुद्धि-चित्ताहंकार इति च चत्वारोऽवयवाः। तत्र मनोबुद्धिः तद्व्यापार-सम्बन्धः तावदात्मनः नास्तीति विचारितम्। एवमेव चित्ताहंकार-तद्धर्मसम्बन्धोऽपि आत्मनः नास्त्येव। मम चित्तमहंकारः इत्याद्यनुभवात् चित्ताहंकाराभ्यांआत्मनः तत्साक्षिभूतस्य मनोबुद्धिभ्यां इव विभेदो विस्पष्टः एव। क्षेत्रज्ञरुद्ररूपाधिष्ठानदेवताप्रेरितः चित्ताहंकारः स्मर्तव्याहंकर्तव्य-रूपयोः अधिभूतयोः प्रवर्तते। १२. **कोशाद्विभेदेनात्मस्वरूपविचारे** :-- अहन्तु आध्यात्म्यादिभेदभिन्नप्रपंचस्य द्रष्टा सन् न कुत्रापि प्रवृत्तः, कदाचिदपि चित्ताहंकारतद्व्यापारादिदृश्यप्रपंचे, दृश्यप्रपंचेन सह मम सम्बन्धः एव नास्तीति। सर्वदा विज्ञानमयाद्विभेदेनात्मानं विचारयंन्नेव ब्राह्मणो विद्वद्वरीयोनान्यः। १३. **आनन्दमयकोशविचारे** :-- आनन्दमयकोशो नाम जाग्रत्स्वप्नौ प्रसित्वा जीवोपाधिभूतं अन्तःकरणं स्वस्मिन्विलीनं कृत्वावस्थितं अविद्याज्ञानादिशब्दवाच्यं प्रियमोदप्रमोदादिवृत्तिमद्भोक्तृरूपं साभासव्यष्ट्यज्ञानमेवानन्दमयकोशः। आनन्दमयः विज्ञानमयाभ्यन्तरः विज्ञानमयमापूरयन् अन्नमयादीनां विज्ञानमयान्तानां चतुर्णामपि कोशानां उपादानत्वात् मृदिव घटशरावादीन् सर्वानपि कोशानापूर्यावतिष्ठते।

भोक्ताहं प्रमाताऽहं विमूढोऽहं अज्ञोऽस्मि आनन्दमयतादात्म्यविभ्रान्तिविमूढाः संसरन्ति, नत्वनभिज्ञाः इत्यादिव्यवहरन्तः अनभिज्ञाः। गर्भागारे गाढान्धातमोऽवस्थितं गतमतिवत् मय्यज्ञानं गतम्, अवस्थितं इत्यनुभवात् आनन्दमयादात्मनः तत्साक्षीभूतस्य विज्ञानमयादिव विभेदो विस्पष्टमेवावगम्यते।

क. **अज्ञानेनैव ममान्धकारः** :-- नाप्यानन्दमयेन मिथ्याभूतेन सह सत्यस्य मम मिथ्यारजतेनैव शुक्तेः सम्बन्धः नास्तीति विचारयेत्।

**यथा चन्द्रार्कसंयुक्तं तमस्तदुपलभ्यते।**
**तथा शरीरसंयुक्तं ज्ञानं तदुपलभ्यते॥**

इत्यादिस्मृतेः तमोरूपराहुः सर्वदा विद्यमानोऽपि समयविशेषप्रकाशरूपेणादित्येन चन्द्रमसा इव संयुक्तः एव प्रकाशते। अज्ञानेन सह ममान्धकारादिना इवाकाशस्य सम्बन्धः कदापि नास्तीति सर्वदा आनन्दमयाद्विभेदेनात्मानं विचारयन्नेव ब्राह्मणः विद्वरिष्टः नान्यः।

ख. साक्षीआत्मनोविलक्षणः तथा च परस्परविरुद्ध धर्मवत्वात् गन्धर्वनगरादाकाश इव तमसः प्रदीप इव विषादमृतमिव च अस्मादानन्दमयात् आनन्दमयान्तपंचकोशसम्भूताद्विलक्षणः कूटस्थनिर्वकारासंगनित्योदासीन-सत्यज्ञानानन्देकस्वरूपः एवाहं नान्नमयादित्यतिनिर्विण्णः भूयो भूयो विचारयन् पंचकंचुकसम्वेष्टितः पुरुषः कंचुकाश्रयः कंचुकेभ्यो विभिन्नः इति चक्षुस्सहकृतया बुध्या यथा जानासि। एवं पंचकोशपरिवेष्टितोप्यात्मा तदाश्रयभूतः तत्साक्षीभूतः तेभ्यो विलक्षणः इति सूक्ष्मदर्शी सन् "दृश्यते त्वग्रया बुद्धया सूक्ष्मया सूक्ष्मदर्शिभिः" इत्यादिश्रुतेः विचारसहकृतया सत्वसम्पन्नया बुध्या स्वात्मानं सम्यग्विज्ञाय सुखी भव।

**भूतेभ्यो एव चोत्पन्नं शरीरं पाचभौतिकम्।**
**तस्मात्प्राणमयोह्यात्मा विभिन्नाश्रान्तरे यतः॥**

**षष्ठप्रकरणस्य संग्रहपरिचयः** :-- जीवैश्वरैक्यभावनाविचारे -- प्राज्ञ-

समष्टिरूपेश्वरेकदेशप्रतिज्ञोपाधिभूत ईश्वरोपाधिभूताज्ञानसमष्ठिरूप-मायैकदेशव्यष्ट्यज्ञानं, प्राज्ञसमष्टिरूपेश्वरोपाधिभूतां अज्ञानसमष्टिरूपां मायां च मिथ्येति। समष्ट्यन्तर्भूतात् व्यष्टेः आम्रादिबीजतत्समष्ट्योरिवरात्रापि भेदो नास्तीति च पर्यालोच्य तदुभयसमुपेक्ष्यतदुभयाधिष्ठानसाक्षिचैतन्य-प्रकाशः आम्रादिबीजतत्समष्ट्यवच्छिन्नाकाशः इवैक एवेत्यपि विचार्य स च साक्षिचैतन्यप्रकाशोऽहमेवेत्यनुचिन्तनमेव जीवेश्वरैक्यभावना।

एवमेवावशिष्टिजीवचैतन्यषट्कस्यावशिष्टेश्वरचैतन्यषट्केनसहैक्यमन्त-र्मुखे नास्ति। केन बुद्धिमता यथा योगमवधानादनुसन्धेयम्। यदा तु ज्ञानाभ्यासिनः मुमुक्षोः तव अस्मदुपदिष्टप्रकारेण प्रज्ञादित्रयस्य ईश्वरादित्रयेण सह ऐक्यभावना परिपक्वा स्यात् तदा व्यष्टिसमष्ट्यात्मकमिदं विश्वं मय्येव परिकल्पितम्। अहमेव सर्वप्रपंचकल्पनाधिष्ठानभूतं परमकारणं परं ब्रह्म न मत्तेऽन्यत्किंचिदपि तत्त्वमस्तीति स्वसाक्षिको हृत्तापनिवृत्तिकरः सर्वदुर्वासनाविध्वंसकृत् सम्यगनुभवस्स्यात्।

न शास्त्रश्रवणान्मोक्षः ब्रह्मात्मानुभवं विना ।
न ह्यत्र श्रवणातृप्तिः अन्नादेवमृते नृणाम् ॥
अनुभूतिं विना मूढो वृथा ब्रह्मानुमोदते ।
प्रतिबिम्बितशाखाग्रफलास्वादानुमोदवत् ॥

**सप्तमप्रकरणस्य संग्रहपरिचयः :-- १. अथ ज्ञानस्वरूपविचारे :--**

यथा चन्द्रार्कसंयुक्तं तमस्तदुपलभ्यते ।
तथा शरीरसंयुक्तं ज्ञानं तदुपलभ्यते ॥

यथा भारूपमात्र एव प्रकाशैकस्वभावोऽग्निः सर्वत्रावऽपि वर्त्याद्युपाध्य-संस्पृष्टः अप्रकाशमानस्सन् तैलार्द्रलो हि तशुक्लकृष्णप्रशिथिलतूलावयव-परिणामरूपवर्त्याद्युपाथिकः सत् सम्प्राप्तिदीपादिसंज्ञः सविकारवर्त्यादिकं तदाधारभूतसच्छिद्रसविकारकाचस्थाल्यादिकं च प्रकाशयन् स्थाल्याद्यधि-

करणभूतं सोपकरणं अपवरकमप्यैक्यरुपेण स्वतो निर्विकारः तत्सर्वशुद्धा-शुद्धिहानिवृद्ध्यादिविकारासंस्पृष्टः उदासीनः एक एव स्वसन्निधिमात्रेण प्रकाशयति । एवमेवायमात्मा सर्वपरिपूर्णा - द्वितीयसच्चिदानन्दमात्रः अग्निस्थानीयनिर्विशेषब्रह्मचैतन्यप्रकाशैकस्वभावो निरुपाधिकः सर्वत्राव-स्थितः प्रकाशमानोऽपि । १. पिण्डाण्डे ब्रह्माण्डे च साक्षित्वमात्मानः निर्विवादविचारे :-

जाग्रतत्स्वप्नसुषुप्त्यादिप्रपंचं यत्प्रकाशते ।
तद्ब्रह्माहमिति ज्ञात्वा सर्वबन्धैः प्रमुच्यते ॥

त्रिषु धामसु यद्भोग्यं भोक्ता भागैश्च यद्भवेत् ।
तेभ्यो विलक्षणः साक्षी चिन्मात्रोऽहं सदाशिवः ॥

एकैवात्मैव मन्तव्यो जाग्रत्स्वप्नसुषुप्तिषु ।
स्थानत्रयव्यपेतस्य पुनर्जन्म न विद्यते ॥

इत्यादिश्रुतेः योऽहं सुषुप्तौ किमप्यजानन् सुखमस्वाप्सं स एव स्वप्ने किमपि कष्टमनुभूय इदानीं जागरे निर्भयोऽस्मीति प्रत्यभिज्ञाबलाच्चैतस्यैव शरीरद्रष्टुमात्मनः व्यवहारशालाभ्यवहारशालाशाय्यापवारकादित्रितय-प्रकाशकत्वं एकार्कप्रकाशस्यैव जाग्रत्स्वप्नसुषुप्तिरूपावस्थात्रयप्रकाश-कत्वमपि स्पष्टमेवावगम्यतेति पिण्डाण्डे साक्षित्वमात्मनः निर्विवादमुपपाद-यितुम्। एवमेव ब्रह्माण्डेऽपि पिण्डाण्डेसाक्षिणः एवात्मनः साक्षित्व प्रति-पादनपूर्वकं ब्रह्मत्वं प्रतिपाद्यते अस्माभिः ।

**३. सर्वं साक्षिभास्यम् :- अहो स्वामिन् भित्यादिव्यवहितस्य वस्तुनः :--**

पुरुषान्तरबुद्धिव्यापारस्य च मयानवगतत्वात् कुतो मम सर्वसाक्षित्वं कुतस्तरां ब्रह्मत्वं कुतस्तमां तज्ज्ञानादज्ञाननिवृत्तिद्वारा मोक्षः इति चैत् शृणु सौम्य । सर्वं वस्तु ज्ञाततया वा अज्ञाततया वा साक्षिचैतन्यविषय इति शास्त्रविदां वादान् ज्ञातमज्ञातमिति च द्विप्रकारमेव सर्वं नान्यथा । नह्येतत् बुद्ध्युपाधिकचैतन्येन बुद्ध्यन्तरव्यापारः विशेषतः नावगम्यतः इति एतावदेव

सर्वसाक्षित्वभंगः। तथा चेत् काशीस्थघटोपाधिकादित्यप्रकाशेन कांचीस्थघटो न प्रकाश्यत इति आदित्यप्रकाशेनास्यापि सर्ववस्तुप्रकाशकत्वं न स्यात्।

**४. पंचकोशसाक्षिचैतन्यमपि प्रत्यगात्मैव :--**

किंच श्रोत्रादिपंचेन्द्रियसमधिगम्य पिण्डाण्डस्यशरीरद्रष्टाहमेव। श्रोत्रादिपंचेन्द्रियसमधिगम्य ब्रह्मण्डस्यापि द्रष्टाहमस्मि। न मत्तः पृथग्द्रष्टा नामान्यो नास्ति इति ज्ञात्वा, पिण्डाण्डब्रह्माण्डरूपदृश्यजातं दृगात्मरूपेण च ज्ञात्वा दृगानन्दे सत्ये दृश्यविस्तारमसत्यं च निश्चित्य असत्येऽध्यस्ते दृश्ये सत्यमधिष्ठानं दृगात्मानं मरुवारुणि मरुभूमिमिवालोक्य सत्येऽधिष्ठाने दृगात्मन्यसत्यमध्यस्तं दृश्यं (मरुभूमौ मरुवारिवद्विचार्य सत्यमध्यस्तं दृश्यं सत्याधिष्ठानदृग्रूपं तद्वदेव मत्वा सत्यात्मन्यसत्यं दृश्यम्) कालत्रयेऽपि मरुवारिवन्नास्तीति निश्चित्य सर्वदृश्य - निराशे यदेकमवशिष्टं परमकारणमद्वितीयाधिष्ठानचैतन्यानन्दसन्मात्रस्वरूपं तदेवाहमस्मीति एवमाकारनिश्चयः एव सम्यग्ज्ञानम्।

**५. समाधिरेव ज्ञानं इति विकल्प्य खण्डनम् :--**

अथ केचिद्भ्रान्ताः प्रलपन्ति। समाधिरेव ज्ञानम् इति। तत्सिध्येनैव मोक्ष-सिद्धिः, न तु केवलतत्वसाक्षात्कारमात्रादिति। तत्रेवं विचारणीयम्:-- कोऽयं समाधिर्नाम तूष्णीमवस्थितिर्वा, केवलाद्वैतविस्मृतिर्वा, तत्त्वस्मृतिसहिता सा वा उत, तत्त्वसाक्षात्कार एव वा। नाद्यः मूर्खाणामपि मोक्षापत्तेः। तेषामपि क्वचित्तूष्णीमवस्थानमसम्भवात्। न द्वितीयः कीटादिविरिच्यन्तानां सर्वेषामपि प्राणिनां पुरुषप्रयत्नमन्तरेणापि मोक्षसिद्धेः, मोक्षशास्त्रानर्थक्यापत्तेः, सर्वेषामपि प्रत्यहं सुषुप्तौ द्वैतविस्मृतिसम्भवाच्च। न तृतीयः महिषाश्वादीनां अप्यर्थसमाधिलाभात् ईषन्न्यूनकृतार्थतापत्तेः तेषां तत्त्वस्मृत्यभावेऽपि द्वैतविस्मृतेः सर्वसम्मतत्वात्। योगाभ्यासवतां पुरुषाणां प्रारब्धाधीनैहिकव्यापाराणां यथाकथंचित् विक्षेपप्रसक्तेः सर्वात्मना द्वैतविस्मृतेः जीवद्दशायां सम्पादयितुमशक्यत्वात् अर्थसमाधित्वस्यापि

अभावप्रसंगाच्च। न च तेषां तत्वस्मृतिसम्भवात् अर्थसमाधित्वं अविकलितमिति वाच्यम्। पूर्णसमाधेः कल्पकोटिशातैरपि असम्पाद्यत्वेन मोक्षसिद्धेः। तस्मान्न श्रोतव्यं एतन्मूर्खप्रजल्पितं मुमुक्षुभिः।

**अष्टमप्रकरणस्य संग्रहपरिचयः :-- १. वासनाक्षयविचारः :--**

अथ वासनाक्षयं विचारयामः। बहुकालमारभ्यश्रवणमननिदिध्यासनानुष्ठानं कुर्वन्तोऽपि अधिकारिणः ब्राह्मणाः ब्रह्मसाक्षात्काराभावेन संसारबद्धाः एव दृष्टाः इति श्रवणादीनां ज्ञानसाधनत्वमन्वयव्यभिचारात् कथमभ्युपगन्तव्यं इत्युक्तं तेषामधिकारिणां वासनाक्षयरूपसहकार्यभावेन शीघ्रं ज्ञानं नोत्पद्यत इति। तदेवमीश्वरप्रसादपरिलब्धेश्वररूपश्रीगुरुवरश्रीचरणपरिचरणनिपुणं अधीतसर्ववेदान्तविद्यं निन्यानित्यवस्तुविवेकसम्पन्नम्।

यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः।
अनेकचित्तविभ्रान्ताः मोहजालसमावृताः॥

प्रसक्ताः कामभोगेषु पतन्ति नरके अशुचौ।
आत्मसम्भाविताः स्तब्धाः धनमानमदान्विताः॥

यजन्ते नमस्तेभ्यः दम्भेनाविधिपूर्वकम्।
एवं लोकं परं पश्येन्नश्वरं कर्मनिर्मितम्॥

दुर्गन्धं क्रिमिसंयुक्तं चण्डालगृहपातिनम्।
काकमांसं शुनोच्छिष्टं स्वल्पं तदपिदुर्लभम्॥

अर्थानामार्जने दुःखं आर्जितानां च रक्षणे।
रक्षितानां व्यये दुःखं धिगर्थाः दुःखकारिणः॥

ब्राह्मणस्य च देहोऽयं क्षुद्रकामाय नेष्यते।
कृच्छ्राय तपसे चेह प्रेत्यानन्दसुखाय च॥

यः कामान् प्राप्नुयात्सर्वान् यश्च कामान् परित्यजेत्।
प्रापणात्सर्वकामानां परित्यागो विशिष्यते॥

हसद्भिः क्रियते कर्म रुदद्भिरनुभूयते ।
अयुद्धेन हतो वाली तस्येदं कर्मणः फलम् ॥

२. मोक्षार्थीमानसतीर्थसेवनं :--

अत्यन्तमलिनो देहो देही चात्यन्तनिर्मलः ।
उभयोरनन्तरं ज्ञात्वा कस्य शौचं विधीयते ॥

सर्वाः नद्यः सरस्वत्यः सर्वे पुण्याः शिलोच्चयाः ।
ज्ञाजले तीर्थमात्मेव साऽऽस्म देशातिथिर्भव ॥

आत्मतीर्थं परं तीर्थं अन्यतीर्थं निरर्थकम् ।
तत्र ध्यानजलैर्स्नात्वा भवेन्नित्यमतन्द्रितः ॥

तीर्थानि तोयपूर्णानि देवाः पाषाणमृण्मयाः ।
योगिनो न प्रपद्यन्ते स्वात्मध्यानपरायणाः ॥

चित्तमन्तर्गतं दुष्टं तीर्थस्नानैर्नशुध्यति ।
शतशोऽथ बहिर्धौतं सुराभाण्डमिवाशुचिः ॥

आत्मतीर्थं परित्यज्य बाह्ये यो रमते नरः ।
स मूढः कांचनं त्यक्त्वा लोष्टं गृह्णाति सुव्रत ॥

आत्मा नदी संय्यमतोऽयपूर्णा
सत्यहृदा शीलतटादयोर्मिः ।
तत्राभिषेकं कुरु पाण्डुपुत्र
न वारिणा शुद्ध्यति चान्तरात्मा ॥

३. पीडितशरीरस्यौषधसेवनं श्रममात्रपर्यवसन्नव्यापारः :--

वातपैत्यश्लेष्मजन्येषु रोगेषु कोटिशः शरीरमुत्पीडयत्सु सत्सु कियन्त्यौषधानि सेवितुमस्माकं शक्यानि। वृथैव श्रममात्रपर्यवसन्नोऽयं व्यापारः इति विविच्यौषधादिसेवारूपां लौकिकदेहवासनां परित्यजन् अतिचंचलबुद्बुद रक्षायामिव प्रतिक्षणापरिमिताप्रयाससहस्रग्रस्तप्रारब्धमात्रा

धीनशरीरक्षणमपि तथा तथा वास्तु। किमनेन शरीरेण शरीरात्म-चैतन्यप्रकाशरूपस्य ममेत्युपेक्षा बुद्धियुक्तः एव पुरुषः परमसुखी।

नवमप्रकरणस्य विषयसंग्रहः :--

१. जीवन्मुक्तस्वरूपे प्रत्यगभिन्नब्रह्मतत्त्वसाक्षात्कारसम्पन्नः वर्णाश्रमाचारशास्त्रकोलाहलं परित्यज्य कूटस्थनिर्विकारपरिपूर्णाखण्डा - नन्दैक-चैतन्यप्रकाशरूपे प्रत्यगभिन्ने ब्रह्मणि विश्रान्तिसिध्यर्थं चित्तं बालवदुप - लालनपूर्वकं प्रशान्तं कृत्वा दृश्यप्रपंचमिथ्यात्वदृष्ट्या विषयासक्तिविवर्जितः "जक्षन् क्रीडन् स्त्रीभिः यानैर्वा रममाणः" इत्यादिश्रुतेः । शरीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषमित्यादिस्मृतेः । प्रबलप्रारब्धाधीनशरीरचेष्टो निश्चेष्टः पूर्णानन्दात्मस्वरूपदृष्ट्या नित्यसन्तुष्टः अन्तःसुखः अन्तरात्मान्तः-प्रकाशः आत्मरतः, आत्मतृप्तः आत्मसन्तुष्टः दूरीकृतदुरितक्रियः प्रशान्तचित्तः जितेन्द्रियः कृतकृत्यः स्वयं प्रकाशमानः ब्राह्मणः एव जीवन्मुक्तः ।

वासना एव संसारः इति सर्वा विमुंचता ।
तत्त्यागो वा वासनात्यागात् स्थितिरद्य यथासुखम् ॥

न चाध्यात्माभिमानोऽपि विदुषोस्त्यासुरत्वतः ।
विदुषो ऽप्यासुरी चेत्स्यात् निष्फलं ब्रह्मदर्शनम् ॥

ब्रह्माभिन्नत्वविज्ञानं भवमोक्षस्य कारणम् ।
येनाद्वितीयमानन्दं ब्रह्मसम्पाद्यते बुधैः ॥

वेदान्तवाक्येषु सदा रमन्तः भिक्षान्नमात्रेण च तुष्टिमन्तः ।
अहर्निशं ब्रह्मसुखे रमन्तः कौपीनवन्तः खलु भाग्यवन्तः ॥

मूलं तरोः केवलमाश्रयन्तः पाणिद्वयं भोक्तुममन्त्रयन्तः ।
अशोकमन्तःकरणे चरन्तः कौपीनवन्तः खलु भाग्यवन्तः ॥

२. कामादिआशापाशविनिर्मुक्तोपायः :--

बोध एव यमः साक्षात् तृष्णा वैतरणी नदी ।
सन्तोषः नन्दनवनं शान्तिरेव हि कामधुक् ॥

न वैराग्यात्परं भाग्यं स ज्ञानान्दपरं सुखम्।
न गुरोरपरः त्राता न संसारान्परो रिपुः॥

पुरे पौरान् पश्यन् नवयुवतिनामाकृतिमयान्।
सुवेषान् चित्रालंकरणकलितान् चित्रसदृशान्॥

स्वयं साक्षी दृष्टेत्यपि च कलयन्तैः सह रमन्।
मुनि र्न व्यामोहं भजति गुरुदीक्षाक्षततमः॥

तपोयज्ञदानादिभिः शुद्धबुद्धिः,
विरक्तो नृपादो पदे तुच्छबुद्ध्या

परित्यज्य सर्वं यदाप्नोति तत्त्वम्
परं ब्रह्म नित्यं तदेवाहमस्मि॥

आयातमायातमवेक्षणीयं गतं गतं सर्वमुपेक्षणीयम्।
अलं वृथा खेदनमोदनाभ्यां अलंघनीया हि गतिर्विधातुः॥

३. कं जीवन्मुक्तमुच्यते :--

यथा स्थितमिदं यस्य व्यवहारवतोऽपि च।
अस्तंगतं स्थितं व्योम स जीवन्मुक्त उच्यते॥

यो जागर्ति सुषुप्तस्थो यस्य जाग्रन्न विद्यते।
यस्य निर्वासनो बोधः स जीवन्मुक्त उच्यते॥

देहेन्द्रियगुणातीतं स्वात्मानं सर्वसाक्षिणम्।
यो जानाति परं पूर्णं स जीवन्मुक्त उच्यते॥

तदेवाहमिति ज्ञात्वा यद्ब्रह्माण्डप्रकाशकम्।
साक्षी सन् पश्यतीदं यः स जीवन्मुक्त उच्यते॥

पक्ष्मोन्मेषनिमेषाभ्यां उपसंहृत्य चक्षुषी।
ज्ञायते चित्सुखं येन स जीवन्मुक्त उच्यते॥

**दशमप्रकरणस्य संग्रहपरिचयः :--**

**१. सन्यासस्य कः कुत्राधिकारी :--** इह जन्मनि जन्मान्तरे वा सम्यगनुष्ठिते-निष्कामकर्मोपासना - राधिताराध्यपादश्रीमेथादक्षिणामूर्तीश्वरपरमानुग्रह-परिशुद्धमनसः ब्रह्मजिज्ञासुः भूत्वा आचार्यमुपसम्पन्नः सर्ववेदान्तवेद्यं प्रत्यगभिन्नं ब्रह्मतत्त्वं वेदान्तश्रुतिस्मृतिन्यायाभ्यामनुगृहीतैः विचार्य सम्यग् मत्वा तथा ध्यात्वा देहेन्द्रियादिसंघातसाक्षिणं सत्यज्ञानानन्दैकरस-स्वरूपमाकाशवत् सर्वगतमाकाशादपि विस्तीर्णाकाशवदसंगं चिदाकाशं सर्वकल्पनाधिष्ठानभूतमात्मानं ब्रह्मभूय श्रुत्याचार्येश्वरप्रसादात् कृत-कृत्यो विमुक्तो भवति। सर्वदुःखबन्धनादिति हि समस्तवेदान्ततदुप-बृंहकस्मृतीतिहासपुराणागमाभियुक्ततया वचनतात्पर्यं परिसमाप्तम्। तत्र तथाविधस्य ब्राह्मणस्य ब्रह्मनिष्ठस्य व्यापारः चिन्त्यते। गृहे स्थातव्यं उत विदुषा सन्यासः स्वीकार्य इति स्थिते। किन्तावत्प्राप्तं गृहे स्थातव्यमिति प्राप्तं, कुतः विदेहमुक्तिहेतोः प्रत्यगभिन्नब्रह्म-साक्षात्कारस्य सिद्धत्वात् त्यागेन प्रयोजनाभावात्। न च कामक्रोधादि-धीवृत्तिनिवृत्तिरूपजीवन्मुक्तिप्रसिद्ध्यर्थं सन्यासः कर्तव्य इति वाच्यम्। उत्पद्यमानाः रागाद्याः विवेकज्ञानवह्निना "तथा तथैव दह्यन्ते कुत-स्तेषां प्ररोहणं" इत्यादिना कामादिनिवृत्तेः ज्ञानसाध्यत्वांगीकारात्।

**२. विद्वत्सन्यासस्वीकारे प्रमाणम् :--**

**निरस्तातिशयज्ञानी याज्ञवल्क्यो यथा गृहे।**
**कैवल्याश्रममास्थाय प्राप तद्वैष्णवं पदम्॥**

इत्यादिना ब्रह्मविद्भिः विद्वित्सन्यासस्यानुठितत्वेन प्रतिपादितत्वाच्च। ज्ञान - दीक्षातपस्सत्यसम्वाद्दुःखसंक्षयसुखाविर्भावरूपप्रपंचप्रयोजनवज्जीव-न्मुक्तिसाधनत्वा - च्चावश्यं विदुषा सन्यासः कर्तव्यः। तत्कर्तव्यतायां च श्रुतयः सहस्रशः प्रतिशाखां वर्तन्ते यथा - तैत्तिरीयशाखायां "त्यागे-नैकेनैवामृतत्वमानशुः" "न्यास एवात्यरेचयत्" ( ) इति वल्लभशा-खायां :--

त्याग एव हि सर्वेषां मोक्षसाधनमुत्तमम्।
त्यजतैव हि तज्ज्ञेयं त्यक्तः प्रत्यक्परं पदम्॥

ततः सर्वाणि कर्माणि सन्यासस्यात्मावबोधतः।
हत्वाविद्या धियैवेयात्तद्विष्णोः परमं पदम्॥

अथर्वणशिखायाम् :--

सशिखां वपनं कृत्वा बहिःसूत्रं (ब्रह्मसूत्रं) त्यजेद्बुधः।
यदक्षरं परं ब्रह्म तत्सूत्रमिति धारयेत्॥

शाखान्तरे :--

कुटुम्बपुत्रदारांश्च वेदांगानि च सर्वशः।
यज्ञं यज्ञोपवीतं च त्यक्त्वा गूढं चरेन्मुनिः॥

काठकायाम् :--

यज्ञोपवीतं वेदांश्च सर्वं तद्वर्जयेद्यतिः।

जाबालोपनिषदि :--

अथ परिव्राड्विवर्णवासामुण्डो परिग्रहः।
शुचिरद्रोही चैकाकी ब्रह्मभूयाय भवतीति॥

मैत्रायणशाखायां :--

अथ परिव्राडेकशाठी - परिवृतः कमण्डुलोदकपात्रपादचारीनित्यो भिक्षार्थी ग्रामं प्रविशेदासाय्। प्रदक्षिणेनाविचिकित्सन् सार्ववर्णिकं भैक्षाचर्यभिशः तपतितः वर्ज्यमययज्ञोपवीती शौचनिष्ठः काममेकं वैणवं दण्डमादधतीति। एवमेवानेकश्रुतिस्मृतीतिहासपुराणादिषु उपबृंहितत्वात् उपशान्तिसुखरसिकेन ब्राह्मणेन ब्रह्मनिष्ठेन चित्तविश्रान्तिसिद्ध्यर्थं लौकिकवैदिकसर्वकर्मपरित्यागरूपः विद्वत्सन्यासः अवश्यं कर्तव्यः।

४. विद्वत्सन्यासविधिः :--

शौचमाचमनादीन् कृत्वा पादौ प्रक्षाल्य (आतुरसन्यासविधिः)।

**दशमप्रकरणस्य संग्रहपरिचयः :--**

**१. सन्यासस्य कः कुत्राधिकारी :--** इह जन्मनि जन्मान्तरे वा सम्यगनुष्ठिते-निष्कामकर्मोपासना - राधिताराध्यपादश्रीमेधादक्षिणामूर्तीश्वरपरमानुग्रह-परिशुद्धमनसः ब्रह्मजिज्ञासुः भूत्वा आचार्यमुपसम्पन्नः सर्ववेदान्तवेद्यं प्रत्यगभिन्नं ब्रह्मतत्त्वं वेदान्तश्रुतिस्मृतिन्यायाभ्यामनुगृहीतैः विचार्य सम्यग् मत्वा तथा ध्यात्वा देहेन्द्रियादिसंघातसाक्षिणं सत्यज्ञानानन्दैकरस-स्वरूपमाकाशवत् सर्वगतमाकाशादपि विस्तीर्णाकाशवदसंगं चिदाकाशं सर्वकल्पनाधिष्ठानभूतमात्मानं ब्रह्मभूय श्रुत्याचार्येश्वरप्रसादात् कृत-कृत्यो विमुक्तो भवति। सर्वदुःखबन्धनादिति हि समस्तवेदान्ततदुप-बृंहकस्मृतीतिहासपुराणागमाभियुक्ततया वचनतात्पर्यं परिसमाप्तम्। तत्र तथाविधस्य ब्राह्मणस्य ब्रह्मनिष्ठस्य व्यापारः चिन्त्यते। गृहे स्थातव्यं उत विदुषा सन्यासः स्वीकार्य इति स्थिते। किन्तावत्प्राप्तं गृहे स्थातव्यमिति प्राप्तं, कुतः विदेहमुक्तिहेतोः प्रत्यगभिन्नब्रह्म-साक्षात्कारस्य सिद्धत्वात् त्यागेन प्रयोजनाभावात्। न च कामक्रोधादि-धीवृत्तिनिवृत्तिरूपजीवन्मुक्तिप्रसिद्ध्यर्थं सन्यासः कर्तव्य इति वाच्यम्। उत्पद्यमानाः रागाद्याः विवेकज्ञानवह्निना "तथा तथैव दह्यन्ते कुत-स्तेषां प्ररोहणं" इत्यादिना कामादिनिवृत्तेः ज्ञानसाध्यत्वांगीकारात्।

**२. विद्वत्सन्यासस्वीकारे प्रमाणम् :--**

**निरस्तातिशयज्ञानी याज्ञवल्क्यो यथा गृहे।**
**कैवल्याश्रममास्थाय प्राप तद्वैष्णवं पदम्॥**

इत्यादिना ब्रह्मविद्भिः विद्वित्सन्यासस्यानुठितत्वेन प्रतिपादितत्वाच्च। ज्ञान - दीक्षातपस्सत्यसम्वाद्दुःखसंक्षयसुखाविर्भावरूपप्रपंचप्रयोजनवज्जीव-न्मुक्तिसाधनत्वा - च्चावश्यं विदुषा सन्यासः कर्तव्यः। तत्कर्तव्यतायां च श्रुतयः सहस्रशः प्रतिशाखां वर्तन्ते यथा - तैत्तिरीयशाखायां "त्यागे-नैकेनैवामृतत्वमानशुः" "न्यास एवात्यरेचयत्" ( ) इति **वल्लभशा-खायां :--**

त्याग एव हि सर्वेषां मोक्षसाधनमुत्तमम्।
त्यजतैव हि तज्ज्ञेयं त्यक्तः प्रत्यक्परं पदम्॥

ततः सर्वाणि कर्माणि सन्यासस्यात्मावबोधतः।
हत्वाविद्या धियैवेयात्तद्विष्णोः परमं पदम्॥

अथर्वणशिखायाम् :--

सशिखां वपनं कृत्वा बहिःसूत्रं (ब्रह्मसूत्रं) त्यजेद्बुधः।
यदक्षरं परं ब्रह्म तत्सूत्रमिति धारयेत्॥

शाखान्तरे :--

कुटुम्बपुत्रदारांश्च वेदांगानि च सर्वशः।
यज्ञं यज्ञोपवीतं च त्यक्त्वा गूढं चरेन्मुनिः॥

काठकायाम् :--

यज्ञोपवीतं वेदांश्च सर्वं तद्वर्जयेद्यतिः।

जाबालोपनिषदि :--

अथ परिव्राड्विवर्णवासामुण्डो परिग्रहः।
शुचिरद्रोही चैकाकी ब्रह्मभूयाय भवतीति॥

मैत्रायणशाखायां :--

अथ परिव्राडेकशाठी - परिवृतः कमण्डुलोदकपात्रपादचारीनित्यो भिक्षार्थी ग्रामं प्रविशेदासाय्। प्रदक्षिणेनाविचिकित्सन् सार्ववर्णिकं भैक्षाचर्यभिशः तपतितः वर्ज्यमययज्ञोपवीती शौचनिष्ठः काममेकं वैणवं दण्डमादधतीति। एवमेवानेकश्रुतिस्मृतीतिहासपुराणादिषु उपबृंहितत्वात् उपशान्तिसुखरसिकेन ब्राह्मणेन ब्रह्मनिष्ठेन चित्तविश्रान्तिसिद्ध्यर्थं लौकिकवैदिकसर्वकर्मपरित्यागरूपः विद्वत्सन्यासः अवश्यं कर्तव्यः।

४. विद्वत्सन्यासविधिः :--

शौचमाचमनादीन् कृत्वा पादौ प्रक्षाल्य (आतुरसन्यासविधिः)।

देशकालादीनुच्चार्य मम समस्तपाप (दुरित) क्षयद्वारा ब्रह्मानन्दावाप्त्यर्थं आतुरसन्यासं स्वीकरिष्ये इति संकल्प्य तीर्थदेशं गत्वा उदकमुद्धृत्य पात्रद्वयं गृहीत्वा दक्षिणेन पाणिना उदकपूर्णमेकं पात्रमादाय "एष वा अग्नेः प्राणः प्राणं गच्छ, स्वां योनिं गच्छस्वाहेत्यप्सु जुहुयात्" "आपो वै सर्वाः देवताः अद्भ्यो जुहोति स्वाहेति द्वितीयाहुतिं चाप्सु जुहुयात् पात्रस्थाद्याहुतिशेषतोयं "आशुश्शाशानः" इत्यनुवाकेन अभिमन्त्र्य तदुदकं किंचिद्धस्ते गृहीत्वा पुत्रेषणा, वित्तेषणा, लोकेषणादयः मया त्यक्ताः स्वाहेति प्रथमं पिबेत्। अभयं सर्वभूतेभ्यः मत्तः स्वाहेति द्वितीयं पिबेत्" "शेषमुदकं समादाय" ओंभूर्भुवस्सुवः सन्यस्तं मया स्वाहेति तृतीयं निश्शेषं पिबेत्। ततः शिखायज्ञोपवीतं च्छित्वाप्सु त्यजेत्। ततः पुत्रादिगृहं न गच्छेत्। कलत्रदुर्मलगर्तं न स्मरेत्। एवं विधितः सन्यासः परमहंसोपनिषदुक्तप्रकारेण यावद्देहपातं सुखं तिष्ठेत इति सचोपनिषदेवं श्रूयते।

५. योगिनां परमहंसानां कोऽयं मार्गः :--

कदाचित् नारदः भगवन्तमुपगम्योवाच। तं नारदं भगवानाह – सोऽयं परमहंसमार्गः लोके दुर्लभतरः। न तु बाहुल्ये यदेको भवति स एव परमपुरुषो इति वेदविदो मन्यन्ते असौ परमहंसः पुत्रमित्रकलत्रबन्ध्वादीन् शिखां यज्ञोपवीतं स्वाध्यायं च सर्वकर्माणि सन्यस्यायं ब्रह्माण्डं च हित्वा कौपीनं दण्डमाच्छादनं स्वशरीरोपभोगार्थाय लोकस्योपकार्याय च परिग्रहेत्। तच न मुख्यः इति चेदयं मुख्यः, न दण्डं न शिखां न यज्ञोपवीतं नाच्छादनं चरति स परमहंसः।

सर्वान्कामान् परित्यज्य अद्वैते परमास्थितिः।
ज्ञानदण्डो धृतो येन एक दण्डी स उच्यते॥

काष्टदण्डो धृतो येन सर्वाशी ज्ञानवर्जितः।
स याति नरकान् घोरान् महारौरवसंज्ञिकान्॥

तितिक्षाज्ञानवैराग्यशमादिगुणवर्जितः।

**भिक्षामात्रेण यो जीवेत् स पापी यतिवृत्तिहा ॥**

एतादृशो परमहंसो भिक्षुः सुवर्णादिकं नैव परिग्रहेत् न लोकं नावलोकनं च। अत्र बाधकः कः इति चेत्। बाधको अस्त्येव। यस्माद्भिक्षुः हिरण्यं रसेन दृष्टं चेत् ब्रह्महा भवेत्। यस्माद्भिक्षुः हिरण्यं रसेन स्पृष्टं चेत् स पुल्कसो भवेत्। तस्मात् भिक्षुः हिरण्यं रसेन न पश्येत्। न स्पृशेत्। न गृह्णीयात् सर्वान् कामान् मनोगतान् आवर्तेत। सर्वेन्द्रियाणां गतिरुपरमेत। य आत्मन्येवावस्थीयते तत्पूर्णानन्दैकबोधः स ब्रह्माहमस्मीति कृतकृत्यो भवति।

**६. उपसंहारः** :-- हे शिष्य अस्मच्चरणपरिचरणनिपुणस्य भवतः संसार-दुःखसागरसमुत्तीर्णमहोपायभूतब्रह्मात्मैक्यज्ञानसिद्धये, सर्ववेदान्तपरमार्थ-रहस्यं **"स्वानुभवावष्टम्भेन"** विचारदशकरूपेण अज्ञानध्वान्तचण्डभास्कर-समाख्यानेनानेन वेदान्तप्रकरणेन सम्यगुपदिष्टम्।

**ममाप्येवमेवानुभवः सम्यगवस्थितः** यथा श्रेयोर्थिनां ब्राह्मणानां अतिरिक्तं, वक्तव्यं, श्रोतव्यं, मन्तव्यं वा प्राप्तव्यं वा किमपि नास्ति, इमं च परमार्थोपदेशं श्रद्धासमृद्धिसद्धनः दीर्घकालनैरन्तर्यसत्कारैर्निष्पक्षपातं सम्यग्विचारयति चेत् एतद्विचारपरिपाकपरिप्राप्तसम्यग्प्रज्ञाननौका समारूढः तमः कूर्मः, रजो मीनं, क्रोधनक्रं, कामशैवालं, जन्ममरणतरंगं, रोगबुद्बुदं लोभफेनं, मोहवेलं, दुःखागाथजलप्रवाहगम्भीरमिमं मूलाज्ञानसंसारापारमहादुःखसमुद्रं समुत्तीर्य मोक्षसाम्राज्यानन्दरूपपरं पारमवाप्स्यसि।

**एतावानुपदेशः स्यात् वेदे श्रेयोर्थिनां नृणाम्।**
**कृतकृत्यो भवेत्क्षिप्रमेतत् ज्ञात्वानुशासनम् ॥**

**ग्रन्थकर्तुरन्ये प्रकरणग्रन्थाः** :-- कम्भम्पाटिकुलजलधिपूर्णेनामरेश्वरशास्त्रिणा विरचितानि अन्यानि प्रकरणानि तु प्रायशः द्वादशग्रन्थाः वर्तन्ते ते तु :--

१. अज्ञानस्वरूपम्।
२. अद्वैतरत्नप्रकाशः।
३. अविद्यापिशाचीभंजनम्।
४. आत्मतीर्थम्।
५. जीवराजविजयः।
६. दक्षिणामूर्तिविलासः।

७. प्रौढानुभवः ।　　८. बिम्बदृष्टिविचारः ।
९. महावाक्यार्थविचारः ।　　१०. वासनाप्रतीकारशतकम् ।
११. वेदान्तभेरी ।　　१२. विचित्रशतकम् ।

करालमायाभिधरात्रिशायिभिः
कर्मातिदुश्शीतविकम्पितात्मभिः ॥

अज्ञानविध्वान्तसुचण्डभास्करो
प्रकाश्यते मोहतमो निवृत्तये ॥

कम्भम्पाटिकुलजलधिपूर्णेनामरेश्वरशास्त्रिणा ।
प्रसादाद्दक्षिणामुर्तेः कृतं विचारदशकं तथा ॥

॥ इति श्रीसर्वदेवतासार्वभौममोक्षसाम्राज्याधीश्वर श्रीदक्षिणामूर्तीश्वरचरण-
प्रणिधानप्रभालब्ध परमभाग्यसत्फलभलतताद्वैतब्रह्मविद्यामहाधनेन
कम्भम्पाटिकुलजलधिपूर्णसुधाकरेणामरेश्वरशास्त्रिणा
स्वानुभवानुरोधेन विरचितं विचारदशकरूप
मज्ञानध्वान्तचण्डभास्कराख्यं
वेदान्तप्रकरणं समाप्तम् ॥

* * *



मुरलीधरो कृष्णः ।

**मातृकाविवरणम्** :-- कम्भम्पाटि अमरेश्वरशास्त्रिणा विरचितस्य अज्ञानध्वान्तचण्डभास्कराख्यग्रन्थस्य मातृकाः दश वर्तन्ते। तासु मातृकासु मद्रपुरीराजकीयप्राच्यभाषामातृकाग्रन्थालये चतस्रः, (Madras GOML) मातृकाः मद्रपुरीय अडयार् लैब्ररि ग्रन्थालये चतस्रः मातृकाः, महिषूरपुर (मैसूर) राजकीयप्राच्यभाषापरिशोधनसंसदि द्वे मातृके च, आहत्य दशमातृकाः सन्ति। तासु सुखबोधाय सौलभ्याय च 'क' आदिवर्णानां संज्ञा दत्ताः वर्तन्ते। तासु पंच मातृकाः सम्पूर्णाः। पंच असम्पूर्णाः वर्तन्ते। तासु सप्त मातृकाः तेलुगु लिप्यां, द्वे मातृके देवनागरीलिप्यां एका कन्नडलिप्यां चासन्। वर्तमानासु दशसु मातृकासु 'ख' पाठः मूलपाठत्वेन स्वीकृत्यावशिष्टाः मातृकाः पाठान्तरेण निक्षिप्ताः वर्तन्ते। क्रमशः सर्वासां मातृकानां विवरणम् --

क - पाठः । Govt. Oriental Manuscript Library, Madras - 5., Title = अज्ञानध्वान्तचण्डभास्करः, Acc. No. १५६९४, Author = कम्भम्पाटि अमरेश्वरशास्त्री, सम्पूर्णम् Substance = कागजपत्रम्, Script लिपिः - देवनागरी, Subject = अद्वैतवेदान्तम्, Lines पंक्तिः - २१, Letters - अक्षराणि - ३०, Additional particulars :- This manuscript was completed on Sunday, the bright half of the month **Pushya** in the year **Vyava.**

**आरम्भः :-- Begining**

**शंकरं शंकराचार्यं केशवं बादरायणम्।**
**सूत्रभाष्यकृतौ वन्दे भगवन्तौ पुनः पुनः ॥**
**श्रुतिस्मृतिपुराणानां ............... लोकशंकरम् ॥**
**नमः शंकरानन्द ............... ग्राहग्रस्तैककर्मणे ॥**
**यत्तत्त्वं निखिलस्य यत्र निवसत्येतत्समस्तं जगत्।**
**यत्सत्वान्वयतोऽस्य सत्वमिह यद्भासाखिलस्यास्य धीः।**

यत्साक्षात्कृतिरात्मतत्त्वविषयाज्ञानापहारक्षमा,
तत्तेजो हृदि भावयेयमभयं श्रीदक्षिणास्याभिधम् ॥

देवस्तत्त्वमसीति बोधयतु मां मुद्रावतापाणिने ।
त्येवं प्रांजलिना मया सविनयं स्वप्नेर्थितस्वेशितुः ।

यस्य श्रीकरुणाकटाक्षविभवप्राप्तात्मविद्योऽस्म्यहम् ।
तं वन्दे मुनिवन्दनीयचरणं श्रीदक्षिणास्यं गुरुम् ॥

अन्ते :-- **Ending**

एतावानुपदेशस्यात् वेदे श्रेयोर्थिनां नृणाम् ।
कृतकृत्यो भवेत्क्षिप्रमेतत् ज्ञात्वानुशासनम् ॥

ज्ञातमेव विजानाति विमुक्तश्च विमुच्यते ।
निवर्तते निवृत्तन्तु (स्तु) त्रिर्वः शपथाम्यहम् ॥

करालमायाभिधरात्रिशायिभिः
कर्मातिदुश्शीतविकम्पितात्मभिः ।

अज्ञानविध्वान्तसुचण्डभास्करो
मयोदितो विप्रवरैर्विलोक्यताम् ॥

कम्भम्पाटिकुलजलधिपूर्णेनामरेश्वरशास्त्रिणा ।
प्रसादाद्दक्षिणामूर्तेः कृतं विचारदशकं तथा ॥

**Colophon :-** इति श्रीसर्वदेवतासार्वभौममोक्षसाम्राज्याधीश्वर-श्रीदक्षिणामूर्ति ईश्वरचरणप्रणिधानप्रभावलब्धपरमभाग्यसत्फलभूताद्वैत-ब्रह्मविद्यामहाधनेन कम्भम्पाटिकुलजलधिपूर्णसुधाकरेणामरेश्वरशास्त्रिणा स्वानुभवानुरोधेन विरचितं विचारदशकरूपमज्ञानध्वान्तचण्ड-भास्कराख्यं वेदान्तप्रकरणं समाप्तम् ।

ख – पाठः Govt. Oriental Manuscript Library, Madras - 5. Title = अज्ञानध्वान्तचण्डभास्करः, पंक्ति – ५, Author = कम्भम्पाटि

अमरेश्वरशास्त्री, अक्षराणि - २०, Substance = तालपत्रात्मकम्, Language भाषा - संस्कृतम्, Subject = अद्वैतवेदान्तम्, Acc. No. 2318, Complete - Leavas - 104, Additional particulars :– This manuscript was completed on sunday, the bright half of the month **Pushya** in the year **Vyaya.**

आरम्भः :-- Begining श्रीदक्षिणामूर्तिपरब्रह्मणे नमः।

श्रीगणेशशारदागुरुभ्यो नमः। श्रीरामाय नमः।

अज्ञानध्वान्तचण्डभास्करः।

श्रुतिस्मृतिपुराणानां .............................. शंकरं लोकशंकरम्।

नमश्शंकरानन्द ........................ ग्राहग्रस्तैककर्मणे ॥

शंकरश्शंकरस्साक्षात् ........... भगवन्तौ पुनः पुनः ॥

अज्ञानध्वान्तचण्डभास्करग्रन्थारम्भः। अनुबन्धविचारः।

यत्तत्त्वं निखिलस्य यत्र निवसत्येत्समस्तं जगत्।

यत्सत्वान्वयतोऽस्य सत्वमिहयद्भासाखिलस्यास्य धीः।

यत्साक्षात्कृतिरात्मतत्त्वविषयाज्ञानापहारक्षमा,

तत्तेजो हृदिभावयेयमभयं श्रीदक्षिणास्याभिधम्॥

अन्ते :-- Ending

एतावानुपदेशःस्यात् ..................... ज्ञात्वानुशासनम्।

ज्ञातमेव विजानाति ..................... त्रिर्वः शपथाम्यहम्।

सच्चिदानन्दसम्पूर्णं ब्रह्मैव त्वं न दृश्यकम्।

श्रद्धस्व तावत् श्रद्धस्व नात्र संशयकारणम्॥

विदितं वेदरहस्यं विदितो देहादिरयमनात्मेति।

विदितः पर इति चात्मा किमतः परमस्ति जन्मसाफल्यम्॥

देवस्तत्त्वमसीति बोधयतु मां ..................... श्रीदक्षिणास्यं गुरुम्।

करालमायाभिधरात्रिशायिभिः ..................... विप्रवरैर्विलोक्यताम्॥

इति श्रीमदमरेश्वरसद्गुरुचरणारविन्दाभ्यां नमः।

Colophon :- इति श्री सर्वदेवतासार्वभौममोक्षसाम्राज्याधीश्वर-श्रीदक्षिणामूर्तीश्वरचरणपरिधानप्रभावपरिलब्धपरमभाग्य सत्फलभूताद्वैत-ब्रह्मविद्यामहाधनेन कम्भम्पाटिकुलजलधिपूर्णसुधाकरेणामरेश्वरशास्त्रिणा स्वानुभवानुरोधेन विरचितं विचारदशाकरूपमज्ञानध्वान्तचण्डभास्करसमाख्यं वेदान्तप्रकरणं समाप्तम्।

ग - पाठः Govt. Oriental Manuscript Library, Madras - 5. , Vol. 9 Systems of Indian Philosophy - A - Advaita philosophy No. 4513 - Ajnanadwantha Chanda Bhaskara - Substance paper, Size $8\frac{3}{8}''$ X $6\frac{1}{2}''$ - pages - 144, Lines - 19 on a page. Character - Telugu, Condition - Good, Appearance - Old, Begining of Folio 1st and 62 - A - Two copies. The first compete, the Second copy whis incomplete, again on page 63 - A.

An elementary Tratise on Advaita Vedanta by Amareswara Sastri. The Kambhampati family and pupil of **Dakshina-murthi Swara.**

The name of the work means, that it is powerful. Sun in relation of the darkness ignorance. The transcripiton of this manuscript was completed on Sunday the bright half of the month Pushya in the year Vyaya. The subjects treated in this trantise are given below :-

१. अनुबन्धविचारः। २. जीवेशमतविचारः।
३. जीवेश्वरस्वरूपविचारः। ४. सृष्टिविचारः।
५. पंचकोशविचारः। ६. भावनाभेदविचारः।
७. वासनाक्षयविचारः। ८. ज्ञानस्वरूपविचारः।

९. जीवन्मुक्तिविचारः । १०. मोक्षस्वरूपविचारः ।

कम्भम्पाटि अमरेश्वरशास्त्रिणः अन्ये कृतयः :--

१. अज्ञानस्वरूपम् । २. अद्वैतरत्नप्रकाशः ।

३. अविद्यापिशाचीभंजनम् । ४. आत्मतीर्थः ।

५. जीवराजविजयः । ६. दक्षिणामूर्तिविलासः ।

७. प्रौढानुभवः । ८. बिम्बदृष्टिविचारः ।

९. महावाक्यार्थविचारः । १०. वासनाप्रतीकारशतकम् ।

११. वेदान्तभेरीभांकारः । १२. विचित्रशतकम् ।

एते सर्वे ग्रन्थाः मैसूर नगरे रा. प्रा. सं. केन्द्रे च, मद्रपुरी नगरे रा. प्रा. सं. केन्द्रे च लभ्यन्ते ।

घ - पाठः Govt. Oriental Manuscript Library, Madras - 5,

Title = अज्ञानध्वान्तचण्डभास्करः, पंक्तिः -- ६, Author = कम्भम्पाटि अमरेश्वरशास्त्री, अक्षराणि – २५, Substance - Palm Leaf = तालपत्रात्मकम्, Language भाषा – संस्कृतम्, Subject अद्वैतवेदान्तम्, Script लिपिः – तेलुगु, Incomplete, Leaves - 56, Acc. No. 367 - R, Additional particulars :– The Manuscript purchased in 1911-1912 - From the Saraswathi Bhandagara of Triplicane. The first two leaves blank.

आरम्भः :-- Begining : ब्राह्मणानवलोक्य अज्ञानदुःखनिवृत्तिपूर्वकानन्दाविर्भावरूपं मोक्षं कामयमानः ब्राह्मणः संसारदुःखसमुद्रं समुत्तीर्य मोक्षानन्दरूपं परं परमानन्दमास्वाद्य सुखिनो भवन्त्विति मनीषया स्वानुभवावष्टम्भेनाज्ञानध्वान्तचण्डभास्करसंज्ञं वेदान्तप्रकरणं आरम्भमाणः प्रथमं अनुबन्धचतुष्टयं विचारयामः । तत्र तावत् बन्धनिवृत्तिरेव मुक्तिः पदार्थत्वात् निवृत्तेश्च प्राप्तविचारपूर्वकत्वादावात्मनः बन्धप्राप्तिः विचार्यते ।

अन्ते :-- तमः कूर्मः, रजो मीनम्, क्रोधनक्रम्, कामशैवालम्, जन्ममरणतरंगं रोगबुद्बुदं, लोभफेनम्, मोहवेलम्, दुःखागाधजलप्रवाहगम्भीरमिमं मूलाज्ञानसंसारपारमहादुःखसमुद्रं समुत्तीर्य मोक्षसाम्राज्यानन्दरूपपरं पारमवाप्यसि ।

एतावानुपदेशस्स्यात् वेदे श्रेयोर्थिनां नृणाम् ।
कृतकृत्यो भवेत्क्षिप्रमेतत् ज्ञात्वानुशासनम् ॥
ज्ञातमेव विजानाति . . . . . . . . . . . . त्रिवः शपथाम्यहम् ।
सच्चिदानन्दसम्पूर्णं . . . . . .. . नात्र संशयकारणं ॥
विदितं वेदरहस्यं . . . . . . परमस्ति जन्मसाफल्यम् ।
देव तत्त्वमसीति बोधयतु मां मुद्रावता पाणिने ।

Colophon – नास्ति ।

ङ्-- पाठः The Adayar Library and Research Centre, Adayar, Madras. No. 154 T.R. (543) 9. C. 1 – Paper - 71 Folio, 8" x 4", 13 Lines in a page, Telugu Script, Old - Injured - Good - Writing. This is a Prakarana work on Adwaitha Vedanta according to Sri Sankara's view. The work mainly deals with the means. For the removal of ignorance, so that one can get the final release from Samsara. The work is divided into the following 10 chapters.

१. अनुबन्धविचारः । २. जीवेश्वरमतविचारः ।
३. जीवेश्वरस्वरूपविचारः । ४. सृष्टिविचारः ।
५. पंचकोशविचारः । ६. भावनाभेदविचारः ।
७. ज्ञानस्वरूपविचारः । ८. वासनाक्षयविचारः ।
९. जीवन्मुक्तिविचारः । १०. मोक्षस्वरूपविचारः ।

The author Amareswara Satrin belonged to Kambhampati family. Presembly of Andhra Pradesh. He mention his other work as Dakshina Murthi Valasa. The Mysore Library Catalogue

of Sanskrit Manuscript. Mention the following other works of this Author.

आरम्भः :-- Begining :-

यत्तत्त्वं निखिलस्य यत्र निसत्येतत्समस्तं जगत्।
तत्तेजो हृदिभावयेय मभयं श्रीदक्षिणास्याभिधम्॥

देवस्तत्त्वमसीति बोधयतुमां . . . . श्रीदक्षिणास्यं गुरुम्।
यद्वक्त्राम्बुजनिस्सृतं . . . . . सद्देशिकांस्तानहम्॥

अद्वितीयापरिच्छिन्न . . . . . मह्यमेव नमो नमः।
महामायागुहालीनं . . . . . ममाग्रतः॥

श्रीदक्षिणामूर्ति . . . . . मोहतमो निवृत्तये।
करालमायाभिधरात्रि . . . . . विलोक्यताम्॥

अन्ते -- Ending.

देवस्तत्त्वमसीति . . . . . दक्षिणास्यं गुरुम्।
करालमायाभिधरात्रिशायिभिः . . . . . . . विलोक्यताम्॥

Colophon -- इति श्रीसर्वदेवतासार्वभौम . . . . . . . कम्भम्पाटिकुलजलधिपूर्णसुधाकरेणामरेश्वरशास्त्रिणा स्वानुभवानुरोधेन विरचितं विचारदशकरूपकअज्ञानध्वान्तचण्डभास्करसमाख्यं वेदान्तप्रकरणं समाप्तम्।

च - पाठः The Adayar Library and Research Centre, Adayar, Madras. Title = अज्ञानध्वान्तचण्डभास्करः, पंक्तिः = ८, Author = कम्भम्पाटि अमरेश्वरशास्त्री, अक्षराणि = २२, Substance = तालपत्रम्, Language भाषा = संस्कृतं, Subject = अद्वैतवेदान्तः, Script - Telugu, Incomplete, Leaves - 33, Acc. No. 68774 (544), Additional particulars : Nil.

आरम्भः - Beginning :- पदार्थत्वान्निवृत्तिश्च प्राप्तविचारपूर्वकत्वा-

दावात्मनः बन्धप्राप्तिः विचार्यते। जन्मरोगजरामरणाशनयापिपासा-शोकमोहरागद्वेषप्रमातृत्वकर्तृत्वभोक्तृत्वाद्यनेकविधदुःखसम्बन्ध एवात्मनः बन्धो नाम।

अन्ते - Ending :- इमं च परमार्थोपदेशं श्रद्धासमृद्धि सदघनोदीर्घकालनैरन्तर्यसत्कारैः निष्पक्षपातं सम्यग्विचारयसि चेत् एतद्विचारपरिपाकपरिप्राप्तसम्यक्प्रज्ञा नौका समारूढः तमः कूर्मः, रजो मीनम्, क्रोध नक्रं, कामशैवालं, जन्ममरणतरंगं रोगबुद्बुदं, लोभफेनं, मोहवेलम्।

Colophone :- नास्ति।

छ - पाठः The Adayar Library and Research Centre, Madras. Title = अज्ञानध्वान्तचण्डभास्करः। पत्राणि - ६४, Author = कम्भम्पाटि अमरेश्वरशास्त्री। पंक्तिः -- ५, Substance:- palm-leaf = तालपत्रम्। Language भाषा - संस्कृतम्, Subject = अद्वैतवेदान्तम्, Script - Telugu, Incompelete, Acc. No. 69588 (545), Additional particulars : Nil.

Note:- Same as per a begining ending and Colophon manuscript Acc. No. 68774.

ज. पाठः The Adayar Library and Resarch Centre, Madras.

Title = अज्ञानध्वान्तचण्डभास्करः। पंक्तिः - १६, Author = कम्भम्पाटि अमरेश्वरशास्त्री। अक्षराणि - २६, Substance - Paper = कागजपत्रम्, Language - भाषा- संस्कृतम्, Subject - A. Vedanta, Script - Devanagari, Complete, Size - 8 $\frac{1}{2}$" x 6 $\frac{1}{2}$" - Leaves 133, Acc. No. 64995 (546), Additional particulars :- This is a transcript made from the Original manuscript described above in No. T.R. 154 (543).

Note :- Same as for a begining ending and Colophon manuscript Acc. No. T. R. 154 (543) 9 C. 1.

झ. पाठः Govt. Oriental Manuscript Library, Manasagan-gotri, Mysore University, Mysore.

Title = अज्ञानध्वान्तचण्डभास्करः । पंक्तिः – १४, Author = कम्भम्पाटि अमरेश्वरशास्त्री । अक्षराणि – २०, Substance - Paper = कागजपत्रम्, Language – भाषा– संस्कृतम्, Script - Telugu, Incom-plete, Leaves 97, Subject = अद्वैतवेदान्तम्, Acc. No. 871 - C., Additional particulars :– Nil.

आरम्भः -- स्वविद्यया च मुच्यते । तरति शोकमात्मवित् । भूयश्चान्ते विश्वमायानिवृत्तिः । ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः । इत्याद्याः अज्ञाननिवृत्तिरूपमोक्षप्रतिपादकवेदान्तशास्त्रतदुपबृंहकस्मृतीतिहासपुराणा-दीनां आनर्थक्यं स्यात् ।

अन्ते :-- ब्रह्मविदाप्नोति परं, यथा नद्यः स्यन्दमानाः समुद्रे अस्तं गच्छन्ति। नामरूपे विहाय। तथा विद्वान् नामरूपाद्विमुक्तः परात्परं पुरुषं ब्रह्म याति आत्मकामः आत्मकामो न तस्य प्राणाः उत्क्रामन्त्यैव समवली-यन्ते। ब्रह्मैव सत् ब्रह्माप्नोति। तरति शोकमात्मवित् न स पुनरावर्तते न स पुनरावर्तते। Colophon : Nil

ञ. पाठः Govt. Oriental Manuscript Library, Manasagan-gotri, Mysore University, Mysore.

Title = अज्ञानध्वान्तचण्डभास्करः । Line पंक्तिः – २१, Author = कम्भम्पाटि अमरेश्वरशास्त्री । अक्षराणि – १८, Substance - Paper = कागजपत्रम्, Acc. No. 374. **Old**, Incomplete. Subject = अद्वैतवेदान्तम्, Script - Kannada, Additional particulars :– Nil. Language - Sanskrit. Leaves - 133.

आरम्भः :-- दक्षिणामूर्तिब्रह्मणे नमः ।

श्रुतिस्मृतिपुराणानां . . . . . . . लोकशंकरम् ।

नमश्रीशंकरानन्द ......... ग्राहग्रस्तैककर्मणे ॥

शंकरश्शंरसाक्षात्केशवो ....... भगवन्तौ पुनः पुनः ॥

अज्ञानध्वान्तचण्डभास्करग्रन्थप्रारम्भः। अनुबन्धविचारः।

यत्तत्त्वं निखिलस्य यत्र निवस ........ श्रीदक्षिणस्याभिधम्।

देवस्तत्त्वमसीति बोधयतु मां ...... श्रीदक्षिणास्यं गुरुम्॥

अन्ते :-- ब्रह्मज्ञानमहातपस्संवर्धिततेजोनिचयेन प्रज्वलन्नित्योदासीनः निर्नमस्कारः निस्तुतिः निष्क्रियः सनेत्रशिलाप्रतिपादिवदवभासमानस्वरूप-मात्रः ब्राह्मणः एव ब्रह्मभावरूपपरममोक्षार्हों भवति। नान्यः।

ईश्वरानुग्रहादेव पुंसामद्वैतवासना।

पापोहतबुद्धीनां तद्वार्तापि न रोचते॥

Colophon – Nil.

अज्ञानध्वान्तचण्डभास्कराख्यग्रन्थे उदाहृतश्लोकानां, उदाहृतोपनिषदां, वाक्य सूची उदाहृतग्रन्थानां, तत्कर्तृणां च सूची अन्ते दत्तं वर्तते। उदाहृतोपनिषद्वाक्यानानां विवरणं अवकाशाभावात् वाक्यपार्श्वें न दत्तम्। सविवरणं तु अन्ते दत्तम् अतः सहृदयाः क्षाम्यन्तु।



नन्दिगामवासी श्रीरामः।

[1]श्रीरस्तु

[2]श्रीदक्षिणामूर्तिगुरुपरब्रह्मणे नमः ।

[3]श्रीगणेशशारदागुरुभ्यो नमः ।

श्रीरामाय नमः ।

# [4]अज्ञानध्वान्तचण्डभास्करः

([5]श्रुतिस्मृतिपुराणानामालयं करुणालयम् ।
नमामि भगवत्पादशङ्करं लोकशङ्करम् ॥
नमश्श्रीशङ्करानन्दगुरुपादाम्बुजन्मने ।
सविलासमहामोहग्राहग्रस्तैककर्मणे ॥
शङ्करश्शङ्करस्साक्षात्केशवो बादरायणः ।
सूत्रभाष्यकृतौ वन्दे भगवन्तौ पुनः पुनः[6] ॥)

---

1. ( ) क.च.छ.ज नास्ति ।

2. क.ग.ज. नास्ति ।

3. ग. हयग्रीवाय नमः, ञ दक्षिणामूर्तिब्रह्मणे नमः ।

4. क.ख.ग.इ.छ.ज. नास्ति ।

5-6. भागः क.इ.छ.ज. नास्ति ।

## [7]अज्ञानध्वान्तचण्डभास्करग्रन्थारम्भः ।

## [8]अनुबन्धविचारः ।

यत्तत्वं निखिलस्य यत्र निवसत्येतत्समस्तं जगत्
यत्सत्त्वान्वयतोऽस्यसत्त्वमिह[9] यद्भासाखिलास्यास्य धीः ।
यत्साक्षात्कृतिरात्मतत्त्वविषयाज्ञानापहारक्षमा
तत्तेजो हृदि भावयेयमभयं [10]श्रीदक्षिणास्याभिधम् ॥ 1

देवस्तत्त्वमसीति बोधयतु मां मुद्रावता[11] पाणिने
त्येवं प्राञ्जलिना मया सविनयं स्वप्नेऽर्थित[12]स्वेशितुः ।
यस्य श्रीकरुणाकटाक्षविभवप्राप्तात्मविद्यो[13]ऽस्म्यहम्
तं वन्दे मुनिवन्दनीयचरणं श्रीदक्षिणास्यं गुरुम् ॥ 2

यद्वक्त्राम्बुजनिःसृतं परमकं[14] श्रीसूत्रभाष्यामृतं
पीत्वा मादृशजीवभृङ्गनिचया नन्दन्ति मोक्षाङ्गणे ।
नानावादिमदेभभञ्जनमहाव्याग्रा[15] (घ्र) ग्रकण्ठीरवान्
वन्दे व्यासमुनीन्द्रशङ्करमहान्[16] सद्देशिकांस्तानहम् ॥ 3

[17]अद्वितीयापरिच्छिन्नसच्छिदानन्दमूर्तये ।
दक्षिणामूर्तिरूपाय मह्यमेव नमो नमः ॥ 4

---

7. च.झ. नास्ति ।
8. क.ग.इ.छ. नास्ति ।
9. ख, सत्तमिह ।
10. ख. श्रीदक्षिणास्यं मुखं
11. क.ज. पाणिना एवं
12. ग. स्वेशतुः
13. ख.ग. विद्यास्म्यहम् ।
14. ख.ञ.परमतम्
15. ख.ज. व्यग्राग्र (व्याघ्राग्र)
16. क.ख. शङ्करमुखान् ।
17. क, इ, छ, ज, अद्वितीयपरिच्छिन्न ।

[18]ब्रह्माण्डदेवालयमध्यसंस्थं पिण्डाणुगर्भालयचित्तपीठे ।
विभासमानं विततं स्वकीयचैतन्यलिङ्गं [19]शिवमाश्रयामि ॥ 5

[20]महामायागुहालीनं मायातीतं महोत्तमम् ।
दक्षिणस्याभिधं ज्योतिराविरस्तु ममाग्रतः ॥ 6

अनृणो विन्दते सौख्यं यस्य संस्मरणान्मुनिः ।
गूढमद्वैतसद्रत्नं गृह्यतां [21]ब्राह्मणोत्तमैः ॥ 7

[22]वेदचोदितनिष्कामकर्मोपासनशुद्धधीः ।
निर्विण्णो दक्षिणामूर्तिश्रीगुरुं शरणं गतः ॥ 8

यो वेदमणिसच्छिन्नप्रणवोन्नतपीठगे ।
ताभ्यां श्रीदक्षिणामूर्तिपादुकाभ्यां नमो नमः ॥ 9

नमो वार्तिककारेभ्यष्टीकाकृद्भ्यो नमो नमः ।
नमः श्रीभामतीकृद्भ्यो ब्रह्मविद्भ्यो नमो नमः ॥ 10

मत्प्राक्तनमहाभाग्यकल्पपादपसत्फलम् ।
प्रत्यग्रूपं परानन्दं दक्षिणामूर्तिमाश्रये ॥[23] 11

श्रीदक्षिणामूर्तिकटाक्षवीक्षणप्रध्वस्ततत्त्वावरणेन[24] धीमता ।
अज्ञानविध्वान्तसुचण्डभास्करो प्रकाश्यते मोहतमो निवृत्तये ॥ 12

करालमायाभिधरात्रिशायिभिः
कर्मातिदुश्शीतविकम्पितात्मभिः ।

---

18-19. भागः क.ग.इ.छ.ज. नास्ति । अत्र च.झ. पाठौ नष्टौ ।

20-21. भागः क. ग. इ. छ. ज. नास्ति ।

22-23. भागः क, ग, इ, छ, ज नास्ति ॥ 24. ग.छ. तत्त्ववरेण धीमता ।

**अज्ञानविध्वान्तसुचण्डभास्करो**
मयोदितो विप्रवरैर्विलोक्यताम् ॥ 13

[25]संसारे पुरुषाः सन्तः पुरुषार्थ चतुष्टयम् ।
प्राप्तुं कुर्याद्देवतानां सम्यगाराधनन्त्विह ॥[26] 14

[27]हरिः ओम् ।

इह जन्मनि जन्मान्तरे वा सम्यगनुष्ठितवदोक्तनिष्कामकर्मोपासनाराधिताराध्यपादश्रीदक्षिणामूर्तीश्वरपरमानुग्रहपरिशुद्धहृदया दुश्चरितनित्यनिवृत्ता अनादिकालमारभ्याज्ञानध्वान्तदोषेण सन्मार्गमजानन्तः संसारसागरे मज्जनोन्मज्जनाभ्यामत्यन्तं[28] खिद्यमाना निपतिता अविद्याकरालरात्रिः[29] अद्यापि न सुप्रभातेति प्रतीक्षमाणाः सांसारिकलौकिकवैदिकसर्वकर्मादिदुश्शीतवा[30]तादिकम्पिताः कामक्रोधादिवेतालभयनितान्तभीताः आशापिशाचीसन्ताडितखिन्नसर्वाङ्गाः [31]यथोक्ताधिकारयुक्ताः सर्ववेदान्ताध्ययनपूर्वकश्रवणमनननिदिध्यासनानुष्ठानपरिपाकपरिलब्धजीवब्रह्मैक्यसाक्षात्कारजीवन्मुक्तान् पुरुषधौरेयान् (ब्राह्मणानवलोक्य[32] अज्ञानदुःखनिवृत्तिपूर्वकान[34]न्दाविर्भावरूपं मोक्षं कामयमानाः ब्राह्मणाः संसारदुःखसमुद्रं समुत्तीर्य मोक्षानन्दरूपं [35]परं [36]परमानन्दमास्वाद्य[33] सुखिनो) भवन्त्विति मनीषया स्वानुभवाविष्ट[37]म्भेनाज्ञानध्वान्तचण्डभास्करसंज्ञं

---

25-26. भागः क. ग. इ. छ. ज. नास्ति ।

27. ग. इ. ज. ञ. नास्ति ।

28. ग. मतिखिद्यमाना ।

29. ग. कात ।

30. क. दात । ञ वात ।

31. क यथोत्तराधिकार ।

32-33. ग. ( ) भागो नास्ति ।

34. क. आनन्दादिभाव ।

35. क. पदं ।

36. क. पारमानो, ख.झ. पारमास्वाद्य

37. क. अवष्टम्भा ।

वेदान्तप्रकरणमारभमाणाः प्रथमं अनुबन्धचतुष्टयं विचारयामः।

**आत्मानः बन्धप्राप्तिः स्वाभाविकौपाधिकरूपविचारः।**

तत्र तावत् बन्धनिवृत्तेरेव[38] मुक्तिः। पदार्थत्वान्निवृत्तेश्च[39] [40]प्राप्तिविचार [41]पूर्वकत्वादादावात्मनो बन्धप्राप्तिः विचार्यते। जन्मरोगजरामरणाशनया पिपासाशोकमोहरागद्वेषप्रमातृत्वकर्तृत्वभोक्तृ-त्वाद्यनेकविधदुःखसम्बन्ध एवात्मनो बन्धो नाम।

किमयं बन्धः आत्मनः स्वाभाविको अङ्गीक्रियते उतौपाधिको वा। स्वाभाविकश्चेत् स्वभावः अनिवर्त्यत्वात् 'परान्तकाले परामृतात्परिमुच्यन्ति सर्वे' (कैवल्य -४) 'विद्यया[42] च मुच्यते, तरति शोकमात्मवित्' (छा. ७.२.३) 'भूयश्चान्ते विश्वमायानिवृत्तिः' (श्वेता-१-१०, नारद ?-९), 'ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः' इत्याद्याज्ञाननिवृत्तिरूपमोक्षप्रतिपादकवेदान्त-शास्त्रतदुपबृंहकस्मृतीतिहासपुराणादीनामानर्थक्यं स्यात्। ब्रह्मैव स्वाविद्यया संसरति। जीवेशावाभासेन करोति। माया च अविद्या च स्वयमेव भवति। 'अनीशया शोचति मुह्यमान (श्वेता-४.७) इन्द्रो मायाभिपुरुरूप ईयते (बृ.२.५.१९) 'अजामेकां लोहितशुक्लकृष्णां' '(श्वे ४.५) अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः' (गीता ५.१५) इत्याद्यौपाधिक [43]संबन्धनिवृत्तिप्रतिपादकशास्त्रविरोधश्च [44]स्यादिति आत्मनो न स्वाभाविको बन्धः किन्तु [45]स्फटिकरक्तिमादिवत् औपाधिक एव अङ्गीकर्तव्यः।

---

38. क. ग. घ. ङ. निवृत्तिरेव।
39. क. ग. घ. इ. च. छ. ज. निवृत्तिश्च।
40. क. घ. इ. छ. ज. झ. ञ. प्राप्तिपूर्वकत्वा।
41. क. ग. इ. छ. ज. झ. पूर्वकत्वादाहात्मनो।
42. क. ग. घ. इ. छ. ज. झ. ञ. स्वविद्यया मुच्यते।
43. क. 'बन्धप्रतिपादक'।
44. ग. स्यादत आत्मनो।
45. क. छ. फटिक।

**आत्मनः कथं दुःखादिसम्बन्धः** ॥ स चोपाधिरनाद्यनिर्वचनीय-मूलाज्ञानम् । तच्च अज्ञानं व्यष्टिसमिष्टयात्मकस्थूलसूक्ष्मदेहद्वयरूप-विक्षेपाकारपरिणतं सत्स्वकार्य-परंपरयात्मनो बन्धं संपादयति । न साक्षादावरणमात्रात्सुषुप्तिप्रळय-योरज्ञानावरणसत्वे ह्यात्मनो [46]दुःखाप्रतीतेः।

अहो स्वामिन् विक्षेपकालेऽपि "रसौ वै स." (तै.२-६-१) 'नित्यं विज्ञानमानन्दं ब्रह्म' (बृ. ३.९.२८) इति श्रुतेः नित्यपरमसुखैकस्वरूपस्यात्मनः कथं दुःखसंबन्ध इति चेत् शरीरसंबद्धादेवेति ब्रूमः । 'अशरीरं वा व सन्तं न प्रिया प्रिये स्पृशतः' (छा.८-१२) इत्यादिश्रुतेरशरीरस्यात्मनः कुतः शरीरसंबन्धः इति चेत् पुण्यपापमिश्रकर्मप्रवृत्तिवशात् 'वृक्ष इव स्तब्धः' (श्वे. ३.९ म. ना. ८) "आकाशवत् सर्वगतश्च नित्यः' (गी. १२-३ शाटि-२-१-३) 'कूटस्थमचलं ध्रुवं' (गी.१२-३ त्रिप-म.ना-७७, यौ-शि ३-२१) 'नादत्ते कस्यचित्पापं न चैव सुकृतं विभु' (भग. ५-१५) रित्यादिशास्त्रात् नित्योदासीनकूटस्थनिर्विकारानिष्क्रियैकस्वभावस्यात्मनः प्रवृत्तिः कथं घटत इति चेत्। रागद्वेषादिदोषवशात्' "शुद्धमपापविद्धं [47]अकायमव्रणं" (ई.८) 'विरजं विशोकं' (मैत्रा-६-२५) 'तस्मात्सलिलवत् शुद्धमि' त्यादिशास्त्रान्नित्यपरिशुद्धस्य[48] निर्दोषस्यात्मनः कथं रागादिमलसम्बन्धः इति चेत् सर्वकश्मलकरण्डभूतान्तःकरणतादात्म्याभिमानवशादेव ।

**आत्मनः कथं अन्तःकरणसम्बन्धः** ॥ 'असङ्गोह्ययं पुरुषः' (बृ.४-३-१५) इत्यादिश्रुतेः कार्यकारणासंस्पृष्टनि[49]र्लिप्तकस्य स्वभावस्य नित्यासङ्गस्यात्मनः कथं अन्तःकरणसम्बन्धः । तदभिमानो वा इति चेदात्मस्वरूपाध्यस्ता[50]वरकाज्ञानतमोवशात् 'एकमेवाद्वितीयं ब्रह्म' (छा. ६-

---

46. क. ग. घ. ङ. छ. ञ. दुःखप्रतीतेः ।
47. ग. 'अकायमव्रणम्' इति पदं नास्ति ।
48. क. ग. घ. ङ. छ. ज. झ. ञ. शुद्धस्थ ।
49. क. ख. 'निर्लेपैक । ग. निर्वैदैक ।'
50. क. ध्वा आत्मा स्वरूपावारकात्मज्ञानतमोवशात् । ज. ध्वस्था आत्मस्वरूपावरणाज्ञान ।

२-१ त्रिप. माना ३-३१, पै. १-१) 'शिवं शान्तम्' (ना.परि ८-२३) इति श्रुतेः निष्प्रपंचाद्वितीयानन्दरूपस्य। 'अत्रायं पुरुषः स्वयंज्योतिः' (बृ. ४-३-९, ४-३-१४) इति श्रुतिः स्वप्रकाशनिरावरणचैतन्यप्रकाशैकस्वभावस्य आत्मनः कथमज्ञानतमस्सम्बन्धः इति चेत् आत्मस्वरूपे मूलाज्ञानागमकारणस्य निपुणतरैरप्यनिरूप्यत्वात्।

'जीव ईशो विशुद्धाचित् तथा[51] जीवीशयोर्भिदा।
अविद्या तच्चितोर्योगः षडस्माकमनादयः ॥

इति अस्मदीयैरुक्तत्वात् अज्ञानमात्मनोऽनादित्वे वानाभ्युपगन्तव्य। ननु तत्कारणं गवेषणीयम्। मास्तु कारणगवेषणा। अस्तु [52]नामानादित्वे वाज्ञानम्। स्वप्रकाशचिद्रूपे [53]ब्रह्मण्यप्रकाशाज्ञानं कथम् उपपद्यत इत्यत्र [54]कोपपत्तिरिति चेत्, मास्तु [55]नामोपपत्तिः। आत्मन्यज्ञानानु[56]पपत्तेरस्मन्मतेऽलङ्कारत्वात्! 'सैषा[57] भगवतो माया यन्न[58] येन निरुध्यत' इति पुराणवचनात् अघटितघटनापटीयसी, आत्मन्यनुपपन्ना, अविचारितरमणीया, विचारपरिहरणीया, जाग्रदादिकार्यबलगम्या च मायाशक्तिरिति अस्मन्मतरीतिः।

[59]आत्मन्यज्ञानागमोपायं वेदाः वेदविदोऽपि न विदुः। किमुतास्मादृशाः अज्ञाननिर्गमोपयं तु सर्वेऽपि वेदाः तद्विदोऽपि जानन्ति। वयमपि [60]श्रीगुरुकारुण्यात् सम्यग्विजानीमः। अनादिभावस्वरूपस्याविनाशित्वादुपाय-सहस्रैर्वा कथं तन्निवृत्तिरिति चेत् न हि तस्य वयं किञ्चिद्रूपमङ्गीकुर्मः।

---

51. ग. इ. ज. विभागश्च तयो द्वयोः।
52. क. ग. घ. इ. छ. ज. झ. सामानाद्वेवा।
53. क. ग. च. छ. छ. झ. ञ. ब्रह्मात्मस्वप्रकाशाज्ञानं। ज. ब्रह्मण्यप्रकाश।
54. ग. तदनुपपत्ति
55. ञ. नामोपपत्तेः।
56. ग. अनुपपत्ते किन्तु।
57. क.ग.घ.छ.इ.ज.झ.ञ. नैषा।
58. क.ग.घ.छ.इ.ञ. यन्मयेन।
59. क. ग. घ. इ. ञ. आत्मन्यज्ञानगम्योपायम्।
60. क. ग. घ. इ. श्रीगुरुकारुणात्। छ. नास्ति।

अविद्या विद्यमानेन नष्टप्रज्ञेषु विद्यते ।

नाम्नैवाङ्गीकृताकारा सम्यक् प्रज्ञस्य सा कुतः ।। १६ इत्युक्तत्वात् । या मा सा माया, या न विद्यते [61]सा अविद्येत्यवयवार्थव्युत्पत्तिबलाच्चास्मद्दृष्ट्या[62] मायाविद्या यत्कतमस्सुषुप्तिप्रकृत्यादिशब्दवाच्यस्य मूलाज्ञानस्य सकार्यस्य अत्यन्तासत्वाद्ग्रामो नास्ति [63]कुतस्सीमेतिवत् [64]कुतस्तस्य भावरूपत्वादिचिन्ता कृतस्तरां निवृत्तिचिन्ता ।

## ।। औपाधिकमूलाज्ञानस्य सदसद्विचारः ।।

अहो स्वामिन् चोद्यं वा परिहारो वा क्रियतां द्वैतभाषया । अद्वैतभाषया [65]चोद्यं नास्ति । नापि तदुत्तरमिति अस्मदीयैः उक्तत्वादद्वैततत्त्वार्थसम्यग्दर्दिनां श्रीमतां दृष्टिः तिष्ठतु[66] । जिज्ञासूनां मुमुक्षूणां अस्माकं दृष्टिमवष्टभ्य अज्ञानस्वरूपमुपदिश्यतामिति चेत् । कुशलोऽसि ! सावधानमनास्समाकर्णय सौम्य! तदेतदात्मोपाधिरूपं मूलाज्ञानं सदिति वक्तुं न शक्यते । अधिष्ठानात्मतत्त्वज्ञाननिवर्त्यत्वात् असदित्यपि वक्तुं न शक्यते । व्यष्टिसमष्ट्यात्मकप्रपञ्चरूपेणावस्थात्रयरूपेण च दृश्यमानत्वात् । सदसद्विलक्षणं तदित्यवोचाम । अत एव अज्ञानमनिर्वचनीयमित्यनिर्वचनीय-ख्यातिवादिनोऽस्मदीयाः फणन्ति । तर्ह्येवं विधानिर्वचनीयतुच्छनिः[67]स्वरूपा [68]विचारितरमणीया विचार[69]परिहरणीया ज्ञानोपाद्यवलम्बेन विष्वग्निश्वाव-पूरकविशुद्धसच्चिदानन्दाद्वितीयब्रह्मस्वरूपस्यात्मनः प्रयोजनाभावात् [70]विहायैव

---

61. छ. सा. विद्या ।
62. ख. दृष्ट्वा ।
63. इ. कुतः शमेतिवत् ।
64. ग. तस्मात्तस्वभाव, छ. वत्कुतस्तस्वभाव ।
65. क. घ. इ. बोध्यम् ।
66. छ. तिष्ठन्तु
67. ज. स्वरूप
68. ग. विचारेतर ।
69. क. ग. घ. इ. ज. परिहार ।
70. ग. विहाय मरुवदज्ञान, ज. झ. ञ. विहायेव

इममज्ञानोपाधिं आत्मा किमिति नावतिष्ठत इति चेत्। श्रुणु तावत्परमरहस्यं। यथा स्वभावविमलमेव अपरिच्छिन्नमाकाशं स्वप्रतिष्ठितत्वस्वाभाव्यात् स्वावस्थाने[71]ऽन्यनिरपेक्षं सदन्धकारमन्तरेणावतिष्ठते, दिवाभागादौ केवलाकाशदर्शनात्। अन्धकारस्तु स्वभावमलिनः, परिच्छिन्नो अन्यप्रतिष्ठितत्वस्वाभाव्यात्, [72]स्वावस्थाने (अन्यसापेक्षः सन) गत्यन्तराभावादाकाशमाश्रित्यैवावतिष्ठते। एवमेव स्वयंप्रकाशमानचैतन्य सदानन्दघनं परमकारणं, प्रत्यगभिन्नं, ब्रह्मचैतन्यमपि स्वप्रतिष्ठितत्वस्याभावात् स्वावस्थाने स्वसत्तायां स्व[73] (स्फूर्तावन्यनिरपेक्षं सत् मूलाज्ञानोपाधिमन्तरेणैवावतिष्ठते। परममुक्तिदशायां सर्वोपाधिराहित्यश्रवणात् मूलाज्ञानं तु स्वयं परिच्छिन्नमसत् जडं च) सत् [74]स्वावस्थाने स्वसत्तायां स्वस्फूर्तौ च स्वतोऽधिकतमान्यवस्तुसापेक्षं सत्, सर्वस्यापि दृश्यप्रपञ्चस्य स्वकार्यत्वेन स्वकार्यदृश्यप्रपञ्चाश्रितत्वस्य स्वस्य वक्तुमसंभावितत्वात्, गत्यन्तराभावात्परमकारणं प्रत्यगभिन्नं ब्रह्मचैतन्यमाश्रित्य तत्प्रभावलब्धसत्तास्फूर्तिकं सत्सदिवासदपि, स्वयं विमूढानामविचारिणां मस्तकेषु [75]प्रनृत्यदनादिकालमारभ्याद्याप्यवतिष्ठते। [76]अतो विवेकिभिस्तदागमकारणचिन्ता न कर्तव्या। किन्तु तन्निवृत्युपायचिन्तैव श्रेयस्कामैः कर्तव्या।

---

71. ग. अन्यसापेक्षम्।

72. इ. स्वावस्थाने स्वसतायां स्वस्फूर्तौ आकाशमाश्रित्यैव वर्तते। एवं आत्मचैतन्यमपि वा अन्यनिरपेक्षं 'स्वावस्थाने' अनन्तरं () भागः नास्ति।

73. क. ग. घ. इ. छ. स्वस्फूर्तावन्ननिरपेक्षं। ग.ज. (भागः) नास्ति।

74. क.ग.घ.छ.ज.झ.ञ. स्वावस्थाने, ज स्वावस्थानेवन्य।

75. क. प्रनृत्यादि, ग. ञ. प्रनृत्यत् अनादि। 76. क.ग.घ.इ., छ.ज.झ.ञ. इति।

## मूलाज्ञाननिवृत्युपायः ।

कुतो जातेयमिति ते राम मास्तु विचारणा ।
इमामहं कथ हन्मीत्येव तेऽस्तु विचारणा ॥ 17 इति ।

वसिष्ठवचनात् । यथाहि, शैत्याद्वा पैत्याद्वा परिप्राप्तकुक्षिशूलशिरोरोगादि-पीडानिवृत्युपायभूतौषधादि[77]सेवया कृतार्थो रोगी, न तु तद्रोगागमन[78]-कारणचिन्तया। यथावा गृहदाहकाग्न्युपशा[79]न्तिकरोदकसे[80]कादिना कृतार्थो [81]गृही, ननु तदाग्नेः लौकिकत्ववैदिकत्वचिन्तया, एवमेव अशरीरं जनिमृतिरहितं त्वां शरीररूपं सशरीरं च, जन्ममरणादियुक्तं आप्राणं अशनया पिपासादिपीडारहितं त्वां, प्राणरूपं सप्राणं च अशनयापिपासादि[82]पीडावन्तं अमनस्कं शोकमोहादिविकाररहितं त्वां, मनोरूपं समनस्कं च, शोकमोहादियुक्तं नित्यविज्ञानं, विज्ञानमयातीतं प्रमातृत्वकर्तृत्वभोक्तृत्वाद्यनर्थसंसारदुःखरहितं त्वां, विज्ञानमयं सविज्ञानं च कर्तृत्वाद्यनर्थसंसारयुक्तं [83]वीतमनस्कं निरावरणचैतन्यरूपं जाड्या[84]दिदोषविनिर्मुक्तं त्वां, अज्ञानरूपं साज्ञानं च जाड्यादिदोषयुक्तं च कृत्वा, कुक्षिशूलादिवद्बहुविधं दुःखमापाद्य त्वां पीडयतस्तापत्रय[85]परितापमापाद्य, अग्निवत्प्रदहतौ मूलाज्ञानस्य निवृत्तिकरौषधरूपोपशान्तिकरशीतल[86] जलरूपाधिष्ठान आत्मयाथात्म्य-ज्ञानरूपमहोपायनिषेवनयैव कृतार्थो, [87]वीतदुःखस्त्वं [88]नत्वज्ञानरूपमहारोगा-

---

77. क. आदिपदं नास्ति ।
78. क. कारणपदं नास्ति ।
79. क. घ. ज. शान्तिं ।
80. झ. सेवादिना ।
81. क. गृह । ग.घ.झ.ञ. गृहस्थो ।
82. इ. पीडामत्तम् ।
83. क.घ.इ., छ.झ.ञ. वितमस्कं । ज. पाठे अस्पष्टं वर्तते ।
84. क. दोषादि । ञ. तत्पदमेव नास्ति ।
85. क. परिपापमापाद्य, ग. तत्पदमेव नास्ति । छ. परितापमाषाग्निवत् ।
86. ज. जलपदं नास्ति ।
87. क. घ. अपेति ।
88. इ. सत्यज्ञानरूप । ज. अस्पष्टं वर्तते ।

गमनकारणचिन्तया

तदस्यारोगशालायां यत्नं कुरु चिकित्सने।

यदैषा जन्मदुःखेषु न भूयस्त्वां नियोक्ष्यते ॥ 18 इत्युक्त्वात् [89]मनोवाक्तनुचेष्टाभिमहान्तयत्नमाश्रित्य स्वकीयसर्वद्रव्यपरित्यागं वाङ्गीकृत्य सर्वैरपि प्रकारै सर्वानर्थहेतुभूतमूलाज्ञाननिवृत्युपाय एव ब्राह्मणेन सम्पादनीयः। तन्निवृत्युपायस्तु ब्रह्मात्मसम्यग्ज्ञानं। 'तमेवं विद्वानमृत इह भवति नान्यः पन्था विद्यतेऽयनाय' (तैत्ति ३.१.३. महावा. ३, ना.पू. १-६, त्रिपा. महा. ना. ४,३ चित्तिः १२.७, १३.१, न पू.ता १-६) 'तरति शोकमात्मवित्' (छा.७-१-३) योगशिखः ५-४५, महावा ४.८२ अन्नपूर्ण ४.३१, सरस्वती ५.६ 'भिद्यते हृदयग्रन्थिः' (मुं. २.२.८) '[90]च्छिद्यन्ते सर्वसंशयाः' (मुं. २.२.८) 'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे (मुं २.२४) 'ज्ञानादेवतु कैवल्यम्' '[91]ज्ञानवान् मां प्रपद्यन्ते' (गी. ७-१९)। 'ज्ञानेन तु तदज्ञानं येषां[92] नाशितमात्मनः' (गी. ५.१६) एतद्बुध्वा बुद्धिमान्स्यात् (गी.१५-२०) 'यत् ज्ञात्वा [93]मोक्ष्यसेऽशुभात्' (गी. ४-१६) '[94]क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमा मता।

**ज्ञानमज्ञानस्य निवर्तकम्।**

'अपरोक्षात्मविज्ञानं [95]शाब्दं देशिकपूर्वकम्।

संसारका[96]रणाज्ञानतमसश्चण्डभास्करः' ॥ 19

यतो ज्ञानमज्ञानस्य निवर्तकम्' इत्यादिशास्त्रसन्दर्भात्। तच्चाज्ञानं आत्मानात्मविचाररूपाद्वैतवेदान्तश्रवणादेव भवति। 'आत्मा वारे द्रष्टव्यो

---

89. क.ज.इ.झ. नमो वाक् ननु।

90. झ. वाक्यं सम्पूर्णं न वर्तते।

91. क. ज्ञानवान् वा मां प्रतिपद्यंति।

92. क. एषोन्नासितमात्मनः।

93. इ.छ. मोक्ष्यतेऽशुभात्, ज. मोक्ष्य शोशुभात्, क.ग.घ. मोहतेसुहात्।

94. झ. क्षेत्रस्यात्मवि।

95. झ. नास्ति।

96. ञ. कारणाज्ञाने

श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' (बृ.२.४.५., ४.५.६) 'अथातो ब्रह्मजिज्ञासा' (ब्रसू. १-१-१) 'अस्यानर्थहेतोः प्रहाणाय आत्मैकत्वविद्याप्रतिपत्तये सर्वे वेदान्ता आरभ्यन्ते' इत्यादिशास्त्रं आपरोक्ष्यावसानाद्भूयो विचारयेत् ।

'[97]अविचारकृतो बन्धो विचारेण निवर्तते ।
न रज्वारोपितस्सर्पो घण्टाघोषान्निवर्तते ॥ 20

श्रवणं तस्य देवस्य श्रोतव्यो भावनिश्चयः ।
आत्मनो मननं नाम मन्तव्या भावचिन्तनम् ॥ 21

ध्यातव्या भावसद्ध्यानं निदिध्यासनमात्मनः ।
समाधिविक्षेपभ्रान्तिराहित्येनात्मनिष्टता ॥ 22

समाधिरात्मनो नाम नान्यश्चित्तस्य विभ्रमः ।
कुर्वन्नामरणं वापि क्षणं वा सुसमाहितः ॥ 23

सर्वदुर्वासनाजालं पादपांशुमिव त्यजन् ![98] इत्युक्तत्वात् । विचारस्य विचार्यनिर्णयहेतुत्वस्यान्वयव्यतिरेकसिद्धत्वाच्च ।

**प्रसङ्गाच्छ्रवणविधिविचारः** :- अहो स्वामिन्! विचारस्य विचार्यनिर्णयहेतुत्वस्य लोकासद्धत्वात्किमर्थं श्रवणविधिः प्रवृत्त इति चेत् । श्रुणु सौम्य! 'तन्त्वौपनिषदं पुरुषं पृच्छामि (बृ. ३-९२-६) 'नावेदविन्मनुते तं बृहन्तं' (शाट्या. ४, इतिहासः २०) मिति वेदान्तव्यतिरिक्तसाधनजन्यज्ञानस्य फलपर्यवसायित्वाभावश्रवणात् वेदैरेव वेदार्थो वैदिकैः ज्ञातव्य इति साम्प्रदायिकमर्यादया वेदार्थधर्म'ज्ञानादौ दृष्टत्वात् सर्ववेदान्तार्थभूत-प्रत्यग्ब्रह्मैक्यसम्यग्ज्ञानं वेदान्तविचारेणैव सम्पादनीयं न साधनान्तरेणेति निमार्थं श्रवणविधेः प्रवृत्तत्वात् । अत एव मनननिदिध्यासनाभ्यां फलोपकार्यङ्गाभ्यां श्रवणं[99] नामाङ्गी विधीयत इति **विवरणाचार्याः** तस्मात् सर्वैरपि

97-98. क. ग. घ. इ., छ. ज. नास्ति । 99. क. नामां विधीयते ।

वेदान्तैस्स्मृ[100]तीतिहासपुराण[101]न्यायानुगृहीतैः आत्मविचारः कर्तव्यः मुमुक्षुभिर्ब्राह्मणैः। स च ब्रह्मात्मसम्यग्ज्ञानपरमसाधनभूतब्रह्मात्मविचारप्रकारो बहुधा मूलशास्त्रेषु सम्यक्प्रतिपादितश्शास्त्रकृद्भिः भगवद्भाष्यकारादिभिः। तत्र च अधिकारशून्यानामल्पप्रज्ञानां मुमुक्षूणां ब्राह्मणानां आत्मज्ञानसिध्यर्थं अस्माभिरारम्भणीयस्य अस्य प्रकरणस्यानुबन्धचतुष्टय[102]वत्तावक्तव्यतायां अस्य वेदान्तप्रकरणत्वादेतन्मूलवेदान्तशास्त्रसम्बन्ध्यनुबन्धचतुष्टयेन एवास्यापि तद्वत्तासिद्धेरनुबन्धान्तरकल्पनाया अन्याय्यत्वात् तदीया एव अनुबन्धा अत्रापि विचारणीयाः।

**अनुबन्धचतुष्टये प्रथमविचारः** :- [103]तथाहि अधिकारिविषय-सम्बन्धप्रयोजनभेदात् चतुर्विधाः एव अनुबन्धाः। तत्राधिकारीनाम साधनचतुष्टयसम्पन्नः। साधनचतुष्टयसम्पत्तिर्नाम नित्यानित्यवस्तुविवेकः, [106]इहामुत्र च [104]कर्मफलभोगविरागः। शमादिषट्कसम्पत्तिः मुमुक्षुत्वं चेत्येतच्चतुष्टयसिद्धिरेव[105]। तत्र नित्यानित्यवस्तुविवेको नाम ॥ अधीतसर्ववेदान्ततदुपबृंहकस्मृतीतिहासपुराणानि च, यस्य व्युत्पन्नस्य श्रद्धावित्तस्य ब्राह्मणस्य 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै. २-१-१, सर्वसार. ६, नारा उतापिनी. १.५, त्रिपा महाना ३-३) 'नित्यं विज्ञानमानन्दं ब्रह्म' (बृ. ३-९-२८) 'तत्सत्यं स आत्मा' (ऐतरेयं ३-१२) नित्योनित्यानां (कठः ५-१३) 'अविनाशी वारेऽयमात्मा' (बृं. ४-५-१४)

'अविनाशी तु तद्विद्धि येन सर्वमिदं ततम्।
विनाशमव्ययस्यास्य न कश्चित्कर्तुमर्हति॥ (गीता २-१७) 24

---

100. क.ग.घ.इ. श्रुतीतिहास।
101. झ. पुराणेतिहास।
102. क.घ.इ. वक्त्रा।
103. झ. तथाहि, तथाहि।
104. झ. तत्पदं नास्ति।
105. क. मेषा, ग.घ.छ.ज.झ. मेव।
106. क. ईहामुत्र।

नायं कुतश्चिन्न बभूव कश्चित् (कठ. २-१८)
न जायते म्रियते वा [107]कदाचित् [108]नायं भूत्वा भविता वा न भूयः ।
'अजो नित्यश्शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ॥

(गी. २-२०) 25

वेदाविनाशिनं नित्यं य एनमजमव्ययम् ।
कथं स पुरुष पार्थ कं घातयति हन्ति कम् ॥ (गी. २-२१) 26
अच्छेद्योऽयमदाह्योऽयमक्लेद्यो[109] शोष्य एव च ।
नित्यस्सर्वगतस्थाणुरचलोऽयं सनातनः ॥ 27

(गीता २-२४, भवसं २-३९)

इत्याद्याकर्ण्याकारणकार्योत्पत्तेरनङ्गीकारात्व्यष्टिसमष्ट्यात्मकैतावद्दृश्य-प्रपञ्चविस्तारपरमकारणमबाधितं नित्यं प्रत्यगभिन्नं ब्रह्मचैतन्यमेकमेव[110] सत्यं असत्यमनित्यमन्यत्सर्वमनात्म[111]पदार्थजातं 'नेह नानास्ति किञ्चन' (कठ. ४-११, बृ. ४-४-१९, त्रिपा महाना ३-३, अध्यात्म ६३, निरा. ११) 'तस्य त्रयावस्थास्त्रयस्वप्नाः' (ऐत ३-१२) 'अनित्यमसुखं लोकमिमं प्राप्य भजस्व मामित्याद्याकर्ण्यावस्थात्रयरूपदृश्यप्रपञ्चमध्ये एकदेशस्वप्नमिथ्यात्वस्य सर्वसम्मतत्वात् [112]तत्सामान्यादितरेषु तथात्वमिति न्यायात् [113]दृश्यत्वाविशेषाद्दृश्यमेतदसत्यमिति च परोक्षापातनिश्चयरूपा जायमाना बुद्धिवृत्तिरेव नित्यानित्यवस्तुविवेकः ।

---

107. इ. विपश्चित् । 108. ग.घ.इ.छ.ज. पाठेषु 'नायं भूत्वा भविता वा न भूयः इति पदं नास्ति ।
109. क.ग.घ.इ. शेष एव च ।
110. क.घ. सत्यमन्यत्सर्वमनात्मपदार्थ । ग. नास्ति । इ. सत्यमनित्यमन्यत्सर्वं छ. सत्यमिति मनित्यमनित्यमन्यत्सर्वं ।
111. क.ग.घ. पदार्थभूतम् ।
112. ग. सत्तासामान्या ।
113. ग. सत्त्वादिविशेषात् ।

**इहामुत्रकर्मफलभोगविरागो नाम** :- [114]यादात्वात्मव्यतिरिक्त-पदार्थजातं दृश्यं सर्वमसत्यमिति विवेचितम्। तदा पत्नीपुत्रान्नपानादिसेवारूपेषु कृषिवाणिज्यसेवायाच्नादिप्रयाससाध्येषु प्रतिक्षणं विनाशापावित्र्यादिदोष-दूषितेषु [115]शश्वत्प्रबलतरदुःखकरेषु आपातरमणीयेषु चर्वितचर्वणप्रायेषु भस्मान्त[116]व्यापाररूपेष्वैहिकभोगेषु, शुनावान्ते मक्षिकादिजन्तुजालविदूषिते पर्युषितयवागूदकः इव स्वर्गलोकादिब्रह्मलोकान्तेषु बहुवित्तव्ययकायक्लेशपरचित्तक्षोभसाध्यवैगुण्यबाहुल्यविदूषितपुण्यकर्मनिष्ठाद्येष्ट-नित्यसंदिग्धफलरूपेषु कृष्यादिवदनेकान्तरायग्रस्तेषु स्पर्धासूयापुनः पतनविनाशामेध्यत्वाद्यनेकविधदोषदूषितेषु आमुष्मिकभोग्यपदार्थेषु कुम्भीपाकरेतकुण्डश्लेष्मकुण्डादाविव च मुखवैवर्ण्यपुरस्सरं यथोदीरितदोषदूषितेषु द्विविधेष्वपि भोग्यपदार्थेषु यथा स्थितं दोषविचारकरणे सम्यग्वैराग्यं नोत्पाद्यतेति मुमुक्षुणा मुक्तेषु विषयेषु वैराग्यसिद्ध्यर्थं दोषविचारप्रकारो वर्ण्यते। तथाहि मांसासृक्पूयविण्मूत्रस्नायुमज्जास्थिक्रिमिससूहोपरि मृदुलतरदुर्मल-चर्मपटमाच्छाद्य करचरणाद्यवयवसन्निवेशं कृत्वा पुरुषकृतदुष्कर्मसहायेन ईश्वरेण स्त्रीशरीरनाम्ना प्रत्यक्षनरके निर्मिते सति किमिदं किमस्य स्वरूपमिति यथार्थ्येन वस्तुस्वरूपं विचारयतुमसमर्थाः स्वभावदीनाः पामराः पुरुषापशदाः मुखस्तनबाहुमूल उदरोरुमूलादिप्रदेशानवलोक्य कामापस्मारदूषिताः पुलकोत्कितशरीराः असदेव रम्यत्वं परिकल्प्य वृथैव वर्णयन्तोऽस्मिन् प्रत्यक्षनरके स्त्रीशरीररूपे निपतितास्मदीयाः। सर्वदुर्मलगन्धास्वादे काप्यनिर्विण्णः श्वशूकरादय इव विसृष्टलज्जाः तद्रक्षणाय यथाधिकारं कुटीरं सम्पाद्य कृषिवाणिज्यसेवां चानेकविधप्रयासमङ्गीकृत्य सुखभ्रान्त्यादि-मध्यवसानेषु अतिघोरं दुःखमेवानुभवन्तोऽनभिज्ञाः मलभक्षका कामलम्पटाः

---

114. क. घ. यदात्म्यात्म ग. इ. ज. यादात्म। 115. क. छ. झ. ञ. श्वः श्वत्।

116. क. ज. व्यापाररूपैहिक। ग. घ. व्यापारदूषितैष्वैहिक।

दुर्मलभाण्डैस्स्त्रीपिण्डैस्सह संसरन्ति। **स्त्रीविषयकनिर्विण्णता।** विवेकिनः [117]धिक्धिक्धिगिति उद्गादपूर्विका दुःखबुद्धिसंवलिता [118]अतिजिहासैव विरागः ·। [119]तत्र [120]स्वर्गादिब्रह्मलोकान्तेषु बहुवित्तव्ययाय कायक्लेशापरचित्तक्षोभसाध्यवैगुण्यबाहुल्य विदूषितपुण्यकर्मनिष्टाद्येष्टनित्य-संदिग्धफलरूपेषु कृष्यादिवदनेकान्तरायग्रस्तेषु स्पर्धासूयापुनः पतनविनाशामेध्यत्वाद्यनेकविधदोषदूषितेषु आमुष्मिकभोग्यपदार्थेषु कुम्भीपाकरेतः कुण्डश्रेष्मकुण्डादाविव च मुखवैवर्ण्य [121]पुरस्सरं।

पुरुषधौरेयाः विचारकुशलाः प्रज्ञातिशयवन्तो ब्राह्मणास्तु सम्यग्विचार्य कुक्षिमलवत्परित्यजन्ति । मुखश्रेष्मकर्णमल नासिकामल दन्तमल जिह्वामललालाजलादिसर्वदुर्मलचात्वालं स्तनौ तु केवलमांसग्रन्थिरूपौ । बाहुमूलयोः कक्षरोमश्वेदोदकादिदुर्गन्धः स्पष्टः। [122]उदरं [123]कुक्षिमलं जन्तुजालविदूषितं। ऊरूमूलगतानां दोषाणां गणनैव न विद्यते। लोके तावत्मलगर्तं वा मूत्रगर्तं वा एकमेकं दुःखकरमवलोक्य नासापुटे पिधायोच्चैरुद्गारं कुर्वातः सर्वेपि जनाः पलाय्य दूराद्दूरतरं गच्छन्ति तादृशयोः मलमूत्रगर्तयोः एकस्मिन्नूरुमूलेऽवस्थितयोः सकाशादनवरतं मलमूत्रयोः [124]स्रवतोः सतोः तादृशस्त्रीशरीरसम्भोगापेक्षया दुर्मल नरकगर्तनिपातनमेव [125]वरमिति निर्विण्णः श्वशरीरे यावन्तो दोषाः तावतः ततोऽतिरिक्ताश्च[126] दोषान् वनितापिण्डे विचार्य स्त्रीवासनां परित्यजन्नेव ब्राह्मणो धीरः। भवन्ति चात्रास्मादीयाः एव श्लोकाः॥

**कामिनीवासनापरित्यागनिरूपणम्।**

---

117. क धिग्धिगि। छ. धिक्धिगि। 118. क. घ. झ. अतिभिहासैव।
119. क. घ तत्र स्थ्येषु। ग. छ. झ. ञ. तत्र स्त्यादि। 120-121. इ पाठे एव वर्तते।
122. ग. ज. झ. अधरन्तु। 123. क. ख. ग. घ. इ. छ. झ. ञ. मल।
124. ग. प्रस्रवतीस्सहितस्ताः। 125. क. घ. इ. छ. ज. झ. ञ. परमिति।

स्रवन्मलपरिक्लिन्ने नवद्वारातिदारुणे ।
कामिनी कायनरके न पतेत् ब्राह्मणः क्वचित् ॥ 27

[127]कक्ष्योपस्थशिरोनासाकेशकण्टकसङ्कटम् ।
कामिनीकायदुर्वुक्षं नाश्रयेत्ब्राह्मणः क्वचित् ॥ 28

मज्जेद्रध्याजले वापि पतेद्वा दुर्मलावटे ।
न स्त्रीदुर्मलगात्रं तु संस्पृशेत् ब्राह्मणः [128]क्वचित् ॥ 29

अकीर्त्यङ्कुरदुर्बीजं कीर्तिवल्लीपरश्वथम् ।
[129]पापपान्थप्रपावृक्षं स्त्रीसङ्गं वर्जयेद्बुधः ॥ 30

पुरुषोच्छिष्टवर्णानि चालयन्तीमितस्ततः ।
चण्डवत्योपमां कान्तां वर्जयेन्मतिमान्नरः ॥ 31

सर्वदुर्मलचात्वारं सर्वानर्थकरण्डकम् ।
स्त्रीपिण्डं पिण्डभुक्सेव्यं न सेवेत बुधः क्वचित् ॥ 32

विकारसूकराकीर्णं दोषकालेयकावृतम् ।
कामिनीं कामचाण्डालवाटिकां ब्राह्मणस्त्यजेत् ॥ 33

मलमूत्रपरिक्लिन्ने [130]स्त्रीबिले [131]कामलम्पटाः ।
रमन्ते ये नमस्तेभ्यो साहसं किमतः परम् ॥ 34

[132]तत्र देहं गर्भगेह गवाक्षनवशान्वितम्
आहतप्राणलाङ्गूलफण्डाकुण्डशिरोध्वनिम् 35

त्वग्वज्रलेपनं राजच्छिरश्शिखरमुन्नतम् ।
तदन्तमन्दिरं प्राणमयं सम्भावयेन्मुनिः ॥ 36

---

127-128. घ. ञ. पाठे नास्ति ।
129. क. पापपान्थाः ग. घ. इ. पापपान्धः ।
130. इ. ज. स्त्र्यभिधे
131. इ. ज. ग. मलभक्षकाः ।
132-133. ख. घ. पाठद्वये वर्तते ।

रागादिवासनाचित्तं तदन्तश्वेतमन्दिरम्।
शुद्धासत्यादिसच्चित्रमन्तर्विज्ञानमन्दिरम्॥ 37

तत्राविद्या गर्भगेहोऽह्यनिर्वाच्या विराजते।
ईश्वरादिविराडान्तवासना रत्नपंक्तय:[133]॥ 38

[134]स्त्रीरत्नमिति जात्यन्धा: दिवान्धा इव भास्करम्।
न विन्दन्ति परं यस्य गूढं परमकारणम्॥ 39

न शीतं वा नचोष्णं वा न जन्ममरणं न हि।
दृष्टयस्सकला:सौम्या: न क्वापि विषमा मति:॥ 40

ज्योतिर्मयात्मविज्ञानं दीपं यं दर्शयेद्बुध:।
अज्ञानध्वान्तविध्वंसप्रण्चडमतिभास्करम्॥ 41

तस्यां विज्ञानगङ्गायां स्नानप्रक्षालिताशय:।
गायत्र्यर्थात्मतत्त्वार्थध्यानसन्ध्यापरायण:॥ 42

दु:खसंसारमध्यस्थं देहलङ्कापुराधिपम्।
दशेन्द्रियमुखं पापं रागद्वेषमहायुधम्॥ 43

अहङ्कारदशग्रीवं मुक्तिसीतापहारिणम्।
हन्तुमेकसमर्थोऽयं बिम्बदर्शनराटव:॥ 44

मत्प्राक्तनमहाभाग्यकल्पपादपसत्फलम्।
प्रत्यग्रूपं परानन्दं दक्षिणामूर्तिमाश्रये॥ [135]इत्याद्या: 45

**पुत्रदोषनिरूपणम्** :- पुत्रदोषा: अप्यसंख्याका: एव। स्वयमनुत्पन्ना: एव तनयोऽनुत्पन्ना: इत्येव [136]पित्रोर्महद्दु:खं करोति। लब्धश्चेद्गर्भवासादिना गर्भपातेन वा तयोरेव दुखं करोति। जननकाले प्रसववेदनया मातुर्वा मृतिं कुर्वन्

---

134-135. ख. घ. पाठद्वये वर्तते। 136. क. घ. छ. पित्रोर्महत्सुखं।

योनिदुर्बलयन्त्रप्रपीडनेन स्वयं वा मृतः तयोरेव महद्दुःखं करोति। अनेन प्रभूत दुःखं भवतीति स्पष्टमेवैतत्। [137]अयुक्तनक्षत्रे जातश्चेन्मातरं पितरं मातुलमात्मानं श्रेयः वां हन्ति रण्डापुत्राः। बालग्रहरोगादिना स्वयं पीड्यमानाः तावेव पीडयन्ति। कुमारस्सन् वयस्यैस्सह रममाणाः, दुर्बलश्चेदन्यैः हतः स्यात्। प्रबलः चेत् अन्यान्वा हन्यात्। नास्याभूदुपनयनं नाधीता च विद्या, नाभूदुद्वाह इति युवा सन् [138]परदारगामी चेत् लोकैः निन्द्यः स्यात्। राज्ञा वा दण्ड्यः स्यान्नरके वा पतेदिति। नास्य सन्तानो अभूत् दरिद्रोऽभूद्धनिकः चेन्मृत इति च पित्रोरपरिमितमेव दुःखं करोतीति सर्वेषां नः प्रत्यक्षम्। एवमेतद्विचार्य पुत्रवासनां परिहरन्नेव ब्राह्मणः परमसुखी। वर्णयन्ति चेममर्थं महान्तः।

अजायमानस्तनयः पितरं क्लेशयेच्चिरम्।
लब्धोऽपि गर्भपातेन प्रसवेन च बाधते॥ 46

जातस्य ग्रहरोगादि कुमारस्य च धूर्तता।
उपनीतोप्य [139]विद्यात्वमनुद्वाहश्च पण्डिते॥ 47

यूनश्च परदारादिदारिद्र्यं च कुटुम्बिनः।
पित्रोर्दुःखस्यनास्त्यन्तो धनी चेन्म्रियते [140]तदा॥ 48

[141]दारासक्तिमनादरात्सुतधनासक्तिं त्वनित्यत्वतः
स्नेहं मोहविवर्जनात्करुणया नैष्ठुर्यमन्तस्त्यज [142]।
[143]औदासीन्यसमाश्रयात्त्यज सुहृन्मित्रादिदुर्वासनाम्
सर्वानर्थकरान् दशेन्द्रियरिपूनेकान्ते सदा जागर॥ 49

---

137. क. घ. ज. युक्तनक्षत्रे।
139. ग. छ. अविद्वत्वं।
141-142. ख. घ. पाठे वर्तते।
138. क. परिदाराहरण।
140. ग. तथा
143-144. ख. घ. पाठे वर्तते।

जिह्वोपस्थसुखभ्रमं ज्यज मनः पर्यन्तदुःखेक्षणात्
पारुष्यं मृदुभाषणात्त्यज वृथालापाश्रमं मौनतं ।
दुस्सङ्गं ज्यज साधुसङ्गमबलाद्गर्वं तु भङ्गेक्षणा
न्निद्रादुःखमनिन्द्य देवमुनि यर्निन्दाकथा संस्मृते ॥ 50

प्रातर्वैदिककर्मतस्तदनुसद्वेदान्तसच्चिन्तया
पश्चाद्भारतमोक्षधर्मकथया वाशिष्ट (वाल्मीकि) रामायणात्
सायं भागवतार्थतत्त्वकथया रात्रौ निदिध्यासना
त्कालो गच्छतु न शरीरभरणं प्रारब्धकण्ठार्पितम्[144] 51

इत्यादि **अनर्थसंसारसागरनिरूपणम्** । अर्थसम्पादनकाले कृषि, वाणिज्य, सेवायाचनादि बहुविधमहत्तरसर्वकारण क्लेशवशात् पुरुषस्य प्रभूतमेव दुःखं भवति । तत्संरक्षणकाले [145]स्वपरजनदर्शनभयात् [146]अतिदुःखं [147]स्पष्टमेवोपलभ्यते । समुचितसमयेऽर्थव्यये प्रसक्ते लोभवशात् प्राणोत्क्रान्तिवत् द्रव्यत्यागमसहमानो ग्रहग्रस्त इव श्वेतः, ततः सञ्चरन्नगुण्ठाग्रेण भुविं विलिखन् दुश्चिन्तासहस्रसङ्कुलितचित्तः मनसि दुःखं, मुखे दैन्यं, वाचि पारुष्यं, अङ्गेषु विन्यासं च कुर्वन् अपस्मारितवत् खिद्यतीत्यतिप्रसिद्धमेवैतत् किं बहुना राजचोरशत्रुमित्रपुत्रभार्यादिभ्यो धनिकस्य दुःखं न केनापि वर्णयितुं शक्यते। मधुबिन्दुमिवमक्षिकाः अर्थमनर्थरूपं समस्ताः [148]अप्यापदः आश्रित्य तिष्ठन्ति। मधुमक्षिकाभिः बह्वायासपूर्वकं मधु सङ्गृह्य [149]एकत्र स्थाने स्थापितमवलोक्यारण्यकः पौरो वा जनः ताश्च मक्षिकाः अग्निज्वालया दग्ध्वा तदपहृत्य गतः । [150]एतद्विज्ञायापि [151]सङ्ग्रहो दुःखकर इति किं ब्रूयात् । मांसखण्डं

---

145. क. स्वजनदर्शन ।

146. क. अपि दुःखं, ज. भयादिदुःखं ।

147. ज. विस्पष्टमेव ।

148. झ. अस्वापदः

149. क. ग. घ. ङ. छ. ज. कुत्र

150. क. ग. घ. ङ. छ. झ. ञ. इत्येतद्विज्ञाया

151. ग. विसङ्ग्रहो ।

कुकरे गृहीत्वा पलाय्य गच्छति सति गृध्रकाककङ्कादयस्तं निहत्य तदामिषं गृहीत्वा न गताः किं? सङ्ग्रही सन् [152]कः सुखी स्यात्। चेतनाचेतनप्रपञ्चे [153]यावान्मात्रे परिगृहीतेऽपि [154]दुःखमेव प्रभूतं परिगृहीतं स्यान्न सुखमिति विचार्य।

[155]नात्यक्त्वा सुखमाप्नोति नात्यक्त्वा विन्दते परम्।
नात्यक्त्वा निर्भयश्शेते सर्वं त्यक्त्वा सुखी भवेत्॥ 52

परिग्रहो हि दुःखाय यद्यत्प्रियतमं नृणाम्।
अनन्तसुखमाप्नोति तद्विद्वान् यस्त्वकिञ्चन॥ 53

सामिषं कुकरं जघ्नुः बलिनोऽन्ये निरामिषाः।
तदामिषं परित्यज्य ससुखं समविन्दत[156]॥ 54

इत्याद्याः विस्मरत् -

अकृत्वा परसन्तापम् अगत्वा खलमन्दिरं।
अक्लेशयित्वा चात्मानं यदल्पमपि तद्बहु॥ 55

इत्यादिस्मृतेः **अनर्थसंसारतरुणोपायनिरूपणम्**। यदृच्छालाभ-सन्तुष्ट[157]स्सन् मोक्षविचारविरोधिना धर्मेणैव मार्गेण यथाधिकारमर्थं सम्पाद्य पत्नीपुत्रादिभ्यो भूतेभ्य इव बलिमन्नं ददत्पञ्चमेऽहनि षष्ठे वा शाकं पचति स्वगृहे '[158]अनृणोऽप्यपरप्रेष्यः सरात्रिंचर मोदते' इत्युक्तरीत्य कालमपनयन् [159]सङ्ग्रहवासनां परित्यजन्नेव ब्राह्मणः परमसुखी।

धर्मार्थं यस्य चार्थेहा तस्यानीहैव शोभना।
प्रक्षलनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्॥ 56

---

152. ग. कश्च सुखी
153. ग. यावन्मात्रार्थगृहीते।
154. इ. दुःखमेवपरिगृहीतं। ञ. नास्ति।
155-156. ग. घ. पाठे नास्ति।
157. क. ग. घ. इ. ज. तत्पदं नास्ति।
158. क. ग. घ. इ. ज. अण्वणोह्यपर।
159. ग. घ. सङ्ग्रहधनान् परित्यज्य जीवन्नेव।

त्यजत सञ्चयान्पुंसो यान्ति नाशमुपद्रवाः ।
नहि सञ्चयवान् कश्चित् दृश्यते निरुपद्रवः ॥ 57

करोति हि दैत्यसुता यावान्मात्रं परिग्रहम् ।
तावान्मात्रं स एवास्य दुःखं चेतसि यच्छति ॥ 58

यावतः कुरुते जन्तुः सम्बन्धान्मनसः प्रियान् ।
तावन्तोऽस्य निखन्यन्ते हृदये शोकशङ्कवः ॥ 59

यद्यत्प्रीतिकरं नृणां वस्तु मैत्रेय जायते ।
तदेव दुःखवृक्षस्य बीजत्वमधिगच्छति ॥ 60

कोन्वर्थंसुखयत्नेन कामो वा मृत्युरन्तिके ।
आघातं नीयमानस्य वध्यस्येव न तुष्टिदः ॥ 61

नित्यर्थितेनवित्तेन दुर्लभेनात्ममृत्युना ।
गृहापत्यात्मपशुभिः का प्रीतिः साधितै[160]श्चलैः ॥ 62

अर्थमनर्थं भावय नित्यं नास्ति ततस्सुखलेशस्सत्यम् ।
पुत्रादपि धनभाजां भीतिः सर्वत्रैषा विहिता रीतिः ॥ 63

[161]आयुर्गच्छति पेटिकामिव जलं त्यक्त्यैव देहं जवात्
गच्छन्तीन्द्रियशक्तयोऽपि कुलपा यद्वन्नरं निर्धनम् ।
प्रज्ञा गच्छति दावदाहनमये नीडं मृगीव क्षणात्
ज्ञात्वा सत्वरमाश्रयात्मपदवीं देहं वृथा मा कृथा ॥ 64

स्वारस्यैकसुबोधचारुमनसे तत्त्वानुभूतिस्वयं
दातव्या नतु मोहदग्धसुधिये दृष्टान्तरज्ञाय च ।
ये यं रम्यविटार्पितोत्तमशिरःप्रान्ते चकास्ति स्वयं
सा चिन्मर्कटहस्तदेशपतिता किं राजकेरीतकी[162] ॥ 65

---

160. ग. घ. जनैः ।

161-162. घ. घ. पाठे वर्तते ।

इत्याद्याः। [163]अन्नपानादीन् क्षुत्पिपासाव्याधिपीडापरिहारार्थं वस्त्रादीन् शीतनिवारणगोप्यङ्गगोपनमात्रार्थञ्चौषधवत् सेवेत। नत्वतिमात्रसेवायां शरीरे मदः स्यात्। मनसि रजस्तमो[164]बुद्धिः न स्यात्। तच्च मुमुक्षोः श्रेयः [165]परिपन्थि।

मानसोऽभ्युदयो नाशो मनोनाशो महोदयः।
मनोज्ञनाशमभ्येति मनोज्ञ्य सहि शृङ्खले॥ 66

यदृच्छयोपपन्नानां अद्याच्चेष्ठ मुतापरम्।
तथा वासः तथा शय्या प्राप्तं प्राप्त भजेन्मुनिः॥ 67

इत्युक्तत्वाद्यथा [166]कथञ्चित् [167]प्राणमयस्य प्रेतस्येव सोदकपिण्ड मन्त्रोदके ददत् देहनिर्वाणं कृत्वा स्वस्वरूपविचारे अप्रमत्तः पत्नीपुत्रादिभिस्सह संसरन्नपि तदीयसंपत्तिविपत्तिभ्यां चित्तक्षोभमकुर्वन्नुदासीनः अतिथिवद्गृहे निवसन्।

का ते कान्ता कस्ते पुत्रस्संसारोऽयमतीव विचित्रः।
कस्य त्वं कः कुत आयातः तत्त्वं चिन्तय तदिदं भ्रान्त॥ 68

इत्युक्त्वात् नाहं कस्यचिन्न, ममापि कश्चिदिति निश्चित्य परं पौरुषमाश्रित्य तत्त्वमेव विचारयन्, देह तत्सम्बन्धिहानिवृध्यादिपरिप्राप्तयः खेदमोदयोरेकरूपमनः प्रसादसम्पन्न एव ब्राह्मणो मोक्षार्हो भवति।

अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत।
अव्यक्तनिधनान्येव तत्र का परिदेवना॥ (भग.२-२८) 69

सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः
संयोगा विप्रयोगान्ताः मरणान्तं तु जीवितम्॥ 70

---

163. ग, घ. ज. अन्नपानार्थी।
164. घ. ज. बुद्धिर्वा स्यात्।
165. ग. घ. परिबन्धी।
166. क. घ. छ. इदं।
167. क. ग. घ. छ. ञ. चित्रार्पणमयस्य।

यथा काष्ठं च काष्ठं च समेयातां महोदधौ ।
समेत्य च व्यपेयातां तद्वद्भूतसमागमः ॥ 71

मातापितृसहस्राणि पुत्रदारशतानि च ।
अनेकशो व्यतीतानि कस्य त्वं तानि कस्य वा ॥ 72

वैद्याप्यातुराः सन्ति बलवन्तोऽपि दुर्बलाः
श्रीमन्तश्चापरे षण्डाः विचित्रः कालपर्ययः ॥ 73

ये च निष्परुषैर्गीतवादितैरप्युपस्थिताः ।
ये च दीनाः परोन्नादाः तेषु कालसमाश्रयः ॥ 74

[168]मातापितृसहस्राणि पुत्रदारशतानि च ।
संसारेष्वभ्यतीतानि तेषु तेषु तदा तदा ॥ 75

नैवास्य कश्चिद्भवति नायं भवति कस्यचित् ।
व्यर्थोऽयं परितोषो मे शोच्यः कः केन विद्यते ॥ 76

क्वासौ क्वाहं गमिष्यामि कोन्वहं किमहं स्थितः ।
तस्मात्किमनु शोचेयं इत्येव स्थापयेन्मनः ॥ 77

[169]पथि सङ्गमएवायं दारैरन्यैश्च बन्धुभिः ।
नायम[170]न्त्यन्तसंवासो विद्यते जातु केनचित् ॥ 78

क्वनु तेऽद्य पिता [171]राजन् क्व नु तेऽद्य पितामहः ।
[172]न त्वं पश्यसि तानद्य न त्वां पश्यन्ति ते क्वचित् ॥ 79

---

168. क. ख. घ. इ. पाठेषु अयं श्लोकः नास्ति ।
169. ग. घ. तद्धि ।
170. ग.घ. मत्यन्तसंसारो क. छ. झ. मत्यन्तसंवीनो
171. ग. घ. वापि ।
172. क.घ.घ.छ. सत्यं । झ. सर्वं ।

कुटुम्बेषु न [173]सज्जेत न प्रमाद्येत्कुटुम्ब्यपि ।
विपश्चिन्नश्वरं पश्येत् अदृष्टमपि दृष्टवत् ॥ 80

पुत्रदाराप्तबन्धूनां सङ्गमः पान्थसङ्गम ।
अनुदेहं वियन्त्येते स्वप्ने [174]निद्रागमे यथा ॥ 81

एवं परिमृशन्युक्तो गृहेष्वतिथिवद्वसन् ।
न गृहैरनुबध्येत निर्ममो निरहङ्कृतिः ॥ 82

[175]न कश्चित्पितरः पुत्रा दाराः पितृव्यपितामहाः ।
[176]पतति वितते संसारेऽस्मिन् गताः भवकोटयः ॥ 83

तदिह सुहृदां विद्युत्पातोज्वलान् क्षणसङ्गमान् ।
सपदि हृदये भूयो भूयो निवेश्य सुखी भव ॥ 84

पन्थानमिव वर्त्मनि क्षितिरुहां नद्यामिव भ्रस्यताम् ।
मेघानामिव पुष्करे जलनिधौ सांयात्रिकाणामिव ॥ 85

संयोगः पितृमातृबन्धुतनयभ्रातृप्रियाणां सदा ।
सिद्धो दूरवियोग एव विदुषां शोकादयः [177]कस्तव ॥ 86

[178]संच्छिद्यते यथा तत्त्वे संशयास्तव चेतसि ।
तथाद्य संप्रवक्ष्यामि श्रुणु दृष्टान्तपूर्वकम् ॥ 87

आकाशमध्यगा पृथ्वी सैव चूर्णत्वमागता ।
चूर्णं कपालतां यातं कपालानि घटात्मतां ॥ 88

---

173. इ. ज. सज्जेरन् ।

174. क. ग. घ. छ. ञ. विस्तागमे ।

175. ग. क. घ. छ. ञ. न कति ।

176. ग. घ. पतते वितति ।

177. क. ग. घ. इ. छ. झ. ञ. कस्तदा ।

178-179. ख. घ. पाठे एव वर्तते ।

घटो नष्टः कपालेषु कपालानि च चूर्णके
चूर्णं पृथिव्यां तन्नाशे व्योमैकमवशिष्यते ॥ 89

घटोत्पत्तेः पटोत्पत्तेः स्थितौ ध्वंसैः तदूर्ध्वतः ।
सन्मत्रं सर्वदा ब्रह्मा निर्नाशमवशिष्यते ॥ 90

स्वप्रतिष्टितं परम्ब्रह्मा न कुत्रापि विलीयते ।
विनाशकारणाभावात् अद्वैतात्मस्वभावतः ॥ 91

विश्वभ्रान्त्याश्रयत्वाच्च विश्वबाधावधित्वतः ।
विश्वं संस्पर्शरहितं सन्मात्रं ब्रह्म शिष्यते ॥ 92

सच्चिदानन्दसम्पूर्णं दृश्याभासविवर्जितम् ।
मौनेकगम्यं यद्ब्रह्मा तदेवाहं परं [179]पदम् ॥ 93

इति स्वसाक्षिकस्यात्मा विज्ञानकोशकौशलात् ।
सदेहो वा विदेहो वा विमुक्तस्त्वं सुखी भव ॥ 94

इत्याद्याः एहिकभोगसन्धानपदार्थस्य अत्यासक्तिरहित इव आमुष्मिकभोगसाधनस्वर्गादिब्रह्मलोकान्तसर्व[180]पदार्थरहितः एव ब्राह्मणो परममोक्षार्हो भवति । **दिव्यसुखासक्तिपरित्यागनिरूपणम्** । अहो स्वामिन् "अहरहस्नायात्" "अहरहस्सन्ध्यामुपासीत" "उद्यन्तमस्सयन्तमादित्य-मभिध्यायन् कुर्वन् ब्राह्मणो विद्वान् सकलं भद्रमश्नुते" "उदिते सूर्यं प्रातर्जुहोति" "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" अग्नीषोमीयं पशुमालभेत" अक्षय्यगुँहवै चातुर्मास्ययाजिनसुकृतं भवति "ज्योतिष्ठोमेन स्वर्गकामो यजेत" "अपामसोमममृता अभूम" अथातो धर्मजिज्ञासा"

---

180. क. ख. घ. पदार्थेष्वासक्ति ।

यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम् ।
अभिलाषोपनीतं यत् तत्सुखं स्वः पदास्पदम् ॥ 95

"ते नरः स्वर्गगामिनः" इत्यादि प्रवृत्तिपरवेदशास्त्रपुराणादिप्रामाण्यमङ्गीकृत्य श्रद्धालवाः शिष्टजनाः । कर्मोपाससानुष्ठानं कृत्वा पुण्यलोकेषु देवाद्युत्तमशरीराण्यवाप्य दिव्यसुखान्यनुभवन्तीति श्रुतत्वात् । कथं कुम्भीपाकरेतः कुण्डश्लेष्मकुण्डादाविव तत्रासक्तिं परित्यजेदिति चेत् श्रुणु सौम्य ! यावन्नेव वेदशास्त्रपुराणादीनि कर्मोपासनादीनि तत्साध्यदेवादिशरीरोपभोग्यपुण्यश्लोकान् तत्रत्य सुखानि च प्रतिपादयन्ति तान्येव । को हि तद्वेद यद्यमुष्मिन् लोकेऽस्ति वा न वेति प्लवाह्येते अधृढाः यज्ञस्वरूपाः इष्टाहर्तं मन्यमाना[181]वरिष्टं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः नीहारेण प्रवृत्ताः जप्ल्याः च [182]सुकृत उक्थ शासश्चरन्ति । "क्षीणे पुण्ये मर्त्यलोकं विशन्ति ।"

कर्मनिष्ठाः स्वयं धीराः मूर्खाः पण्डितमानिनः ।
मूढा एव न विद्वांसः तेषां नास्ति परा गतिः ॥ 96

अन्धेनैः यथा चान्धो नायमानाः सुदारुणे ।
अन्धकूपे पतन्त्येव तथा कर्मरताः जनाः ॥ 97

ये लंघयन्ति संसारसागरं [183]कर्मयज्ञतः ।
ते महातमसा सर्वं पश्यन्नेव [184]रविं विना ॥ 98

**कर्मणां तुच्छफलत्वं निरूपणं** इत्यादिकर्मणां सन्दिग्धत्वात्तुच्छफलत्वं "तद्यथेह कर्मचितो लोकः क्षीयते,

---

181. क. ख. ग. घ. छ. झ. वष्टम्भान्यच्छ्रेयो

182. घ. इ. सुकृतनृपशासश्चरन्ति । ज. छ. सुत्वप उक्थशासश्चरन्ति । ञ. सुकृत धृढ शासश्चरन्ति ।

183. ग. घ. कर्मसंज्ञतः ।

184. क. ख. घ. ग. छ. खगे ।

एवमेवामुत्रपुण्यकृतो लोकः क्षीयते (छाः ८-१-६) "परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्ना स्त्यकृतः कृतेन" (मुण्डकः १-२-१२)

आब्रह्मभवनाल्लोकाः पुनरावर्तिनोर्जुन।
मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते॥ (भगः ८-१६) 99

कर्मणां परिणामित्वादाविरिञ्चादमङ्गलम्।
विपश्चिन्नश्वरं पश्येददृष्टमपि दृष्टवत्॥ 100

बहूनीन्द्रसहस्राणि दैतेयानां शतानि च।
अभ्यतीतानि कालेन कालो हि दुरतिक्रमः॥ 101

दिविसञ्चरमाणानि ह्रस्वानि च महन्ति च।
ज्योतींषि च यथाकालं पतमानानि [185]लक्षयेत्॥ 102

[186]कोटयो ब्रह्मणां याताः गताः सर्गपरम्पराः।
पांसुवद्भूमिपाः याताः का धृतिः मम [187]जीविते॥ (वराह ३-२२) 103

न नरः स्वर्गतिं कांक्षेन्नारकीञ्च विचक्षणः।
[188]नेमं लोकञ्च कांक्षेत देहावेशात्प्रमाद्यति॥ 104

इत्यादिना सहेश्वराणां लोकानामनित्यत्वेनातिहेयत्वं। "[189]अहल्यायै जार"

निपात्येन्द्रमहल्यायां स्वपुत्र्यां च पितामहम्।
कन्दर्पो जगदुद्दर्पो मिथुनी कुरुते निशम्॥ 105

"तेषाम[190]सुराणां तिस्रः पुर आसन्नयस्मथ्य्वमाधरजताधहरिणी ता देवा जेतुं नाशक्नुवन्। विश्वरूपो वै त्वाष्ट्रः पुरोहितो देवानामासीत्स्वस्त्रीयो सुराणां"

---

185. क. घ. ख. छ. ज. झ. ञ. लक्षये।
186. क. घ. को वयो।
187. क. ख. ग. घ. इ. छ. झ. ञ. जीवने।
188. क. ख. घ. ञ. समम्।
189. ग. घ. जारमिन्द्रमहल्यायां।
190. क. ग. घ. इ. झ. मपराणम्।

इत्यारभ्य "तं भूतान्यभ्यक्रोशन् ब्रह्म हन्नितीन्त्यन्तेन च" तत्र तत्र स्वर्गादिसुखानां रागद्वेषलोभभयपराजयाद्यनेकदु:खविदूषितत्वं च प्रतिपादयति । दु:खमिश्रं च सुखं विषसपृक्तमधुवदिति हेयम् ।

त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।
कामक्रोधस्तथा लोभः तस्मादेतत्रयं त्यजेत् ॥ (भागः १६-२१) 106

इति भगवद्वचनात् । **परलोकवासनादिपरिहारनिरूपणम्** तथा चास्मन्निव परेष्वपि लोकेषु परस्परभार्यापहरणे राज्यभङ्गे रागद्वेषस्पर्धासूया तिरस्कारे शतृपीडाविनाशे सति अमेध्यत्वादिदोषदूषितत्वश्रवणात् [191]पल्यपेक्षया पट्टणवदविचारितरमणीयेष्वपि सम्यग्विचार्यातिहेयेषु नासक्तिं कुर्यादिति निश्चित्य

अविरिञ्चद्विरक्तश्चेत्कुम्भीपाकादिवेहयः ।
आत्पाशेषक्रियाकार्यो मुक्तो स विनियुज्यते ॥ 107

इत्यादिशास्त्रात् तांश्च पुण्यलोकान् कुम्भीपाकसमानान् ।

ब्रह्मादीनां शरीराणि श्वसूकरशरीरवत् ।
यतो जिहासितान्येव तस्माद्धर्मोऽपि पाप्मधीः ॥ 108

इत्युक्त्वात् तत्रत्य देवादिशरीराणि श्वसूकरशरीरसमानानि । तत्रत्य सुखानि च दु:खरूपाणि, तत्साधनकर्मोपासनानि, सापस्मारचेष्टारूपाणि चेति परिभाव्य परलोकवासनादीनिपरिहरन्नेव ब्राह्मणोधीरः । सर्वैरपि प्रकारैः स्वस्वरूपज्ञानं सम्पाद्य शरीरपरिग्रहं परिहृत्य [192]शरीररहितः सर्वपरिपूर्णब्रह्मस्वरूपमात्रश्चेत् ब्राह्मणः परमसुखमश्नुते । सति च शरीरपरिग्रहे दु:खस्वरूपमुद्भूतं । वस्तुतस्तु दु:खमेव प्रभूतं न सुखलेशोप्यस्ति इत्येतन्न विस्मर । स्वयमीश्वराः अपि

---

191. अत्रारभ्य 'घ' पाठः अष्टमप्रकरणपर्यन्तं नास्ति । च. पाठः चतुर्थ प्रकरणपर्यन्तं नास्ति ।
192. क. ख. ग. शरीरहेतु ।

रामकृष्णादयो लोकदृष्ट्यपेक्षया शरीरपरिग्रहेणैव नानाविधसङ्कटान् अवापुरिति शुश्रुमोऽस्मादृशां सति च शरीरसम्बन्धे ब्रह्मलोके वा वैकुण्ठे वा कैलासेऽपि [193]वा कथं सुखिनो भवाम। **उपासकानां मोक्षविचारः**। अहो स्वामिन्! कर्मसाध्यत्वात्स्वर्गलोकादि[194]सर्वपुण्यलोकानामुक्तरीत्या क्षयिष्णुत्वेन भवन्त्विति हेयत्वं। सगुणब्रह्मोपासनादिपरिपाकसाध्यानां ब्रह्मलोकवैकुण्ठकैलासानां कथं हेयत्वं। तत्र गतानामुपासकानां पुनरावृत्तिराहित्य श्रवणादिति चेत् श्रुणु! सौम्य! यद्यपि तत्र गतानामुपासकानां पुनः गर्भनरकनिपातो नास्ति। तथापि स तु मोक्षो न भवति। शरीरसम्बन्धस्य सत्वात् "सूर्याचन्द्रमसौः महिमानौ ब्राह्मणो विद्वानभिजयति। तस्माद्ब्राह्मणो महिमानमाप्नोति तस्माद्ब्राह्मणो महिमानं।"

यावदधिकारमवस्थितिराधिकारिकाणाम्।
ब्रह्मणा सहते सर्वे सम्प्राप्ते प्रतिसञ्चरे॥ 109

परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्।

इत्यादिशास्त्रोपासकानां सूर्यमण्डलञ्च चन्द्रमण्डलञ्च भित्वा ब्रह्मलोकान् गत्वा तत्र ईश्वरादिसन्निधौ ब्रह्मात्मापरोक्षसम्यग्ज्ञानमवाप्य यावत्कल्पं तत्र सुखेन स्थित्वा महाप्रलये निर्विशेषपरमकारणब्रह्मस्वरूपमात्रावस्थानरूपपरममोक्षस्य प्रतिपादितत्वात्। **दृश्यमात्रं सर्वमनित्यम्**। न च सूर्यचन्द्रादिलोकानां प्रलयेऽपि ध्वंसो नास्तीत्याशङ्कनीयम्। न हि स्वप्नपरिदृष्टपदार्थाः केचिन्नित्याः परिदृश्यन्ते स्वप्नत्वाविशेषात्सर्वोप्यनित्याः असत्याश्च। तथा दृश्यत्वावशेषात्। सर्वमप्यसत्यमनित्यमेवेत्येतन्न विस्मर। ब्रह्माण्डदाहकप्रलयग्निः ब्रह्माण्डाद्बहिरवस्थितं वैकुण्ठलोकादिकं न स्पृशतीति केचिन्मूर्खाः प्रलपन्ति।

---

193. क. पाक्रम्।

194. ज. झ. सर्व पदं नास्ति।

तदेतद्भ्रान्तप्रलपितं नादर्तव्यं भवादृशैः पुराणविरोधात् । सुषुप्तौ सम्मीलने नयनयोरेव किमपि नास्ति किमु वक्तव्यं महाप्रलये ? किमपि नास्तीति । ब्रह्माण्डदाहक प्रलयाग्निः वैकुण्ठादिकं न स्पृशतीति कोऽयं नियमः । न हि पुरदाहकोग्निः पूर्देवीकुटीरमात्रमवशेषयति ? तस्मादनित्यमेव सर्वं दृश्यजातमात्रं। यत्र क्व वा तिष्ठतु नाम शरीरसम्बन्धो दुःखकरः इति बहुवारमवोचाम । अत्यन्त दुःखलम्पटः शरीर सम्बन्धः कथमिति चेत् अत्यन्तदुःखलम्पटोऽपि रोगी निद्रां गतश्चेत् तस्यां दशायां शरीराध्यासाभावात् निर्दुःखः सुखेनावस्थितः, निद्रा प्रतिबुद्धः पुनः शरीराध्यासप्रसक्तौ शरीरदुःखे प्राप्ते निद्रासमयसमनुभूतदुःखनिवृतिपूर्वकसुखमनुस्मृत्य निद्रां चेदायाति सुखं मे स्यान्नोचेन्नेदं दुःखं सोढुं शक्यमिति बहुशः शरीरदुःखे द्वेषं करोतीत्येत[195]त्सर्वं जनप्रसिद्धं । विज्ञाय स्वयमनुभूयापि शरीरमेव सर्वदुःखकारणमिति तदभिमानं हित्वाऽऽत्मसुखमेव [196]परममुपादेयम् ।

> यत्सुखं साधनाधीनं दुःखमेव तदुच्यते ।
> अनन्यसाधनं तस्मात्स्वात्मस्थं परमं सुखम् ॥ 110

इति विवेचयतुमसमर्थं प्रत्युत शरीरतदुपभोगार्थं [197]लौकिकवैदिक-सर्वकर्मनिरतमतिमूढमल्पप्रज्ञं ब्राह्मणापशदं नराकारं पशुं गुरुशास्त्रे किमिति बोधयेतां तदुक्तम् ।

> उपरतकरणार्थे सुप्ति[198]कालेऽपि सौख्यम्
> भवति सकलजन्तोरेव तद्वस्तु कीदृक् ।
> इति तु यदि विवेको नैव जायेत पुंसः
> कथमिह गुरुशास्त्रे बोधयेतां पशुं तम् ॥ 111

---

195. क. ख. ग. इ. सर्वजन्मप्रसिद्धम् ।
196. क. ग. इ. छ. ज. परममुपायं ।
197. ञ. लौकिकसर्वकर्म ।
198. ञ. काले तु सौख्यं ।

[199]ब्रह्मानन्द महाम्बोधिगामिन्यन्तर्मलापहा ।
निवृत्तिसुखकल्लोला प्रत्यगात्मप्रवाहिनी ॥ 112

विवेकशुद्धसालिला सन्तोषामृतसद्रसा ।
संकल्पतरुसच्चट्नी शमगाम्भीर्यशालिनी ॥ 113

तस्यां विज्ञानगङ्गायां स्नानप्रक्षालिनाशय. ।
गायत्र्यार्थात्मतत्वार्थ ध्यानसन्ध्यापरायणः ॥ 114

श्रीगुरुचरणद्वन्द्व सद्भक्तिमणिकर्णिका ।
हृत्तापशमनी पुंसां यस्यामन्तः प्रकाशते ॥ 115

रागोत्कर्षमहापुण्यहिमवत्प्रान्तचारिणी ।
सद्बुद्धिभूमिगास्वच्छशीलवैराग्यसत्थटा ॥ 116

औदासीन्यव्रतो धीरो निग्रहाचलेन्द्रियः ।
सोऽहं भावजपं कुर्यात् तिष्ठन् ब्रह्मसुखासने[200] ॥ 117

[201]समूहो भूतभाण्डानां धातुशिल्पविनिर्मितः ।
स्वकर्मेन्धनसंवीतः पच्यते कालवह्निना ॥ 118

इत्युक्त्वात् कोटरस्थेनवह्निना जरद्वृक्षा इव तापत्रयानल[202]ज्वालया दन्दह्यमानाः सन्तः सर्वेऽपि लोकाः [203]सहेश्वराः प्रतिक्षणं खिद्यन्तीत्येतदवलोक्य श्रुत्वा च विसृज्य लज्जां नवेभ्यो रन्ध्रेभ्यो स्रवन्मलपरिक्लिन्नदुर्मलकुकलेबरमेतत्प्राक्तन-दुष्प्रारब्धवशाद्धृत्वाप्युतरत्र पुनरेवं जातीयकं शरीरं एतज्जातीयक भोगसाधनलोकान् वा नाकांक्षेत् ब्राह्मणो यदिच्छ्रेयः । केचन कर्मठाः उपासकाः च पुण्यलोकान् प्रशंसन्ति चेत् [204]प्रशंसन्तु कामम् ।

---

199-200. ख. इ. पाठे एव वर्तते ।

201. क. ख. इ. झ. स मूको ।

202. क. ख. इ. ज्वालायां ।

203. क. ख. ग. इ. सन्देहेश्वराः ।

204. क. ख. ग. प्रसंसनं तु ।

वानराणां विवाहेषु गर्दभा एव गायकाः ।
परस्परं प्रशंसन्ति ह्यहोरूपमहोध्वनिः ॥ 119

इति न्यायो[205]त्रानुसन्धेयः विवेकिभिः । न तु तेषां प्रलपितमाकर्णनीयं किं बहुना शरीरमेव महद्दुःखं शरीरोपभोग्याः स्त्री अन्नपानादि ब्रह्मलोकान्ताः विषयाश्च विषवत्परित्याज्याः इति निश्चित्य यावत्स्वपि भोगसाधनपदार्थनिचयेषु सङ्गृहीतेष्वपि आशायाः परिपूरणमेव न भवति । मनसस्तु महदेव दुःखमिति विचार्य

यत्पृथिव्यां ब्रीहियवं हिरण्यं पशवः स्त्रियः
नालमेकस्य तत्सर्वमिति मत्वा शमं व्रजेत् ॥ 120

इत्यादिस्मृतेः सर्वमन्तः परित्यज्य [206]बहिः वञ्चकवद्व्यवहरन् विक्षेप [207]बाहुल्याभावे गृहस्थस्सन् सुखेन ब्रह्मात्मविचारं कुर्यात् [208]सति विक्षेपे बाहुल्ये सन्यस्यैव श्रवणं कुर्यादित्यनवद्यमेव वैराग्यं विचारितं ।

**शमादिषट्कनिरूपणम्** : शमादिषट्कसम्पत्तिर्नाम शमः, दमः, उपरतिः, तितिक्षा, आत्मसमाधानं, श्रद्धेति च षड्विधः । "शान्तोदान्त उपरतिस्तितिक्षुः समाहितो भूत्वा आत्मन्येवात्मानं पश्येदित्यादि (सुबाल- ९-१४) श्रुतेः "श्रद्धावान् लभते ज्ञानं (भग- ४-३९)" इत्यादिस्मृतेश्च । तत्र शमो नाम स्रक्चन्दनवनितादिविषयेभ्यः प्रतिपादितदोषदृष्ट्या मनः स्वभावप्रवृत्तं निवर्तयित्वा [209]स्वस्वरूपब्रह्मविचारे मनसोऽवस्थापनमेव । एवं विधशमवानेव ब्राह्मणो ब्रह्म जानाति नान्यः ।

---

205. ख. ग. ज. अत्र द्रष्टव्यः ।

206. ज. बलाद्वञ्चक ।

207. क. ख. ग. इ. छ. ज. बाहुलया भावे ।

208. क. ग. इ. ज. झ. इति च ।

209. क. ख. ग. स्वप्नरूप ।

नाविरतो दुश्चरितो नाशान्तो नासमाहितः ।
नाशान्तमानसो वापि प्रज्ञानेनैव माप्नुयात् ॥ 121

(कठ २-२४. नारा. परि - ९-१९ महो ४-६९)

चीरवासा जटी [210]वापि त्रिदण्डी मुण्ड एव वा ।
वृथा क्लिश्नाति सब्रह्मन् यस्य शान्तं न मानसं ॥ 122

इत्यादिशास्त्रात् । भवन्तिचात्र श्लोकाः ।

[211]चित्तचाञ्चल्यमापन्ने स्वानन्दो न प्रतीयते ।
दीपे चञ्चलतां याते कामिनीवदनं यथा ॥ 123

ब्रह्माभिन्नमिवात्मानं ब्रह्मणा योजयन्त्यहो ।
बिम्बदृष्टिर्विभिन्नांगं सन्धानशरणे यथा ॥ 124

यथोक्तसाङ्गश्रवणनिष्टस्य ब्रह्मवादिनः ।
बुद्धिशुद्ध्यैर्मया सम्यग्बिम्बदृष्टिर्विचार्यते ॥ 125

त्रिविधा बिम्बदृष्टिस्स्यात्सर्वभ्रान्तिविनाशनी ।
सदात्मदृष्टिः चिद्दृष्टिः सुखदृष्टिः तथापरा ॥ 126

पुनस्सा द्विविधा प्रोक्ता वेदान्तार्णवपारगैः ।
आभासदृष्टिराद्या स्यात्सदाभासमतिस्सदा ॥ 127

आनन्दबिम्बदृष्टिस्स्यादानन्दाभासदीरिते
ब्रह्मात्मज्ञाननिष्ठानां दृष्टिषट्कमिदं स्मृतम् ॥ 128

तिष्ठन्तु देवब्रह्माद्याः कल्पाख्याः क्षणजीविताः ।
कैवैषाङ्गणनाश्वास्य ब्रह्मसत्तात्म दर्शिनः ॥ 129

---

210. ख. वासी ।    211-212. ख. इ. पाठे वर्तते ।

लक्ष्मीगौर्यादिसंश्लिष्टाः माधवो शङ्करादयः ।
भुञ्जन्ते यन्महासौख्यं ब्रह्मानन्दकणो हि सः ॥ 130

कौपीनस्थापि सत्यवचसः तिष्ठन्त्विन्द्रादयस्सुराः ।
कैवैषाङ्गणनाश्वास्य ब्रह्मानन्दात्मदर्शिनः ॥ 131

बिम्बदृष्टिसुधामेतां वेदान्तार्णवमध्यगाम् ।
गुरुश्री विष्णुसाहाय्याद्विचारमथनोद्धृताम् ॥ 132

जरामरणदुर्दुःख समूलोद्धरणक्षमाम् ।
संगृह्यत्वं जितेन्द्रियः किमालस्यं करिष्यसि[212] ॥ 133

तस्मात्सर्वात्मना तात निगृहाण मनोधिया
मध्यावेशितया युक्तः एतावान् योगसङ्ग्रहः ॥ 134

नानामतं महर्षीणां साधूनां योगिनां तथा ।
दृष्ट्वा निर्वेदमापन्नः को न शाम्यति मानवः ॥ 135

यानि दुःखानि या तृष्णा दुस्सहा ये दुराधयः ।
तत्सर्वं शान्तचेतस्सु तमोर्कस्यैव विनश्यति ॥ 136

श्रुत्वा दृष्ट्वा च स्पृष्ट्वा च धृत्वा भुक्त्वा शुभाशुभम् ।
न हृष्यति म्लायति च [213]कथ्यते शान्तसप्तकम् ॥ 137

तुषारकरबिम्बाच्छं मनो यस्य निराकुलम् ।
मरणोत्सवयुद्धेषु स शान्त इति कथ्यते ॥ 138

**दमविचारः** । दमोनाम शब्दादिविषयेभ्यः [214]श्रोत्रादि सर्वेन्द्रियाणि [215]निवर्तयित्वा स्वात्मविचारे मनसा सह सर्वेन्द्रियाणां संय्योजनमेव । तदुक्तं

---

213. क. ग. इ. यस्य शान्त इति कथ्यते । ज. यस्य शान्त इति गद्यते ।

214. क. ख. ग. इ. श्रान्तादि ।

215. छ. ज. निवर्तयित्वा मनसा सह ।

यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः।
इन्द्रियाणीन्द्रियार्थेभ्यः [216]तस्य प्रज्ञा प्रतिष्ठिता॥ 139

निवर्तयित्वा [217]रसनां रसेभ्यः घ्राणं च गन्धाच्छ्रवणं च शब्दात्।
स्पर्शात्तनुं रूपगुणाच्च चक्षुः ततः परं पश्यति स्वं स्वभावम्॥ 140

जाग्रत [218]तस्मान्मा भुंक्ष्व विषयानसदिन्द्रियैः।
आत्मग्रहणनिर्भूतं पश्यन् [219]वैकल्पिकं भ्रमम्॥ 141

अल्पेनाभ्यवहारेण रहस्थानासनेन च।
[220]ह्रीयमाणानि विषयेषु इन्द्रियाणि निवर्तयेत्॥ 142

प्रकीर्णविषयारण्ये धावन्तं [221]विप्रमाधमम्।
ज्ञानाङ्कुशेन कुर्वीत वश्यमिन्द्रियदान्तिकम्॥ 143

**उपरतिर्नाम** ज्ञानेन्द्रियाणि, कर्मेन्द्रियाणि च स्वस्वविषयेभ्यो मनसा सह निवर्तयित्वा श्रवणमननध्यानान्येव पुरुषार्थतत्त्वज्ञानसाधनीति मत्वा तदर्थं सर्वव्यापारपरित्यागः एव। तदुक्तम्।

सर्वं ब्रह्मात्मकं [222]तात विद्ययात्ममनीषया।
परिपश्यन्नुपरमेत्सर्वतो मुक्तबन्धनः॥ 144

नैतद्वस्तुतया पश्येद्दृश्यमानं विनश्यति।
असक्तचित्तो विरमेदिहामुत्रचिकीर्षितात्॥ 145

**तितिक्षा नाम** शीतोष्णसुखदुःखमानावमानादिद्वन्द्वसहनमेव। तदुक्तं

---

216. ख. छ. ग. तस्य प्रतिष्ठिता।
217. क. ग. छ. इ. झ. ञ. रसना।
218. क. ख. इ. तस्मादुद्धुद्धव।
219. क. ख. इ. वैकल्पकम्।
220. क. इ. प्रीयमाणानि।
221. ख. इ. विप्रमाधिनम्।
222. ज. तावत्।

मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदु:खदा:।
आगमापायिनो नित्या: तां स्तितीक्षस्व भारता॥ (भग. २-१४) 146

शत्रौ मित्रे पुत्रे बन्धौ मा कुरु यत्नं विग्रहसन्धौ
सर्वस्मिन्नपि पश्यात्मानं सर्वतोत्सृज भेदज्ञानम्॥ 147

प्राणायामं प्रत्याहारं नित्यानित्यविवेकविचारम्।
येप्यसमेत शमादिविधानं कुर्ववधानं महदवधानम्॥ 148

योगरतो वा भोगरतो वा सङ्गरतो वा सङ्गविहीन:।
यस्य ब्रह्मणि रमते चित्तं नन्दति नन्दति नन्दत्येव॥ 149

**आत्मसमाधानं नाम** आत्मविचाररूपे श्रवणे श्रवणाङ्गयो: मनननिदिध्यासनयोश्च मनस्समाधाय विक्षेपदु:खरहिततया मनसोऽवस्थानमेव तदुक्तम्।

तस्मादसदभिध्यानं यथा स्वप्नमनोरथम्।
हित्वात्मनि समाधत्स्व मनोसद्भाव भावितम्॥ 150

**श्रद्धा नाम** गुरु वेदान्तवाक्येषु विश्वास: एव। तदुक्तं

श्रद्धावान् लभते ज्ञानं तत्परसंयतेन्द्रिय:।
ज्ञानं लब्ध्वा परां शान्तिं अचिरेणाधिगच्छति॥ (भग. ४-३९) 151

[223]गुरुचरणाम्बुजनिर्भरभक्त: संसारादचिदाद्भवमुक्त:।
सेन्द्रियमानसनियमादेकं द्रक्ष्यसि निजहृदयस्थं देवम्॥ 152

वेदवेद्यब्रह्मविद्या ब्रह्मयज्ञपरायण:।
ऋणत्रयपरिष्टाङ्ग: भावतर्पणतत्पर:॥ 153

विचारमननध्यानसमाधिज्ञानरूपकान्।
कुर्यात्पञ्चमहायज्ञान् नित्यं ब्रह्मत्वसिद्धये॥ 154

---

223-224. ख. इ. पाठे एव वर्तते।

अस्त्यात्मलिङ्गं परमं ब्रह्मज्योतिर्मयं जगत् ।
तत्स्वरूपं मायान्त्यैव वक्तुं श्रोतुं न शक्यते ॥ 155

गुरुवेदान्तवाच्यार्थ विचारकुशलः पुमान् ।
दृष्टिषट्‌कचिदाभासात्भ्रान्तिषट्‌कं परित्यजेत् ॥ 156

आनन्दबिम्बदृष्टिः स्यात् आनन्दाभास दीरिते ।
ब्रह्मात्मज्ञान निष्ठानां दृष्टिषट्‌कमिदं स्मृतम् ॥ 157

नास्ति ब्रह्मापरं किञ्चित् अस्ति देहादिकं जगत् ।
परं न स्फुरति ब्रह्मा स्फुरतीदं सदेहकम् ॥ 158

न सुखं परमं ब्रह्मा सुखं तु भौतिकं परम् ।
इत्यविद्याविमूढानां भ्रान्तिषट्‌कमुदीरितम्[224] ॥ 159

[225]मननध्यानसंयुक्तं श्रवणं बहुधा कृतम् ।
ऐहिकामुष्मिकाशेषपदार्थाः काममोहिताः ॥ 160

सर्वदा सर्वदृश्येषु ब्रह्मदृष्टिं करोमि च ।
अथापि मां प्रबाधते रागद्वेषादिवासनाः ॥ 161

यथा स्वामिन् पलायन्ते कृत्वा मां वासना गुणाः ।
जाते वृक्षाद्यथा नीडं शकुन्तास्तदुदीरयः ॥ 162

अनन्तघनदावाग्निज्वालादग्धान्तरात्मकम्
श्रीगुरूक्तिसुधाशीतं न शीतयति किं नरम् ॥ 163

बिम्बानन्दात्मदृष्टिस्ते यदा भवति सुस्थिरा ।
तदा ते वासनाजालं समूलं प्रविलीयते[226] ॥ 164

''यो यच्च श्रद्धः स एव स'' इत्यादि । एवं शमदमादिगुणसम्पन्नं ''तद्विज्ञानार्थं

225-226. ख. इ. पाठे एव वर्तते ।

स्वगुरुस्मेवाभिगच्छेच्छ्रोत्रियं ब्रह्मनिष्ठं'' (मुण्डक १-२-१२) ''आचार्यवान् पुरुषो वेद'' (छान्दोग्य ६-१४-२) ''तद्विद्धिप्रणिपातेन परिप्रश्नेन सेवया'' (भग.४-३४)

उपदेक्ष्यन्ति तेज्ञानं ज्ञानिनस्तत्त्वदर्शिनः
तस्माद्गुरुं प्रपद्येत जिज्ञासुः श्रेयः उत्तमम् ॥ (रामो.ता. ४) 165

शाब्दे पदे च निष्णातं ब्रह्मण्युपसमाश्रयम् ।
वैशारद्ये क्षयासङ्गं शितया छिन्नसंशयः ॥ 166

प्रतिबुद्ध इव स्वाप्नान्नानात्वाद्विनिवर्तते

इत्यादि श्रुतिस्मृतिपुराणोक्तरीत्या समुपहारपाणिः सन् मोक्षविद्यागङ्गाम्भः स्नानपरिशुद्धमुपशान्ति सुखरसिकं अपरोक्षात्मनिश्चयसम्पन्नं, निरूपाधिकृपानिधिं सर्ववेदान्तपुष्पवनमत्तभृङ्गं स्वपादभक्तशिष्यजनाः ज्ञानतमः पटलाभञ्जनप्रचण्ड भास्करोपमानात्मविज्ञानप्रदानमहोदारं ब्राह्मणोत्तमं ब्रह्मानन्दसरोवरराजहंसं प्रणवपञ्जरकीरं, शमादिसद्गुणकरण्डं, ब्रह्मनिष्टं श्रीगुरुं शरणं गतः । तत्सन्निधिमात्रपरिहृतपापतापदैन्यदुःखः परिप्राप्त परमपुरुषार्थस्सन् ब्राह्मणो मोक्षार्हो भवति । भवन्तिचात्र श्लोकाः

गङ्गापापं शशीतापं दैन्यं कल्पतरुस्सदा ।
पापं तापं च दैन्यं च हन्ति सङ्गो महात्मनाम् ॥ 167

यस्स्नातशीततरया साधुसङ्गतिगङ्गया ।
किं तस्य दानैः किं तीर्थैः किं तपोभिः किमध्वरैः ॥ 168

महत्सेवां द्वारमाहुः विमुक्तेः तमोद्वारं योषितां सङ्गिसङ्गम् ।
महान्तस्तं समचित्ताः प्रशान्ताः विमन्यवः सुहृदस्साधवो ये ॥ 169

सन्तस्सदाभिगन्तव्याः यद्यद्युपदिशन्ति नो ।
[227]तेषां स्वैरकथालापाः उपदेशा भवन्ति हि ॥ 170

**मुमुक्षुत्वनिरूपणम्** बहूपवासकृताङ्गस्य क्षुधातुरस्य मुमूर्षोः विवाहाद्यासक्तिं विसृज्य केवल भोजनापेक्षावत् संसारानलतापसन्तप्तहृदयस्य सर्वतो निर्विण्णस्य मुमुक्षोः ब्राह्मणस्य भोगेच्छां परिहृत्य जायमाना मोक्षेच्छैव। एवं विधसाधनचतुष्टयसम्पन्न एव ब्राह्मणो ब्रह्मात्मविचाररूपे **वेदान्तश्रवणेऽधिकारी। विषयो नाम** शास्त्रस्य प्रत्यग्ब्रह्मैक्यमेव। **सम्बन्धो नाम** वेदान्तशास्त्रस्य प्रत्यग्ब्रह्मैक्यस्य च प्रतिपाद्यप्रतिपादकभाव एव। **प्रयोजनं नाम** प्रत्यग्ब्रह्मैक्यावारकाज्ञाननिवृत्तिपूर्वकनिजबिम्बानन्दलाभः एव।

[228]इत्थं यः कर्मबद्धो भ्रमति परवशः प्राणभृज्जन्मसङ्घैः
दुःखस्यान्तं नवेत्ति स्मरति न च जनिव्रातमज्ञानयोगात्।
तं सर्वानर्थमूलप्रशमनविधिना स्वात्मराज्येऽभिषेक्तुं
तात्पर्येण प्रवृत्ताः श्रुतिशिखरगिरः सूत्रभाष्यादयश्च[229]॥ 171

तस्मादुपपादितरीत्या एतन्मूलवेदान्तशास्त्रसम्बन्ध्यनुबन्ध चतुष्टय[230]वत्वादिदं प्रकरणमारम्भणीयमिति सर्वं रमणीयम्।

कम्भम्पाटिकुलोद्भूतेनामरेश्वरशास्त्रिणा।
प्रसादाद्दक्षिणामूर्तेःकृतो बन्धचतुष्टयम्॥ 172

इत्यनुबन्धचतुष्टयविचारः प्रथमं प्रकरणं समाप्तम्।



---

227. क. ख. झ. ञ. येषां।
228-229. ख. इ. पाठे एव वर्तते।
230. ज. इदमारम्भणीयं।

## जीवेश्वरविचारे द्वितीयं प्रकरणम्।

[1]स्मारं स्मारं जनिमृतिभयं जातनिर्वेदवृत्तिः,
ध्यायं ध्यायं पशुपतिमुमाकान्तमन्तर्निषण्णम्।
पायं पायं सपदि परमानन्दपीयूषधारां
भूयो भूयो निजगुरुपदाम्भोजयुग्मं नमामि॥ 173

यस्माद्विश्वमुदेति यत्र निवसन्त्यन्ते यदप्येति यत्,
सत्यज्ञानसुखस्वरूपमवधि द्वैतप्रणाशोज्झितं।
यस्माज्जाग्रत्स्वप्नप्नसुषुप्तिषु विभात्येकं विशोकं परं
प्रत्यग्ब्रह्म तदस्मि यस्य कृपया तं देव देवं भजे॥ 174

विज्ञापयामि यत्किञ्चित् त्यक्तलज्जा मनोगताम्।
बुद्धिशुद्ध्यै मया सम्यज्जीवेशौ च विचार्यते[2]॥ 175

यावदायुस्त्रयो वन्द्या वेदान्तो गुरुरीश्वरः॥

इत्यादिना सर्वेषां वेदान्तानां सेतिहासपुराणानां यथोक्तविशिष्टाधिकारिणां निष्प्रपञ्चाद्वितीयप्रत्यगभिन्नब्रह्मप्रतिपत्तिसिद्ध्यर्थं अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्चयत इति साम्प्रदायिकोक्तरीत्या दृग्रूपे ब्रह्मणि दृश्यप्रपञ्चमारोप्य निषिध्यनिखिलप्रपञ्चमविद्यातत्कार्यसम्बन्धरहितो विशुद्धजीवो मया तत्कार्य सम्बन्धरहितः विशुद्धब्रह्मचैतन्यप्रकाशस्वरूपत्वेन प्रतिपादनीयः। तत्र [4]चारोपे

---

1. ख. जीवेश्वरमतविचारः प्रारभ्यते। 2-3. ख. इ. वर्तेते।

4. इ. छ. पाठे नास्ति।

"अस्मान्मायी [5]सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्धः" (श्वेताश्व ४-९) इति श्रुतेः ।

"**जगतः जीवेश्वररूप कर्तृत्व भोक्तृत्व विचारः** ।

[6]जगत्कर्तृरूपेश्वरारोपः । जगद्भोक्तृरूपजीवारोपश्च प्राथमिकः इति प्रथमं कोऽत्र जगत्कर्ता ईश्वरः, कोवाऽत्र जगद्भोक्ता जीवेति तदुभयस्वरूपविचारे कर्तव्येप्यादौ जीवेश्वरविषयिणि तत्तद्वादिनां नानाविधानि मतानि विचारयामः । नचायं मतान्तर विचारः । स्वमतविचारानुपयोगित्वात् काकदन्तविचारवत्, भल्लूकलोमविचारवच्च निरर्थकः इत्याशङ्कनीयम् । अधर्मोऽपि जिज्ञास्यः परिहारायेतिवत् । मतान्तरविचारस्य मुमूक्षूणां ततो निवृत्तिफलकत्वेन स्वमतविचारोपयोगसम्भवेन सार्थक्यात् ।

**उपासक भेदेन तत्तन्मतविचारः** । तत्र हिरण्यगर्भोपासकाः केचिदुद्गीथब्राह्मणप्रामाण्यात् सर्वसूक्ष्म शरीरेष्वापूर्यावस्थितं चैतन्यं हिरण्यगर्भः स एव ईश्वरः इत्युपासते । विराडुपासकास्तु "सहस्रशीर्षा पुरुषः" (ऋ. मंत्रः १०-९०, श्वेताश्व ३.१४, चिति १२-१, सुबाल १-२, पुरुषसूक्तं १) "विश्वतः चक्षुरुतविश्वतोमुखः" (त्रिपाद्वि.महानाः ६-४, वाज. संः १७-१९, श्वेताश्वः ३.३, महानः २-२, २ शिवसङ्कल्प २६, रुद्रः २) 'तस्माद्विराडजायत विराजो अधिपूरुषः" (वाज.सं. ३१-५, ऋ. अष्टका ८.) "पादोऽस्य विश्वा भूतानि" (त्रिपाद्विः महानाः ४-४, पुरुषसूक्तं ३. चित्ति १२-२, ऋ. अष्टकं : ८-४-१७. ऋ.मं : १०-९०-४, वाजस.सं.३१-४) "एवमेवास्य परिद्रष्टुरिमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति" (प्रश्नः ६-५) 'स एषोऽकलोऽमृतो भवति" (प्रश्न ६-५, तैत्तिः सं २-१-२) इत्यादिश्रुतेः सर्वस्थूलशरीरेषु अभिव्याप्यावस्थितं चैतन्यं विराट् । स एव ईश्वरः इति वर्णयन्ति । केचित्तु "प्रजापतिः प्रजाः असृजते" (तैत्ति सं २-१-२, गणेश-

---

5. क. ग. इ. छ. झ. सृजति ।

6. ख. जगत्कर्तु ब्रह्मरूप ।

पूता. १-३) इत्यादि श्रुतेः चतुर्मुखः ईश्वरत्वेन समुत्पन्नः इति प्रस्तुवन्ति। भागवताः रामानुजमतानुवर्तिनस्तु विष्णुनाभिकमलात् चतुर्मुखः समुत्पन्नः इति विष्णुरेव ईश्वरः इत्याहुः। शैवमतानुवर्तिनस्तु शिवस्य पादं द्रष्टुं विष्णुः न समर्थोऽभवदिति शिव एव जगत्कारणमित्युपासते। गाणपत्यमतानुवर्तिनस्तु शिवः त्रिपुरसंहारमुद्युक्तस्सन् गणपतिं पर्यपूजयत् अतः गणपतिरेव देवाधिदेवः इति फणन्ति। केचित्तु "उद्यन्तमस्तंयन्तमादित्यमभिध्यायन् कुर्वन् ब्राह्मणो विद्वान् सकलं भद्रमश्नुते" (सह वा-२) इत्यादि श्रुतेः सूर्यं ईश्वरबुद्ध्या उपासते। केचनकर्मठास्तु "अग्निर्देवो द्विजातीनां" इत्यादिवचनबलात् अग्निरेव देवः इत्याहुः। "**मौढ्योपासनाविचारः**" [7]अपरे भैरवादीनर्चयन्ति। ततोऽपि केचित्तामसाः प्रेतभूतगणान्पूजयन्ति। अन्ये च गवाश्वादीन् गरुडादिपक्षिणश्च, अश्वत्थशमीतुलसीबिल्वार्कादिवृक्षान् पूजयन्ति। [8]अपरे तु सम्भ्रान्ताः मृद्दारुशिलाविग्रहानुपासते अपरे तु [9]कष्टकर्मरताः पुरुषवराकाः [10]काष्ठकुद्दाललाङ्गलादीन् देवताबुद्ध्या अर्चयन्ति।

"**अहो मोहस्य माहात्म्यम्**" एवं तत्तन्मतानुवर्तिनः सर्वेऽपि भ्रान्ताः जनाः मोहपट्टपिहितविवेकचक्षुषः तत्तच्छ्रुतिस्मृतिपुराणागमाभियुक्तवचन-तर्काभासश्रद्धाजडाः हिरण्यगर्भादिलाङ्गलान्तं [11]दृश्यजातं परिछिन्नं मयिकं च ईश्वरं मन्यमानाः स्थूलधियः तत्प्रीतये जपध्यानहोमपूजापराः [12]तत्र तत्र पर्यटन्तः पूजाबुद्ध्या अन्यत्र तुलसी[13]बिल्वादिचेतनागतं पत्रपुष्पफलादिकं उत्पाट्य अन्यत्र मृद्दारुशिलाद्यचेतने विक्षिपन्ति। जपभ्रान्त्या उपांशु ताल्वोष्टपुटव्यापारं

---

7. क. ख. ज. झ. अपरे वदन्ति।

8. क. ख. अपरे संविभ्रान्ताः। झ. ञ. अपरेतु भ्रान्ताः।

9. ख. ज. परशुखनन कर्षकादयः।

10. ख. पालकुद्दाल।

11. इ. ज. ञ. दृश्यजातं पदं नास्ति।

12. क. ग. इ. तत्रपर्यटन्तः। ज. ञ. तत्र तत्रह्यटन्तः।

13. क. ख. ग. चेतनीगतं तत्र, झ. चेतने गतं, इ. चेतनागतं दृश्यजातं परिछिन्नं तत्र।

कुर्वन्ति। केचित्तु वञ्चकाः ध्यानभ्रन्त्या किमप्यजानन्तोऽपि चक्षुषी निमील्य लोकं वञ्चयन्ति। अपरे तु होमभ्रान्त्या अश्वत्थप्लक्षबिल्व[14]खादिरादिकाष्ठ-खण्डान् प्रदहन्ति। एवं विधजपध्यानहोमपूजादिभिः [15]स्वयं वञ्चिताः पुरुषार्थविभ्रष्टाः अपि धनिकजनानां सन्निधौ स्वव्यापारं प्रदर्श्य अपूर्वपुण्यबुद्ध्या सोदाहरणपूर्वकं तेषामुपदिशन्तः उभावप्यश्रुतग्रन्थौ उभावपि जडात्मकौ **अहो मोहस्य माहात्म्यं तत्रैकः शिष्यतां गतः** इत्युक्तरीत्या निर्लज्जाः शिष्यान् सङ्गृह्य जगदशेषं वञ्चयन्तः स्वपक्षपातग्रस्ताः। [16]इहचामुत्र राजसतामसादि शरीराण्यवाप्य तत्तत्फलान्यनुभवन्तः तत्तद्वासनादिभिः पुनरपि तानि तानि कर्माणि जन्ममरणपरम्पराघटीयन्त्रपरिभ्रामिताः क्वापि विश्रान्तिस्थानमपश्यन्तः [17]द्युपरिभ्रष्टाः चण्डालाः इव सर्वानपि सेवमानाः स्वयं विनष्टाः स्वपक्षेषु पातयित्वा [18]अन्यानपि विनाशयन्तो जिह्वोपस्थाद्यतिलम्पटाः पुरुषापशदाः [19]संसरन्ति। मुमुक्षवः सद्गुरु [20]श्रीगुरुचरणपरिचरणनिपुणाः पुरुषधौरेयाः उपपादिताः सर्वेपि पक्षास्तु संसारदुःखमात्रसम्पादकाः एव नैतदाश्रयणेन मोक्ष सिध्यति इति निश्चित्य तदुपपादकप्रवृत्तिपरवेदशास्त्रपुराणतर्काभासान् पादपांसूनिव विसृज्य वेदशास्त्रतदुपबंहकस्मृतीतिहासपुराणागम-प्रमाण्यमेवाङ्गीकृत्य ज्ञानमार्गेण विचरन्तः कृतार्थाः भवन्ति।

"**जीवात्मविचारः**" [21]ईश्वरस्वरूपमिव जीवस्वरूपमप्यजानन्तः सर्वेऽपि वादिनः बहुधा प्रलपन्ति। जीवात्मा नामा "आत्मा वै पुत्र नामासि" (कौ.ब्रा. २-११) इति श्रुतेः पुत्रे [22]पुष्टे नष्टे वा स्वयं पुष्टः नष्टः इति च व्यवहारबलाच्च। पुत्र एवात्मेति प्राकृताः [23]मूढाः मूर्खाश्च प्रलपन्ति। "स वा

---

14-15. भागः - क. ग. छ. झ. ञ. नास्ति। 16. क. ग. छ. झ. इहचामुत्र च।
17. क. ग. इ. दृपदोब्दद्ध। 18. क. ग. इ. स्वानपि। 19. क. ग. इ. छ. संसरन्तः।
20. क. ग. श्रीपतिचरण। 21. ख. इ. ईश्वरस्वरूपमप्यजानन्तः सर्वेऽपि वादिनः।
22. क. ग. भ्रष्टे। 23. क.ख.ग.इ.छ. मूढाः मूर्खाश्च इति पदद्वयं नास्ति।

एष पुरुषोन्नरसमयः'' (तैत्ति. २-१-१, कठ ४-१) इति श्रुतेः दह्यमाने गृहे पुत्रं विसृज्य स्वशरीरमात्रसंरक्षणदर्शनात् स्थूलोऽहं, कृशोऽहं, काणोऽहं, बधिरोऽहं, अहं सुखी, अहं दुःखी इत्यादिव्यवहारबलाच्च शरीरमेवात्मेति [24]बौद्धाः [25]प्रलपन्ति । इन्द्रियाणामभावे शरीरव्यापाराभावात् मूकोऽहं, काणोऽहं, [26]बधिरोऽहं इत्यादिव्यवहारबलाच्च चक्षुरादीन्द्रियाण्येवात्मेति [27]तदन्तःपातिनः वदन्ति ।

''**इन्द्रियाण्येवात्मत्वविचारः**'' ''अन्योन्तरात्मा प्राणमयः'' (तैत्ति. २-३-३) इत्यादिश्रुतेः प्राणाभावे इन्द्रियाणाञ्च [28]चलनाद्यभावात् क्षुधावानहं, पिपासावानहं अहं सुखी, अहं दुःखी, इत्यद्यनुभवाच्च प्राणमयः एवात्मेति तदीयाः एव केचिदूचुः । ''अन्योऽन्तर आत्मा मनोमयः'' (तैत्ति. २-३-१) इत्यादिश्रुतेः सुषुप्तौ मनसोऽभावे प्राणादिव्यापाराभावात् दुःख्यहं, सुख्यहं इत्याद्यनुभवबलाच्च मनोमयः एवात्मेति अन्ये आहुः । ''अन्योऽन्तर आत्मा विज्ञानमयः'' (तैत्ति. २-४-१) इत्यादिश्रुतेः कर्तुरभावे करणरूपस्य मनसः स्वव्यापारे सामार्थ्याभावात् कर्ताऽहं भोक्ताऽहं इत्याद्यनुभवाच्च, विज्ञानमय-एवात्मेति विज्ञानवादिनः प्राहुः । ''अन्योन्तर आत्मानन्दमय'' (तैत्ति २-५) इत्यादिश्रुतेः अन्नमयादीनां विज्ञानमयान्तानां चतुर्णामपि कोशानां सुषुप्तिरूपे अज्ञाने लयदर्शनात् । अहमज्ञो [29]मामन्यञ्च न जानामीत्यनुभवाच्च । आनन्दमयरूपाज्ञानमेवात्मेति तार्किकाः । प्रभाकराश्च ''[30]प्रज्ञानघनः'' (नृसिंह-८-५) इति श्रुतेः सुप्तोत्थितस्य पुरुषस्य ''सुखमहमस्वाप्सं, गाढं मूढोहमासं न किञ्चिदवेदिषं'' इत्यज्ञानसुखस्मरणसत्त्वेन [31]सुषुप्तिकाले

---

24. ज. बुद्धाः ।
25. क. ख. ग. इ. आलपन्ति ।
26. इ. ज. पाठे एव वर्तते ।
27. ख. छ. ज. तदेकदेशिनः ।
28. ख. इ. ज. तुलनाभावात् ।
29. इ. ज. अहमन्यं ।
30. क. ग. इ. छ. प्रज्ञानमयः ।
31. ज. सुप्ते ।

ज्ञानाज्ञानयोः उभयोरप्यभ्युपगन्तव्यत्वात् मामहं न जानामि इत्यनु भवाच्च अज्ञानसहितं चैतन्यमेवात्मेति प्रवदन्ति । [32]अज्ञानोपहितचैतन्य-मेवात्मेति भाट्टाः भणन्ति । "[34]असद्वा इदमग्र आसीत्" (तैत्ति. २-७-१, सुबाल ३-१) इतिश्रुतेः सुषुप्तौ सर्वाभावात् सुषुप्तावहं नाहमिति व्युत्थितस्वपरामर्शाच्च शून्यमेवात्मेति शून्यवादिनः प्रलपन्ति । एवं तत्तन्मतानुवर्तिनः [36]सर्वेऽ[33]पि [35]वादिनः प्रणव एव विस्वरः इतिवत् स्वस्वरूपमेवाजानन्तः कलहोत्सुकाः कामुकाः इव परस्परवार्तानभिज्ञाः स्वकृतसङ्केतमात्रपरितुष्टाः मर्कटमुष्टिवत् गृहीतमग्राह्यामप्यपरित्यजन्तः स्वपक्षपाताभिनिवेशेन स्वपक्षास्सर्वेऽपि समीचीनाः इत्येवं विभ्रमं गताः शास्त्राचार्योपदेशरहिताः सम्यग्वेदशास्त्रपुराणादि-परमतात्पर्यपर्यालोचनसमर्थप्रज्ञाकौशल विहीनाः सर्वेष्वपि वेदान्तेषु । "अन्धं तमः प्रविशन्ति येऽविद्यामुपासते" (ईशा. ०-९, बृह- ४-४-१०) "असुर्यानाम ते लोकाः" (ईश.३) "पतन्ति नरकेऽशुचौ" (भग. १६-१६)

[37]पुत्रादि लोकदेहान्तः करणाव्यक्तसंज्ञकान्
अर्थानामेव सर्वत्र ब्रह्मानन्दो विजृम्भते ॥ 176

पुत्रभार्यादयो लोकाः दुःखरूपातिदारुणाः ।
देहेषु भोगसिद्ध्यर्थं प्रेमालम्बनतां गताः ॥ 177

स्वतो दुःखमयो देहो विनाशोत्पत्तियोगतः ।
मनःप्रीतिकरत्वेन प्रेमालम्बनतां गताः ॥ 178

दारासक्तिमनादरात् सुतधनासक्तिंत्वनित्यत्वतः
स्नेहं मोहविवर्जनात्करुणया नैष्ठुर्यमन्तस्त्यज ।

---

32-33. इ.पाठे तु. "अज्ञानोपहितचैतन्यमेवभाट्टाः भणन्ति । एवं तत्तन्मतानुवर्तिनस्सर्वेऽपि" एवं वर्तते।

34-35. ज. नास्ति ।

36. क. ग. इ. छ. ज. झ. क्वापि ।

37-38. ख. इ. पाठे एव वर्तते ।

औदासीन्यसमाश्रयात्त्यज सुहृन्मित्रारिदुर्वासनां
सर्वानर्थकरान् दशेन्द्रियरिपूनेकान्तवान् प्रेषय ॥ 179
भूतार्थस्मरणं वृथा श्रमधिया प्राप्तं तु ह्रासो क्षणात्
भाव्यर्थव्यसनं मुदा त्यज मनः प्रारब्धचोरैः क्षणात् ।
शिष्टाशिष्टजनक्रियाः त्यज वृथाकष्टानुसन्धानतः
स्नेहं द्वेषकथां सदा त्यज जने भस्मान्ततांसंस्मृतेः ॥ 180

"**तत्त्वजिज्ञासाकर्तव्यता विचारः**" "तद्यथेहकर्मचितो लोकः क्षीयते एवमेवामुत्रपुण्यचितोलोकः क्षीयते" (छा. ८-१-६) "न कर्मणा न प्रजया धनेन त्यागेनैकेन अमृतत्वमानशुः" (कैवल्य. १-३)

अविनाशि तु तद्विद्धि येन सर्वमिदं ततम् ।
विनाशमव्ययस्यास्य न कश्चित्कर्तुमर्हति ॥ (भग. २-१७) 181
अन्तवन्त इमे देहाः नित्यस्योक्ताश्शरीरिणः ।
अनाशिनोऽप्रमेयस्य तस्माद्युध्यस्व [38]भारत ॥ (भग. २-१८) 182

इत्यादिना प्रागुक्तमतानुवर्तिनां आत्मद्रोहिणां अन्धतमः संसारनिमज्जनमेव । न तेषां कल्पकोटिशतैरपि तरणमिति बाहुमिवोद्धृत्य उच्चैरुत्घोषयत्सु सत्स्वपि तत्कस्यवेतिवत् अशृण्वन्तो, महिषा इव मत्ताः, श्वसूकरादय इव विसृष्टलज्जाः, उदरोपस्थभरणमात्रसफलजीविताः नरकोन्मुखाः भवेयुः । विवेकिभिः स्वयं शोच्याः अपि उपनिषद्राजवीथीसञ्चाररसिकान् मोक्षसाम्रज्याधीश्वरान् [39]श्रीगुरुवरश्रीचरणपरिचरणसम्प्रदायपरिलब्धविवेकज्ञानसम्पन्नान् सर्वलोकपावनान् मुमुक्षुजनान् अवलोक्य तदीयमुत्कर्षमसहमाना असांप्रदायिकाः विमूढाः, शुकः मुक्तो [40]वामदेवो वेत्युक्तत्वादस्मिन् कलौ युगे कुतो ब्रह्मविद्या कुतस्तरां ब्रह्मनिष्टः, कुतस्तमां मोक्षः इत्याद्याततायकवार्ताभिः

---

39. क. ग. इ. छ. श्रीगुरुपर ।
40. क. ग. इ. छ. वामदेवेभ्योक्तत्वादस्मिन् युगे ।

वेदान्तानामननुष्ठानलक्षणाप्रामाण्यं आपाद्य जिज्ञासूनां बुद्धि भेदं जनयन्ते रण्डापुत्राः दशनमलप्रदर्शनपूर्वकं मुपहसन्तः।

गौतमस्य मुनेः शापात् दधीचस्य च शापतः
जन्मान्तरकृतात्पापादयमर्थो न रोचते ॥ 183

इत्यादिपुराणवचनाद्गौतमदधीच्यादिब्रह्मशापदग्धा· [41]प्राक्तनपापोहतबुद्धयः पुरुषवराकाः मुमुक्षुजन[42]प्राक्तनावशिष्टपापस्वरूपाः यथेच्छं प्रलपन्तो विचरन्ति। विवेकिनः मुमुक्षवः सद्गुरुपादावलम्बाः वेदान्तविचारे [43]कदाप्यप्रमत्ताः श्रेयस्कामाः [44]ब्राह्मणास्तु तदीयरूक्षावार्ताः क्वाप्यनाकर्ण्य यथा प्रलपन्तो [45]विमूढान् शवानिव दूरतः परित्यज्य गच्छन्तः एव सुखिनो भवन्ति।
[46]भवन्ति चात्र श्लोकाः -

देहं केऽपि वदन्ति खानि चापरे प्राणान्मनश्चापरे,
बुद्धिञ्चक्षणिकां स्थिरामथ परे चिद्वज्जडं चेतरे।
आत्मानं जडचित्स्वभावमपरे चिद्वज्जडं चेतरे,
सत्यज्ञानसुखाद्वितीयमपरे तत्रास्य को निश्चयः ॥ 184

आहुः केचिदणुं शरीरसदृशं केचिद्विभुं ते परे,
ते तं मानसगोचरं तदपरे नित्यानुमेयं जगुः।
अन्ये चिद्विषयं परे तु परमस्वज्योतिराभ्यन्तरं,
सत्येवं श्रुतियुक्तिभिः विविदिषोः युक्तो विचारो मुहुः ॥ 185

स्वदेहे शोभनं सन्तं पुरुषारण्यञ्च सम्मतं।
किं मूर्ख! शून्यमात्मानं देहातीतं करोषि भोः ॥ 186

---

41. क. ख. इ. छ. ज. पापापहत।
42. क. ग. इ. ज. प्राप्तनावशिष्ट।
43. क. ग. इ. ज. कदाल्पप्रमत्ताः।
44. इ. छ. ज. ब्राह्मणोस्तु।
45. इ. छ. ज. मूढांश्चशवानिव।
46-47. ख. इ. पाठे एव वर्तेते।

स्वात्मानं श्रुणु मूर्खत्वं श्रुत्या युक्त्या च पुरुषम् ।
देहातीतं सदाकारं सुदुर्दर्शं भवादृशैः ॥ 187

अहं शब्देन विख्यातः एक एव स्थितः परः ।
स्थूलस्त्वनेकतां प्राप्तः कथं स्याद्देहकः पुमान् ॥ 188

अहं द्रष्टृतया सिद्धः देहो दृश्यतया स्थितः ।
ममायमिति निर्देशात्कथं स्याद्देहकः पुमान् ॥ 189

अहं विकारहीनस्तु देहो नित्यं विकारवान् ।
इति प्रतीयते साक्षात्कथं स्याद्देहकः पुमान् ॥ 190

प्राप्तोऽपि कर्मकाण्डेन ह्यात्मा देहाद्विलक्षणः ।
नित्यश्च तत्फलं भुङ्क्ते देहपातादनन्तरम् ॥ 191

एवं देहद्वयादन्यः आत्मापुरुष ईश्वरः ।
सर्वात्मा सर्वरूपश्च सर्वातीतोऽह[47]मव्ययः ॥ 192

[48]न तु तार्किकतामेत्य नाशनीया प्रबुद्धता ।
अनुभूत्यपलापान्तैरपवित्रैः विकल्पितैः ॥ 193

दुस्तर्कात्सुविरम्यतां श्रुतिमतस्तर्कोनुसन्धीयतां ।
इत्युक्तत्वाच्च शुष्कदुस्तर्केण बुद्धिक्षोभमकृत्वा मदुपदिष्टवेदान्तार्थरहस्य-पर्यालोचनानुकूल सत्तर्कसंवर्धितप्रज्ञः ।

श्रोतव्यश्श्रुति वाक्येभ्यो मन्तव्यश्चोपपत्तिभिः ।
दीर्घसंस्काररोगस्य विचारो हि [49]महोषधम् ॥ 194

---

48-49. ख. इ. पाठे एव वर्तेते ।

अहं ब्रह्मेति वाक्यार्थबोधो यावद्द्रढी भवेत्।
शमादिसहितस्तावदभ्यसेच्छ्रवणादिकम्॥ 195

इत्यादि भगवद्भाष्यकारोपदेशाच्च तदुपपादितजीवेश्वररूपपूर्वपक्षाः वेदान्तशास्त्रसम्मताः न भवन्तीत्येतेषु पक्षेषु मुमुक्षूणां पूर्ववासनया भ्रान्तिर्माभूदिति तदर्थं सम्यगेव सर्वाण्येव मतानि विचारितानि।

[50]कम्भम्पाटिकुलजलधिपूर्णेनामरेश्वरशास्त्रिणा।
प्रसादद्दक्षिणामूर्तेः कृतं [51]जीवेशविचारकम्॥ 196

इति

**कम्भम्पाटि अमरेश्वरशास्त्रिभिः**

*कृताज्ञानध्वान्तचण्डभास्करे*

*जीवेश्वरमतविचारो [52]नाम*

*द्वितीयं प्रकरणम्।*

*समाप्तम्।*



50-51. ख. इ. पाठेषु वर्तते।

52. क. ख. ग. छ. नास्ति।

## अज्ञानध्वान्तचण्डभास्कर:।

# जीवेश्वरस्वरूपविचारे तृतीयं प्रकरणम्।

विज्ञापयामि यत्किञ्चित्त्यक्तलज्जा मनोगताम्।
प्रसादाद्दक्षिणामूर्तेः क्रियते जीवेशरूपकम्॥ 197

वेदान्तशास्त्रसम्मते जीवेश्वरस्वरूपे विज्ञाय मुमुक्षव: संसारसमुद्रं तीर्त्वा सुखिनो भवन्त्विति जीवेश्वरस्वरूपं विचारयाम:। "सदेव सौम्येदमग्र आसीत्" (छा: ६-२-१, पैङ्गल. १-१) "आत्मा वा [1]इदमेक एवाग्र आसीत्" (ऐतरेयं १-१ आत्मषट्कं) "[2]नान्यत्किञ्चनामिषत्" (ऐतरेयं १-१) इत्यादिश्रुतेः प्राक्सृष्टेः प्रळयादूर्ध्वं दृश्यमात्रविवर्जितं दृक्स्वरूपं परिपूर्णं शान्तं शिवं अद्वैतं अव्यवहार्यमिति स्वच्छं निर्मलाकाशकल्पं निष्प्रपञ्चं सर्वशून्यं सन्मात्रं, चिन्मात्रमानन्दमात्रं निराकारं निर्विकल्पं [3]निर्विकारं निराभासमपरिच्छिन्नं [4]अवाङ्मानसगम्यं सजातीयविजातीयस्वगतभेदरहितं मुक्तिंप्राप्यं नित्यनिर्मुक्तस्वरूपमेकरसं प्रत्यगभिन्नं ब्रह्म चित्प्रकाशस्वरूपमात्रं सर्वोपनित्समधिगम्यं [5]घर्मकालान्ते वर्षकालादौ तृणलेशस्याभावात् परिशुद्धं भूमण्डलमिव सुप्रतितिष्ठितमभवत् तस्मिंश्च ब्रह्मस्वरूपे। **उत्पत्ति प्रारम्भ विचार:** ब्रह्मैव स्वाविद्यया संसरति "अजामेकां लोहितशुक्लकृष्णां" (महाना. ८-४, नारा. पूता. ५-५) मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरं" (श्वेता

---

1. क. ग. इ. छ. ज. ञ. इदमेकमग्र आसीत्।
2. क. ख. ग. पाठे नास्ति।
3. छ. निराकारं।
4. क. ख. ग. इ. छ. ज. मानाङ्मानसगम्यम्।
5. क. ख. ग. इ. धर्मकालान्ते।

४-१०) "[6]अस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत्" इत्यादि श्रुतिप्रसिद्धं । सत्वरजस्तमोगुणात्मकं सर्वप्राणिकर्मक्षये सति स्वकार्यसमस्तदृश्यप्रपञ्चं स्वस्मिन्विलीनं कृत्वावस्थितं सर्वसुषुप्तिसमिष्टिरूपं समस्तप्रपञ्चवासनामयम् अविद्याज्ञानाव्यक्ततमः सुषुप्त्यादि शब्दवाच्यं अनाद्यनिर्वचनीयं मायातमः तमइवाकाशे अध्यस्तमासीत् । तस्यां च सत्त्वसमष्टिरूप[7]शुद्धसत्वप्रधानायां मायायां परमकारणं अधिष्ठानसाक्षिभूतं स्वप्रकाशं ब्रह्मचैतन्यं प्रतिफलितं भूत्वा जगद्बीजभूतं सव्रीहियवादिनानाविधबीजसमष्टिभर्गभूमण्डलम् इवाव्यक्तं च सदीश्वरः इत्यभिधीयते । अयमेव ईश्वरः स्वाध्यस्तमायायां जीवादृष्टसहायेन जगदाकारेण स्वसन्निधिमात्रादेव तदन्तः बहिश्च आपूर्यावस्थितः अयं अयतीन्त्यन्तर्यामीति । स्वाध्यस्तमायायां जीवादृष्टसहायेन जगदाकारेण नामरूपात्मकदृश्यप्रपञ्चाकारेण [8]व्याक्रियमाणायामपि स्वयं अव्याक्रियमाणः सन् अव्याकृतः इति चाभिधीयते ।

**ईश्वरः तत्स्वरूपविचारः** । जगद्बीजभूतमायोपाधिकेश्वरचैतन्यमेव। सर्वप्राणिकर्मसहायेन सर्वसूक्ष्मशरीरसमष्टिप्रधानावयवरूप महत्तत्व[9]स्वरूप-पेलवजगदङ्कुराकारपरिणत मायोपाधिकं सत् सर्वतोङ्कुरसहित भूमण्डलमिव पूर्वरूपापेक्षया ईषद्व्यक्तं ज्ञानशक्तिप्रधानं च सत् हिरण्यगर्भइत्युच्यते । अयमेवहिरण्यगर्भः इच्छाशक्तियोगेन [10]नानाविध पुष्पव्रातस्य सूत्रमिव नानाविधस्थूलप्रपञ्चस्याधारभूतः सन् सूत्रात्मेति क्रियाशक्तियुक्तः सन् प्राणः इति चेत्यते । जगदङ्कुर रूपसूक्ष्मशरीरसमष्ट्याकारपरिणतमात्रोपाधिकं हिरण्यगर्भचैतन्यं एव स्थूलशरीरसमष्टिभूतभौतिकप्रपञ्चाकारपरिणत-मायोपाधिकं सत्सर्वतः सफलसस्यगर्भभूमण्डलमिव स्पष्टतमं सद्विराडिति

---

6. क. इ. छ. ज. अवयवमात्रैस्तु ।
7. झ. शुद्धसर्वप्रधानायां ।
8. क. ग. इ. छ. ज. ञ. व्याप्रियमाणा ।
9. ख. छ. स्वरूपजगदङ्कुराका ।
10. क. ग. इ. नानाविधव्रातस्य ।

व्यवह्रियते । अयमेव विराट् तत्तद्व्यापारोन्मुखः [11]सन् विश्वनराभिमानत्वात् वैश्वानरः इति तत्तद्व्यापारफलभाग्भूतत्वात् वैराज इति चाभिधीयते । **जीवात्मा नामा** ईश्वरोपाधिभूताविद्यासमष्टिरूपमायैकदेशव्यष्ट्यविद्योपाधिकं ब्रह्मभूतं कूटस्थचैतन्यमेव । स एव जीवः जाग्रत्स्वप्नभोगप्रदकर्मदाये सति जाग्रत्स्वप्नवासनाग्रसनशीलः केवसुषुप्त्युपाधिकः प्राज्ञः इत्युच्यते । स एव प्राज्ञसंज्ञो जीवः स्वाध्यास्ताविद्योपाधिपरिच्छिन्नत्वात् अवच्छिन्न इति, जाग्रत्स्वप्नप्रपञ्चाबाधितत्वात् पारमार्थिकः इति चाभिधीयते । अयमेव प्राज्ञः स्वप्नभोगप्रदे कर्मण्युद्बुद्धे सति अन्तर्नाडीसञ्चाररूपः स्वप्नाकारपरिणतहिरण्यगर्भोपाधिभूतलिङ्गशरीरः, समष्ट्येकदेशव्यष्टिलिङ्ग शरीरः । प्रधानावयवाविद्याकार्यान्तःकरणोपाधिकः तैजसः इति, प्रतिभासमात्रशरीरत्वात्प्राति भासिकः इति, [12]स्वप्नसमयमात्र-कल्पितत्वात्स्वप्नकल्पितः इति च उच्यते । स एव तैजसः जग्रद्भोगप्रदे कर्मणि उद्बुद्धे सति चक्षुरादि [13]बाह्येन्द्रियान्निष्पाद्यशब्दादि-विषयोपलब्धिरूपजाग्रत्प्रपञ्चाकारपरिणताज्ञानकार्यान्तः[14]करणाधिकरणरूपः, विराडुपाधिभूतस्थूलशरीरसमष्ट्यैकदेशा[15]विद्याकार्यव्यष्टिस्थूलशरीरोपाधिकः सन् विश्वः इति, व्यवहारप्रधानत्वाद्व्यावहारिकः इति, विस्पस्टावभासरूपत्वात् चिदाभासः इति च व्यवह्रीयते ।

तत्राविद्यागर्भगृहो ह्यनिर्वाच्या विराजते ।
ईश्वरादिविराडान्तवासनारत्नपङ्क्तयः ॥ 198

जीवेशतैजसप्राणाः विश्ववैराजरूपिणः

---

11. छ. ख. सन् वैश्वानरः इति ।

12. क. ख. ग. झ. स्वप्नसमयकल्पितत्वात् । छ. ज. स्वप्नमात्रकल्पितत्वात् ।

13. क. ग. इ. छ. बाह्येन्द्रिय निष्पाद्य । 14. ख. ज. करण उपाधिरूप । 15. ख. ज. अविद्याकार्यरूपः ।

तेषां षण्णां विहारार्थं समष्टिव्यष्टिभेदतः ॥ 199

**जीवेश्वरनवकविचारः**। इदमेव जीवनवकं "तत्त्वमसि" (छा. ६-८-१, ६-९-४, ६-१४-३ शुकरः २-३) इत्यादिमहावाक्यचतुष्टयगतं त्वं पदोऽहं पदात्मपदप्रज्ञानपदानां वाच्यार्थः। जीवनवककल्पनाधिष्ठानभूतं तत्सर्वबिम्बभूतं तत्सर्वबाधावधिभूतं [16]निर्विकारासङ्ग[17]नित्योदासीनं अविद्यातत्कार्य देहप्राणेन्द्रियान्तःकरणाद्यसंस्पृष्टं विविक्तं विशुद्धं शुद्धं कूटस्थचैतन्यं लक्ष्यार्थः। ईश्व[19]रनवकं तु महावाक्यचतुष्टयगततत्पदब्रह्मपदयोः वाच्यार्थः। ईश्वर नवककल्पनाधिष्ठानभूतं तत्सर्वबिम्बभूतं तत्सर्वबाधावधिभूतं निर्विकारासङ्ग[18] नित्योदासीनं मायातत्कार्यभूतभौतिकप्रपञ्चासंस्पृष्टं विविक्तं शुद्धं विशुद्धं ब्रह्मचैतन्यं लक्ष्यार्थः कूटस्थः इति ब्रह्मा इति च नाममात्राद्विभेदः। न तु अर्थतः। जीवेश्वरयोः वस्तुतः विभेदाभ्युपगमे "उदरमन्तरं कुरुते अथ तस्य भयं भवति" (तैत्ति २-७) इत्यादि श्रुतिनिचयेष्वनर्थ श्रवणात्।

प्रत्यक्त्वं ब्रह्मणस्तत्त्वं ब्रह्मत्वं प्रत्यगात्मनः।
पारोक्ष्यद्वयहानेन ह्यात्मा ब्रह्मेति बोध्यते ॥ 200

अ[20]व्यावृत्ता न तु गतो ब्रह्मशब्दार्थ इष्यते।
नात्मनोऽन्यत्र लभ्योऽसौ नाप्यात्मा ब्रह्मणोन्यतः ॥ 201

कूटस्थ [21]ब्रह्मणोर्भेदो नाममात्राद्दृते नहि।

इति अस्मदीयैरुक्तत्वाच्च कूटस्थ एव ब्रह्मा ब्रह्मैव कूटस्थः इति परस्परतादात्म्यावगतिः एव। "न स पुनरावर्तते" (निरालम्ब. ३३) "नेति नेति" (बृह. ३-९-२६, ४-२-४, ४-४-२२) "नेह नानस्ति किञ्चन" (कठ.

---

16. ज. निर्विकारनित्योदासीनं। 17-18. इ. ज. पाठे नास्ति।

19. क. ग. नवकं तत्... चतुष्टयं। 20. क. ग. अन्याव्यत्ता नतु गतः। इ. छ. अव्यक्तानुगतो, ज. अव्यत्ता न तु गतो, झ. ञ. अन्यवृत्ता न तु गता।

21. ज. ब्रह्मणश्चैवं।

४-११, बृह. ४-४-१९, त्रिपामहाना. ३-३, अध्यात्म. ६३, निरालम्ब. ११) इत्यादि श्रुत्युदीरितमोक्षसिद्धि इति । एतन्न विस्मर सौम्योसि । अहो स्वामिन् । वाच्यार्थावगत्यैव मुमुक्षूणां कृतार्थत्वात् कमर्थं लक्ष्यार्थः श्रीमद्भिः उपदिष्टः इति चेत् प्रबुद्धोसि । श्रुणु सौम्य! जीवेश्वरयोः "तत्त्वमस्यादि" पदवाच्ययोः सोपाधिकयोः परस्परविरुद्धधर्मवत्वेन प्रतीयमानयोः ऐक्यस्य विज्ञातुमनुपपन्नत्वात् सोऽयं देवदत्तः इत्यादिस्थल इव जहदजहलक्षणयोपाध्यंशं परिहृत्य अवशिष्टयोः जीवेश्वरवास्तवस्वरूपभूतयोः परिहृत जीवेश्वरसङ्केतयोः कूटस्थब्रह्मणोः मानैकसमधिगम्यमैक्यं [22]सम्यग्विज्ञाय मुमुक्षवो ब्राह्मणाः वीतदुःखाः कृतार्थाः भवन्ति । **सर्वदेशिकसार्वभौमश्रीमच्छङ्कर-भगवद्भाष्यकार**विवेककरसङ्गृहीतसम्यग्दर्शनप्रचण्डदण्डसन्ताडितसर्ववेदान्तडिंडिमोद्घोषः प्रतिवादिभयङ्करः सर्वोपरिविजृम्भितः अद्याप्यवच्छिन्नः श्रूयत इति नः किञ्चिदनुपपन्नं मुमुक्षूणां सम्यगवबोधाय जीवेश्वरस्वरूपे सम्यग्विचारिते

कम्भम्पाटिकुलोद्भूतेनामरेश्वरशास्त्रिणा
प्रसादाद्दक्षिणामूर्तेः कृतं जीवेशरूपकम् ॥ 202

इति

**कम्भम्पाटि अमरेश्वरशास्त्रिभिः**

*कृताज्ञानध्वान्तचण्डभास्करे*
*जीवेश्वरस्वरूपविचारो नाम*
*तृतीयं प्रकरणम् ।*
*समाप्तम् ।*



22. ज. सम्यग्विज्ञाय ब्राह्मणाः ।

## अज्ञानध्वान्तचण्डभास्करः।

# चतुर्थप्रकरणे - सृष्टिविचारः।

गुरुश्रीचरणद्वन्दं ब्रह्मज्योतिस्वरूपकम्।
तत्स्वरूपं यथाचिंत्तं क्रियते सृष्टिरूपकम्। 

जगत्कर्ता ईश्वरः। जगद्भोक्तुः जीवस्योपभोगार्थं अनात्मप्रपञ्चविस्तारं असृजत् इति लोकवेदप्रसिद्धेः तामेव सृष्टिं विचारयामः। "तस्माद्वा एतस्मादात्मन आकाशस्सम्भूतः" (नारा उता १-५, तैत्ति. २-१-१) [1]सदेव सौम्य इदमग्र आसीत्" (छा. ६-२-१, पैंगल. १-१)[2] "यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति" (तैत्ति. ३-१) इत्यादिश्रुतेरीश्वरशब्दितात् जीवादृष्टसहायात् मायावच्छिन्नचैतन्यात् शब्दकगणकः आकाशः। **पञ्चीकरणप्रकारविचारः।** आकाशावच्छिन्नचैतन्यात् स्पर्शगुणको वायुः, वाय्ववच्छिन्नचैतन्यात् रूपगुणकं तेजः, तेजोवच्छिन्नचैतन्यात् रसगुणकं जलं, जलावच्छिन्नचैतन्या[3]द्गन्धगुणका पृथिवीत्येतानि पञ्चसूक्ष्मभूतानि सत्वरजस्तमोगुणात्मकानि अपञ्चीकृतानि समुत्पन्नानि। आकाशादिपञ्चभूतप्रत्येकसत्वांशेभ्यो क्रमेण दिग्वातार्कप्रचेतोश्वि[4]रूपाभिः अधिष्ठानदेवताभिस्सह श्रेत्रत्वक् चक्षुरसनघ्राणाभिधानि पञ्चज्ञानेन्द्रियाण्यासन्। पञ्चभूतसत्वसमष्टेः चन्द्रचतुर्वक्त्ररुद्रक्षेत्रज्ञरूपाभिः अधिष्ठानदेवताभिः सह मनोबुध्यहङ्कारचित्ताभिध

---

1-2. ख. इ. पाठेषु एव वर्तते।

3. क. ख. ग. इ. छ. झ. गन्धगुणाः।

4. इ. ज. रूपाभिः श्रोत्रत्वक्।

मन्तःकरण चतुष्टयमभवत्। आकाशादिपञ्चभूतप्रत्येकरजोंशेभ्यः क्रमेण वह्नीन्द्रोपेन्द्रमृत्युप्रजापतिरूपाभिः अधिष्ठानदेवताभिः सह वाक्पाणिपादपायूपस्थरूपाणि पञ्चकर्मेन्द्रियाणि जातानि। पञ्चभूतरजस्समष्टेः ([5]विशिष्टविश्वकर्तृविश्वयोन्यजजयरूपाभिः अधिष्ठानदेवताभिः[6]) सह प्राणादिपञ्चकमुत्पन्नम्। इयमेवापञ्चीकृत [7]भूतकार्यसूक्ष्मप्रपञ्चसृष्टिः नाम। आकाशादिपञ्चभूततमोंशेभ्यः सर्वोऽपि स्थूलप्रपञ्चः समभवदिति पञ्चीकरणप्रकारः कथ्यते। आकाशादिपञ्चभूततमोंऽशेषु एकैकं भूततमोंशं द्वेधा विभज्य एकमर्थभागमवस्थाप्य [8]द्वितीयमर्थभागं चतुर्धा[9] विभज्य प्रथमतः अवस्थापितेनाकाशादिभूततमोंशार्थभागेन सह स्वांशं विहाय अवशिष्टानां वाय्वादिभूततमोंऽशद्वितीयार्थभागानां चतुर्धाविभक्तानां मध्ये एकस्मिन्नेकस्मिन्नंशे जीवादृष्टसहायेन ईश्वरेण संयोजिते सति पाञ्चभौतिकानि पञ्चीकृतानि स्थूलभूतानि भवन्ति। **पञ्चीकरणे संयोजनविचारः**। संयोजन प्रकारश्चेत्थम्। शब्दगुणकाकाशप्राथमिकार्थभागेन सह स्पर्शरूपरसगन्धगुणकाः वायुतेजोजलपृथिव्यांशाः चत्वारोऽपि संयोजिता चेत् पञ्चीकृतः स्वकार्यवाय्वादिगतस्पर्शादिगुणानां कारणे स्वस्मिन् असम्भवात् स्वकीयशब्दमात्रगुणस्थूलाकाशः समभवत्। एवं स्पर्शगुणकवायुतमोंश-प्राथमिकार्थभागेन सह शब्दरूपरस[10]गन्धगुणकाकाशे तेजोजलपृथिव्यांशाः चत्वारः संयोजिताः चेत् पञ्चीकृतः "कारणगुणाः कार्यगुणानारभन्त" इति न्यायात् स्वकारण आकाशगुणेन शब्दगुणकः, स्वकीयस्पर्शगुणकश्च स्थूलवायुरुत्पन्नः। एवमेव रूपगुणकतेजस्तमोंशप्राथमिकार्थभागेन सह आकाशवायुजलपृथिव्यांशाः चत्वारः ([11]संयोजिताः चेत्) [12]पञ्चीकृतः।

---

5-6. इ. ज. पाठे नास्ति।

7. भूत शब्दः ख., इ., झ. पाठे वर्तते। ज. भूतसूक्ष्मकार्यप्रपञ्चः।

8-9. इ. ज. पाठे नास्ति।

10. झ. गुणकाकाशतेजो।

11-12. क. ख., ग. छ., झ. ञ. पाठेषु नास्ति।

रसगुणकजलतमोंशप्राथमिकार्थ भागेन सह आकाशवायुतेजःपृथिव्यंशाः चत्वारः ([13]गन्धगुणकपृथिवीतमोंशप्राथमिकार्थभागेन सह आकाशवायुतेजोजलांशाः चत्वारश्च[14]) संयोजिताः चेत् क्रमेण पञ्चीकृतं शब्दस्पर्शरूपगुणकं तेजः । पञ्चीकृतं शब्दस्पर्शरूपरसगुणकं जलं । पञ्चीकृतशब्दस्पर्शरूपरसगन्धगुणका पृथिवी च स्थूलाकारेण समभवत् । पञ्चीकृतपञ्चमहाभूतेभ्यः एव तलं, अतलं, वितलं, सुतलं, रसातलं, महातलं, पातालं चेति भूमेः अधस्तात् सप्तलोकाः । भूर्लोकः, भुवर्लोकः, सुवर्लोकः, महर्लोकः, जनोलोकः, तपोलोकः सत्यलोकः इत्युपरि सप्तलोकाश्च । आहत्येतानि चतुर्दशभुवनानि । ([15]लवणेक्षुसुरासर्पिःदधिक्षीरोदकादिसप्तसागराः । जम्बूप्लक्षकुशक्रौञ्चशाकशाल्मल्यादिसप्तद्वीपानि । इन्द्रद्वीपकुशेरुताम्रगभास्तिनागसौम्यगन्धर्वचारणभरताख्यनवखण्डानि ।[16]) जरायुजाण्डजस्वेदजोद्भिज्जरूपचतुर्विधजन्तुजालगर्भाणि । ब्रह्माण्डनाम्ना ऐन्द्रजालिकविनिर्मितगन्धर्वनगरवत् विविधविचित्ररूपाणि, मनसाप्यचिन्त्यरचनारूपाणि च समुत्पन्नानि, इत्येषा [17]एव स्थूलप्रपञ्च सृष्टिः । **प्रासङ्गिकलयविचारः** । प्रसंगात् [18]लयोऽपि संक्षिप्य प्रदर्श्यते । सर्वप्राणिकर्मक्षयसमये प्राप्ते पृथिवी स्वकारणे [19]जले विलीयते, जलं स्वकारणे तेजसि, तेजः स्वकारणे वायौ, वायुः [20]स्वकारणे च आकाशे, आकाशः स्वकारणे अव्यक्ते विलीयते, अव्यक्तं च परमकारणे परस्मिन् ब्रह्मणि विलीयते, परम्ब्रह्मा तु "अव्यक्तात् पुरुषः परः पुरुषान्नापरं किञ्चित् सा काष्ठा सा परा गतिः" (कठः ३-११) इति श्रुतेः सर्वान्तरतमत्वेन अवशेषितत्वात् ततोऽन्यस्यान्तरवस्तुनः प्रतिषेधाच्च । "निषेधशेषोजयतात् अशेष" इति

---

13-14. क. ग. छ. नास्ति।

15-16. क. ग. इ. छ. झ. ञ. नास्ति।

17. ज. ख.एव गतिः स्थूलप्रपञ्चसृष्टिः।

18. क. ख. ग. प्रलयोऽपि।

19. छ. ख. जले नीयते।

20. क. ग. इ. छ. झ. स्वाकारणे आकाशे।

पुराणवचनात् सर्वनिषेधाविधित्वेन नित्यवस्त्ववस्थानप्रतिपादनात्। "विनश्यतो विकारजातस्य पुरुषान्तमेव। अविनाशि तदात्मनो विनाशकारणाभावात् न कुत्रापि विलीयते"। "सत्यं ज्ञानमनन्तं ब्रह्म" (तैत्ति. २-१-१, सर्वसार: ६, ना.उ.ता. १-५, त्रि.वि.म.ना ३.३) नित्यं विज्ञानमानन्दं ब्रह्म" (बृहद: ३-९-२८) "एकमेवाद्वितीयं ब्रह्म" (त्रि.वि.म.ना. ३-३१, पैङ्गल: १-१, छा. ६-२-१) "अनादिमत्परं ब्रह्म" (भग. १३-१३) [21]"अहं ब्रह्मास्मि" (बृहदा: १-४-१०, पैङ्गल: ३-१, त्रि.वि.म.ना: ७-१०, शुकरहस्य २-२) "प्रज्ञानं ब्रह्म" (ऐत: ५-३, शुकरहस्य २-१, अन्नपूर्ण।) "तत्त्वमसि" (छा. ६-७.७,६-९-४, ६-१४-३, शुकर. २-३) "सर्वं खल्विदं ब्रह्म" (त्रि.वि.म.ना. १-३, निरालम्ब: ११, गन्धर्व: ६, छा: ३-१४-१, महो. ४-११९) "नेह नानास्ति किञ्चन" (कठ.४-११, बृहदा. ४-४-१९, त्रि.वि.म.ना. ३-३, अध्यात्म ६३, निरालम्ब ११) "ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापर:" (निरालम्ब २८.) "ब्रह्मविद्ब्रह्मैव भवति" "विज्ञानमानन्दं ब्रह्म" (बृहदा ३-९-३४)

न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूय:।
अजो नित्य: शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे॥ 204
(भग. २-२०)

वेदवेनाशिनं नित्यं य एनमजमव्ययम्।
कथं स पुरुष! पार्थ कं घातयति हन्ति कम्॥ (भग. २-२१) 205

नैनं छिन्दान्ति शस्त्राणि नैनं दहति पावक:।
नचैनं क्लेदयन्त्यापो न शोषयति मारुत:॥
(भवसं २-२८, भग.२-२३) 206

---

21-22. ख. इ. छ. वर्तते।

अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च ।
नित्य: सर्वगत: स्थाणु: अचलोऽयं सनातन: ॥
(भवसं २-३९, भग. २-२४) 207

"न तत्र चक्षु र्गच्छति न वाग्गच्छति नो मनो न विद्मौ" (केन. १-३)

न तत्र सूर्यो भाति न चन्द्रतारकं, नेमा विद्युतो भाति कुतोऽयमग्नि: ।
तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ॥ 208
(कठ: ५-१५, मुण्डक २-२-१०, श्वेताश्व ६-१४)

न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवै: तपसा कर्मणा वा । (मुण्डक ३-२-७)
न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशु:" (म.ना. ८-१४) 209

मातापितृसहस्रात्प्रभवती भगवती [22]श्रुति: इत्यादिवेदान्तेभ्य: तस्य अनादित्वात् अनिधनत्वाच्चेति एतन्न विस्मर सौम्योऽसि । समस्त प्रपञ्चकल्पनाधिष्ठानभूते, तब्दाधावधिभूते च परमकारणे ब्रह्माणि भूत भौतिकदृश्यप्रपञ्चस्य अब्धौ फेनादिवत्, सृष्टिप्रलयवत्वात् तत्सत्यता भ्रान्तिं परित्यज्य परमकारणपरमाधिष्ठानब्रह्मात्मसत्यतावगमेन मुमुक्षुलोक: कृतार्थो भूयादिति सृष्टि: विचारिता ।

**[23]कम्भम्पाटिकुलजलधिपूर्णेनामरेश्वर शास्त्रिणा**
**प्रसादांद्दक्षिणामूर्तै: निर्वृत्त: सृष्टिविचार:[24]** ॥ 210

**कम्भम्पाटि अमरेश्वरशास्त्रिभि:**
*कृताज्ञानध्वान्तचण्डभास्करे*
*सृष्टिविचारो नाम*
*चतुर्थं प्रकरणं समाप्तम् ।*



23-24. ख. इ. वर्तते ।

# पञ्चमप्रकरणे पञ्चकोशविचारः।

अथ पञ्चकोशान्विचारयामः। [1]अनेककोटिब्रह्माण्डबाह्याभ्यन्तर-परिपूर्णं अनन्यपूर्णं सर्वप्रपञ्चपरमाधिष्ठानं निरधिष्ठानं अशेषप्रपञ्चप्रकाशकमप्रकाश्यं चेतनाचेतनसर्वप्रपञ्चनियामकं अनियम्यं देशकालवस्तुकृतपरिच्छेदत्रयशून्यं अशून्यं शून्यावभासकं अशेषव्यवहारालम्बनम्, अव्यवहार्यम् अवाङ्मनसगम्यं सच्चिदानन्दघनं परमकारणं परंब्रह्मैवाहमस्मि इति सम्यग्विज्ञाय जीवोऽयं कृतकृत्यो [2]विमुक्तो भवति। सर्वसंसारदुःखबन्धनादिति हि सर्ववेदान्ततदुपबृंहक[3]स्मृतीतिहास-पुराणतात्पर्यपरिसमाप्तिः इति कुतश्चिद्भाग्योदयात् परिलब्धात् [4]महानुभावं सम्पर्कादवगम्य ब्राह्मणः कर्मपाशबद्धः संसारानलतापसंतप्तो मुमुक्षुः सन् "परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात् [5]नास्त्यकृतः कृतेन" (मुण्डक. १-२-१२) इत्यादि श्रुतेः।

[6]निर्वेदः परमो जज्ञे चिन्ताहेतुः [7]सुखावहः।
नह्यज्ञाज्जातनिर्वेदो [8]देहबन्धं जिहासति॥ 211

इत्यादिपुराणवचनाच्च। ऐहिकामुष्मिकोदरोपस्थोपभोगतत्साधन

---

1. क. ख. ग. झ. ञ. अनेक पदं नास्ति।
2. क. ग. इ. छ. मुक्तः।
3. च. पाठप्रारम्भः।
4. क. ग. इ. ज. झ. ञ. महास्वभावसम्पर्कात्।
5. क.ग.छ.नास्ति कृतेन। च. नास्त्यकृतकृतेति।
6. च. निर्वेपः परमो।
7. झ. सुखावदहः।
8. क. ग. देहबद्धम्।

[9]भूतलौकिकवैदिकसांसारिककश्मलकर्मकलापात् निर्विण्णो भूत्वा साश्रुपातमित्थं परितापयेत् । **कोवाहमिति स्वात्मविचारः** देवतिर्यङ्मनुष्यादि जन्तुजालमध्ये पूर्वस्मिन् जन्मनि को वाहमभवम्, इदानीं मनुष्यः सन् ब्राह्मणशरीरं [10]धृत्वाऽवस्थितः अस्मिन् देहप्राणेन्द्रियान्तःकरणादिसंघाते को वाऽहं स्याम् । उत्तरत्र एतच्छरीरपातानन्तरं सुरनरतिर्यगादिषु को वाऽहं भविष्यामि । शुनीशूकरीखरीमहिष्यादिदेववनितान्तः उच्चावचः सर्वजन्तुजाल[11]मूत्र-परिक्लिन्न । [12]नानाविधयोनीः प्रविश्य प्रविश्यामेध्यात्वादिपूर्णः तदीयगर्भ-रूप[13]विष्ठागर्तनिमज्जनादि क्लेशमनुभूयानुभूय तदीययोनिबिलयन्त्रप्रपीडनात् कामपि कष्टतरां दशामापन्नः पुनः पुनः ततो विनिर्गत्य एतज्जातीयकापरिमितं जननीस्तन्यं पीत्वा पीत्वा प्रवृद्धिं उपगतः जिह्वोपस्थात्युग्रातिदुस्सहमहावेगरूपः [14]कल्पान्तदहनज्वालामालादंदह्यमानमनःपिशाचपरिभ्रामितः अकर्तव्य-सहस्रमाचरन् पापमेव सङ्गृह्य दुःखमेवानुभूय चिरं श्रान्तोऽस्मि । **शारीरकबीभत्सा विचारः** कटकटा केन वोढुं शक्यमिदं दुःखं जन्ममरणजरारोगादिदोषविदूषितं एतच्छरीरसम्बन्धपरिप्राप्तं परमदुःखमेव मम [15]स्वभावः ? अथवा नित्यनिरुपाधिकं परमसुखमेव [16]स्वभावो वा इदानीन्तु एकस्मिन्नपि वा क्षणे सुखलेशं न जानामि । जाग्रत्काले नानाविधलौकिकवैदिकसांसारिक व्यापारसहस्रैः सर्वकरणक्षोभपूर्वकं महत्तरमेव दुःखमनुभवामि । स्वप्नसमये समनुभूतानां दुःखानामन्तः एव नास्ति । "नाहं खल्वयमेवं सम्प्रत्यात्मानां जानामि, अयमहं अयमस्तीति, [17]नो एवेमानि भूतानि विनाशमेवापितो भवति,

---

9. क. ग. लौकिकानांसालील सांसारिक ।
10. क.ग.इ.च.छ.ज. भूत्वावस्थितः ।
11. क.ग.इ.च.मात्रपरिक्लिन्न ।
12 छ. नानायोनीः ।
ज. नानाविधयोनीः प्रविश्यामेध्यादि ।
13. क. ग. इ. छ. विषागर्त ।
14. झ. कल्पान्तवहन ।
15. क.ग.इ.च.छ.ज.झ.ञ. स्वाभावो वा नित्य ।
16. ग. क. स्वभावो हि ।
17. क. ग. स एवेमानि ।

नाहमत्र भोग्यं पश्यामि'' (छा. ८-११-१, ८-११-२) इत्यादिच्छन्दोगश्रुतेः। ''स्वं परञ्च नवेति आत्मविनष्ट इव कारणे आगामिदुःखबीजं चेत्येतत् इन्द्रेण दर्शितं'' इति श्रुत्यर्थसङ्ग्राहक**विद्यारण्यवचनाच्च**। सुषुप्तिकाले तु अन्धे तमसि निमग्नः हितप्राप्तिः अहितपरिहारं चाजानन् दुःखमेवानुभवामि। [18]कदा वा स्यात् मम दुःखस्यान्तः वर्णधर्माश्रमाचारशास्त्रादिवासनास्तु मामतीव पीडयन्ति। समतीतानन्तरजन्मानुष्ठिततत्प्रापककर्मा भावेन ताश्च सम्पादयितुं अप्यशक्याः पुण्यमहं कर्तुमसमर्थोस्मि। परदारपरद्रव्यपरहिंसादि चिन्तापरोत्कर्षासहनदम्भ-दर्पाहंकारममकारादिसर्वदुर्विकारैः सर्वदा पापमेवाकरवं, न पुण्यं, किमहं साधुकर्म नाकरवं, किमहं पापकर्मेवाकरवम् [19]इति महती चिन्ता। कोटरस्थवह्निज्वाला जरद्वृक्षमिव मां प्रदहति। कदा वा मम मोक्षः स्यात्। मोक्षोपायभूतं ब्रह्मात्मैक्यज्ञानं कदा वा स्यात्। [20]ज्ञानसाधनशमादिगुणसम्पत्तिः कदा वा स्यात्[21]। परमपुरुषार्थहेतुभूतात्मज्ञानप्रदानमहोदारनिरूपाधिककृपानिधिभक्तजनहृत्ता-पापहारिमनोहारिवाग्विभूतिविभूषणः श्रीगुरुवर श्रीपादुकापरिचर्यालाभः कदा वा मम स्यात् परिपूर्णब्रह्मस्वरूपम् अहमर्थतयावलोक्य जीवन्मुक्तः कदा वा विश्रान्तिं एष्यामि। मधुनीव पुष्परसः कदा वा ब्रह्मानन्दामृते विलीनः स्याम्, इत्यनुतापपरितप्तहृदयस्य सर्वतो निर्विण्णस्यात्मज्ञानार्थिनः उत्तमाधिकारिणः ब्राह्मणस्याध्यस्तपञ्चकोशत-दधिष्ठानात्मविभेदविचारः एव परमपुरुषार्थभूत-मोक्षसाधनब्रह्मात्मैक्यज्ञानमहोपायः, नान्यः इति तदर्थं **पञ्चकोशाः विचार्यन्ते।** अन्नमयः, प्राणमयः, मनोमयः, विज्ञानमयः आनन्दमयाश्चेति पञ्चकोशाः। अन्नमयकोशविचारेजीवस्य स्थूलदेहविषयः। [22]तत्रान्नमयकोशो नाम पृथिवीसमुत्पन्नाभ्यः व्रीहियवाद्यौषधीभ्यः अन्नरूपाभ्यः स्त्रीपुरुषनिषेविताभ्यः स्त्रियां लोहितं, पुरुषे शुक्लं च जायते। ताभ्याञ्च लोहितशुक्लाभ्यां [23]प्रवृद्धाभ्यां

---

18. क. कदा हा स्याम्।
19. इ.ज. इति चिन्ता।
20-21. इ. नास्ति।
22. ज. अत्रान्नमय।
23. क. ग. प्रवृत्ताभ्यां।

[24]उद्रिक्तकामव्यसनपीडितौ स्त्रीपुरुषावन्योन्यं योनिमेढ्रसंस्पर्शं कुर्वाते । ततश्च [25]कालकर्मसम्बन्धनिबन्धनं ऋतुकाले पुरुषशरीरगतं शुक्लं मेढ्रद्वारा विनिसृतं योनिद्वारा स्त्रीगर्भाशये प्रविश्य शोणितेन सह मिलितं, प्रथमेऽहनि [26]कललाकारं, द्वितीयेऽहनि बद्बुदाकारोन्मुखं, तृतीयेऽहनि [27]बुद्बुदरूपञ्च, सद्वासरपक्षमासक्रमेण करचरणाद्यवयव[28]सन्निवेशविशिष्टं शरीरं भूत्वा नवमे दशमे वा मासि जायते । ततः क्षीरादिसेवया प्रत्यहं प्रवृद्धिमुपगतं जरारोग [29]मरणादिदोषविदूषितं मांसास्थिमयं इदं स्तम्भवत्परिदृश्यमानं स्थूलशरीरमेवान्नमयकोशः । तदेतच्छरीरं शुक्रशोणितपरिणामरूपं मलमूत्रगर्तरूपं, अत्यन्तापवित्रं, अमङ्गलम्, अनित्यम्, प्रतिक्षणं अपायसहस्र[30]सङ्कुलितं, शास्त्राचार्योपदेशरहितानां, यथाजात[31]ज़नानां पशुसमानानां पुनः पुनः शरीरानुवृत्यनुकूलकर्मकलापनिरतानां श्वशूकरादीनां मलमिव प्रेमालम्बनमपि, शास्त्रसद्गुरुशिक्षितानां पुरुषधौरेयाणां सर्वतो निर्विण्णानाम्, एवं जातीयक[32]शरीरानुवृत्तिनिवृत्तिकामानां क्रिमिकुलशतसंकुलव्रणविदूषितमार्जालवत् दूरादेव सोद्गारं विसर्जनीयं नत्वादरणीयमिति सर्वेषां नः प्रत्यक्षमेवैतत् । एवञ्च "स वा एष पुरुषोन्नरसमयः" (तैत्ति. २-१-१) इत्यादिश्रुतेः । ब्राह्मणोऽहं, गृहस्थोऽहं, स्थूलोऽहं, [33]काणोऽहं, कृशोऽहं, इत्यादिव्यवहरन्तः शरीरतादात्म्यविभ्रमं गताः पामराः तीर्थपर्यटनसालग्रामशिलातीर्थनिषेवणादिशास्त्रीयसंस्कारैः [34]नित्यापवित्रस्याप्यस्य शरीरस्य पावित्र्यं, क्षीरादिभोजनौषधादिसेवैः अभ्यंगदुकूलस्रगाद्युपचार-

---

24. ज. उद्रिक्तव्यसन ।

25. क.ख.ग.छ. कालकर्मबन्ध ।

26. च. शललोकारं, छ. कणोवाकरं ।

27. इ. ज. अण्डरूपं च ।

28. च. सन्निवेशशरीरं ।

29. क.मरणादिविदूषितं । च. मरणादिविदोषविदूषितं ।

30. ख. संकलित ।

31. इ. ज. जनानां पुनः पुनः ।

32 ख. शरीरानुवृत्तिकामानां ।

33. ख.ञ. पाठे एव वर्तते ।

34. इ. ज. नित्यानित्यस्याप्यस्य ।

रूपलौकिकसंस्कारैः नित्योपद्रवग्रस्तस्यास्याल्पायुषोऽपि अस्यायुरारोग्य-लावण्यादिकञ्च सम्पादयतः [35]इहामुत्र शरीरोपभोग एव पुरुषार्थः [36]इति मन्यमानाः पुरुषार्थविभ्रष्टाः पुरुषापशदाः विवेकशून्याः संसरन्ति । विवेकिनः [37]यथोक्ताधिकारयुक्ताः पुरुषधौरेयाः ब्राह्मणास्तु तुषात्तण्डुलमिव, गृहाद्गृहस्थमिव, कञ्चुकात्कञ्चुकिनमिव घटादाकाशमिव चास्मच्छरीरादात्मानं विभेदेन विचार्य वीतशोकाः प्रशान्ताः कृतार्थाः भवन्ति । **आत्मनः शरीर विभेदविचारः ।** इत्यात्मनः शरीरविभेदविचारप्रकारः प्रदर्श्यतेऽस्माभिः सावधानमनाः समाकर्ण्य सौम्य! पूर्वस्मिन् जन्मनि पुण्यपापकर्मकारणात् इदानीं तत्फलभूते सुखदुःखे अनुभवामीत्यनुभवात् प्राक्तनजन्मनि आधुनिकशरीरादेतन्न्यायात्तदानीन्तनशरीराच्च विभिन्नः स्वयमेवात्मावस्थितः नत्विदं शरीरं, इदानीन्तु पुण्यं पापं वा कुर्वंस्तन्न्यायादेतच्छरीरव्यतिरिक्तः एव कर्तैवानवस्थितः इदानीन्तन पुण्यपापकर्मभ्यां स्वर्गनरकौ गमिष्यामीत्यनुभवादु[38]त्तरत्राप्येतन्न्यायात् आगामिशरीराद्व्यतिरिक्तस्य भोक्तुः आत्मनः एवाव[39]स्थानविश्वासदर्शनात् भूतवर्तमानभविष्यत्कालेषु शरीराद्व्यतिरिक्तः [40]आत्मैव अप्रच्युतः अवस्थितः [41]नत्विदं शरीरं प्रतिक्षणसापायं इत्यानाद्यनिधनस्यात्मनः अस्तित्वमास्तिकैरवश्यमभ्युपगन्तव्यं "असन्नेव स भवति । असद्ब्रह्मेति वेद चेत् अस्ति ब्रह्मेति चेत् वेद । सन्तमेनं ततो विदुः" (तैत्ति. २-६) इत्यादीनां असद्वादिनिन्दापूर्वकं सदात्मवादिस्तुति

---

35. इ. इहामुत्र च ।

36. च. इत्यभ्याससमनुकूलम्रगाद्युपचाररूप (ना) कैक संस्कारैः नित्योपद्रवग्रस्तस्यास्य आयुषः इति मन्यमानाः ।

37. इ. ज. यथोक्ताः पुरुषधौरेयाः ।

38. क. ख. ग. उत्तरत्राप्येतदागामि ।

39. क. ख. ग. स्थानदर्शनात् ।

40. क. ख. ग. आन्मैवावस्थितः ।

41. क.ग. खल्विदं ।

श्रवणात् । देहच्छेदसर्पवृश्चिकव्याघ्राद्युपद्रवैः प्रतिक्षणापायभूयिष्टं वर्णाश्रमे स्थौल्यकार्श्यनीलपीताद्यनेकविधविकारग्रस्तम् [42]अनेकविधदुःखविदूषितम्[43] अस्तितोत्पत्तिवृद्धिपरिणामापक्षयविनाशादिषड्विधभावविकारविदूषितं मातापितृमलरूपं मलमूत्रपात्रं पाञ्चभौतिकमिदं शरीरम् । अहन्तु "अविनाशी वारेयमात्मानुच्छेत्ति धर्मः" (बृहदा. ४-५-१४)

[44]तदेव निष्कलं ब्रह्म निर्विकल्पं निरञ्जनम् ।
तद्ब्रह्माहमिति ज्ञात्वा ब्रह्म सम्पाद्यते ध्रुवम् ॥ (त्रि.ता. ५-८, ब्र. बि. ८) 212

निर्विकल्पमनन्तश्च हेतुदृष्टान्तवर्जितम् ।
अप्रमेयमनाद्यञ्च ज्ञात्वा च परमं शिवम् ॥ (ब्र.बं. ९) 213

एक एवात्मा मन्तव्यो जाग्रत्स्वप्नसुषुप्तिषु ।
स्थानत्रयाद्व्यतीतस्य पुनर्जन्म न विद्यते ॥ (ब्र.बिं.११) 214

घटसम्भृतमाकाशं नीयमाने घटे यथा ।
घटो लीयते नाकाशं तद्वज्जीवो घटोपमः ॥ (ब्र.बिं. १३, त्रि. ता. १३)215

"न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः" ([45]महा. ना. ८-१४) न "[46]तत्र चक्षुर्गच्छति न वागच्छति नो मनो न विद्मो न विजानीमो" (केन. १-३) "न जायते म्रियते वा कदाचित्, नायं भूत्वा भविता वा न भूयः" (भग. २-२०) "अणोरणीयात् महतो महीयान्" (कठ. २-२०, ना. परिव्रा. ९-१३, शरभ. १९, ना.उ. १-३, महाना ८-१, पारमा ९-३) "अशब्दमस्पर्शमरूपमव्ययं" (कठ. १-३-१५, योकुण्डली. ३-३५, पैङ्गलः ३-८, मुक्तिकः २-७२) "न तत्र सूर्यो भाति न चन्द्रतारकं, नेमा विद्यतो भाति

---

42-43. क.ख.ग. पाठे नास्ति ।

44-45. क. ग. पाठे एव वर्तते ।

46-47. क.ग. पाठे एव वर्तते ।

कुतोऽयमग्निः'' (कठ. ५-१५, मुण्डक.२-२-१०, श्वेताश्वतरः ६-१४)

भयादस्यग्निः तपति भयात्तपति सूर्यः ।
भयादिन्द्रश्च वायुश्च मृत्युः धावति पञ्चमः ॥ 216

''भीषास्माद्वातः पवते भीषोदेति सूर्यः''
भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चम इति ॥
(तैत्ति. २-८, नृ.पू.२-१० भस्मजाः २-६) 217

''तमेवं विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय (तैत्ति आ. ३-१-३, महावा ३, ना.पू. १-६, त्रि.वि.महानाः ४-३, चित्ति १२-७, १३-१) ''तद्यथेह कर्मचितो लोकः क्षीयते, एवमेवामुत्रपुण्यचितोलोकः क्षीयते'' (छा. ८-१-६) ''अविनाशी वारेयमात्मा'' (बृह. ४-५-१४) ''नेति नेति'' (बृहः ३-९-२६, ४-२-४, ४-४-२२) इत्यादि श्रुतिसहस्रेभ्यः ।

नैनं च्छिन्दन्ति शस्त्राणि नैनं दहति पावकः ।
न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ॥
(भग. २-२३, भवसं २-३७) 218

अच्छेद्योऽयमदाह्योऽयं अक्लेद्यो शोष्य एव च ।
नित्यस्सर्वगतस्स्थाणुरचलोऽयं सनातनः ॥
(भग.२-२४, भवसं. २-३९) 219

अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते ।
तस्मादेवं विदिंत्वैनं नानुशोचितुमर्हसि ॥ (भग.२-२५) 220

न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः ।
अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ॥
(भग.२-२०)[47] 221

इत्यादि भगवद्वचनाच्च । **देहविभ्रमविचारः** सर्वदुर्विकारविहीनः सर्वदुर्विकारग्रस्तस्यास्य शरीरस्य द्रष्टा सन् घटादिव घटद्रष्टास्मच्छरीराद्विभिन्नोऽस्मीत्यतः नाहमिदं शरीरं न ममेति च विचारयेत् ममेदं [48]मन्दिरं, ममेदं पुस्तकं, ममेदं [49]कञ्चुकं इतिवच्च ममेदं शरीरमित्यनुभवात् शरीराद्व्यतिरिक्तः सविकारशरीरकल्पनाधिष्ठानभूतः [53]श्रोत्रादिसर्वेन्द्रियद्वारा शरीरतद्धर्माणां साक्षीभूतः शरीरबाह्याभ्यन्तरपरिपूर्णः शुद्धचैतन्यप्रकाशः एवाहं न शरीरम्। शरीराणि तु

वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि।
तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही॥
(भग. २-२२ भवसं २-३७) इत्यादिभगवद्वचनात्। 222

मांसास्थिमयनिर्माणदेहोऽहमिति विभ्रमम्।
त्यज संकल्पनिर्माणदेहास्सन्ति सहस्रशः॥ 223

सुखतल्पगतो येन स्वप्नदेहेन [50]दिक्तटान्।
परिभ्रमसि हे राम स देहस्ते क्व संस्थितः॥ 224

जागरायां मनोराज्ये येन स्वर्गपुरान्तरम्
परिभ्रमसि[51] हे राम स देहस्ते क्व संस्थितः॥ 225

इत्यादिवशिष्टवचनात्। स्वप्नमनोराज्ययोरिव कर्माधीनानि कोटिसंख्याकानि आयान्त्यपयान्ति। न केनापि कदाचिदपि मम सम्बन्धोऽस्ति। सर्वदापि एकरूपचैतनन्यप्रकाशमात्र एव अहमिति श्रद्धासमृद्धिसम्पन्नोऽस्मिन् शरीरे [52]शास्त्रीयलौकिकरूपे द्विविधेऽपि दुर्वासने परित्यज्य सर्वदा शरीराद्विभेदेनात्मानं

---

48. झ. मठम्।
49. च. कन्दुकम्।
50. इ. विक्षिपन्।
51. क.ग.इ.च. मेरुं वा स ते हस्ते।
52. ज. वैदिक लौकिकरूपे।
53-54. झ. पाठो लुप्तः।

विचायन्नेव ब्राह्मणः पुण्यपुरुषो नान्यः ।

अशरीरं शरीरेषु ह्यनवस्थेष्ववस्थितम् ।
महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥
(जाबालदर्शनः ४-६२)		226

''अशरीरं वावसन्तं न प्रियाप्रिये [55]स्पृशतः'' (छा.८-१२-१) [53]''अशरीरो महानात्मा'' इत्याद्याः श्रुतयः ।

उपद्रष्टानुमन्ता च भर्ता भोक्ता महेश्वरः ।
परमात्मेति चाप्युक्तो देहेऽस्मिन् पुरुषः परः ॥ (भग. १३-२३) 227

निर्गुणः परमात्मात्र देहान्तर्व्याप्य तिष्ठति ।
तमिमं ज्ञानविज्ञेयं नावमत्येन्न लंघयेत् ॥		228

इत्याद्याः स्मृतयः स्वानुभवश्चात्मनः शरीराद्विभेदे प्रमाणम् । **प्राणमयकोशः** प्राणमयकाशो नाम वाक्पाणिपादपायूपस्थरूपपञ्चकर्मेन्द्रिययुक्तः । प्राणोपानव्यानोदानसमानात्मकः प्राणवायुः । नागकूर्मकृकरदेवदत्तधनञ्जयाख्या पञ्चोपवायवः क्रमेण प्राणादिपञ्चवायुष्वन्तर्भवन्ति । ''अन्योन्तर आत्मा प्राणमयः'' (तैत्ति. २-२-३) ''तेनैषपूर्णः'' (तैत्ति. २-२, ३-४) इत्यादि श्रुतेः अयं प्राणमयः अन्नमयात् अभ्यन्तः अन्नमयं आपूर्यावतिष्टते । क्षुधावानहं, पिपासावानहं इति प्राणमयतादात्म्यविभ्रमं गताः । प्राणनिर्वाहार्थं अन्नादिसेवां कुर्वन्तः [65]क्षुत्पिपासापरिहार एव परमपुरुषार्थाः इति मन्यमानाः ''प्राणया याज्यं याजयति'' इत्यादिश्रुतेः । ''[56]अस्य दग्धोदरस्यार्थे को न कुर्यादशोभनं'' इत्युक्तत्वाच्च । दुष्पूरोदर[57]पूरणार्थमकार्यसहस्रमाचरन्तः अज्ञाः संसरन्ति । न तु

55. छ. न स्पृशतः ।

56. इ. ज. अन्यरक्षापरस्वार्थे को न ।

57. च. पूरणार्थं (साक्षी सन् दीपवदवभासः)

विवेकिनः [58]धृति (दृति) परिपूरितो वायुः यथा नाहं दृश्यत्वात्, तथा शरीररूप धृति (दृति) विधृतोऽपि प्राणवायुः नाहं, न ममापि, किन्तु [59]शरीरस्येवास्यापि [54]द्रष्टा सन्, ततः विभिन्न एवाहं मम प्राणाः इत्यनुभवाच्च प्राणमयात् अत्मा विलक्षणः इति विस्पष्टमेवैतत्। वह्नीन्द्रोपेन्द्रमृत्युप्रजापतिरूपाभिः [60]अधिष्ठानदेवताभिः प्रेरितानि वाक्पाणिपादपायूपस्थरूपाणि पञ्चकर्मेन्द्रियाणि, [61]क्रमेण वचनादानगमनविसर्गानन्दरूपेषु स्वस्वविषयेषु प्रवर्तन्ते। **वायुपञ्चकेषु कोऽहं** अहन्तु कूटस्थनित्योदासीनः तत्सर्वसाक्षी सन् दीपवदवभासमानः न कुत्रापि प्रवृत्तः। विशिष्टरूपाधिष्ठानदेवताप्रेरितः प्राणः हृदिगतः स्वव्यापारे उच्छ्वासे प्रवर्तते। विश्वकर्तृरूपाधिष्ठानप्रेरितो अपानः गुदस्थाने गतः निश्वासे, विश्वयोनिरूपाधिष्ठानदेवताप्रेरितः उदानः कण्ठदेशस्थः सन् जाग्रति तत्तदिन्द्रियाणां तत्तद्गोलकावस्थापने, स्वप्ने मनः संयोजने सुषुप्तौ सर्वेन्द्रियाणां स्वकारणे अज्ञाने लयकारणे प्राणोत्क्रमणसमये सूक्ष्मशरीरं गृहीत्वा लोकान्तरगमने च प्रवर्तते। जयरूपाधिष्ठानप्रेरितः समानवायुः नाभिदेशसंस्थाः चतुर्विधान्नजीर्णताकरणे [62]शरीरपुष्टिकरणे च प्रवर्तते। नागादिपञ्चोपवाचवः [63]क्रमेण विशिष्टादिपूर्वोक्ताधिष्ठानदेवताप्रेरिताः प्राणादिस्थानसंस्थाः च उद्गारवमनकरणे ओष्टद्वयपक्षोन्मीलनकरणे क्षुतकासकरणे च जृम्भणहिक्कादिकरणे च शरीरपोषण करणे च प्रवर्तमानाः सन्तः शरीरेऽस्मिन् विचरन्ति। अहन्तु प्राणादिदशवायुतद्व्यापारसाक्षीसन् अचलः न कुत्रापि व्यापारे प्रवृत्तोस्मीत्यतः अनेन प्राणमयकोशेन सह मम सम्बन्धः एव नास्ति।

---

58. इ. धृतिपरिपूरिपूरितः।

59. क. ख. ग. शरीरस्येकस्यापि।

60. छ. अधिदेवताभिः।

61. क. क्रमेण दानगमन,
इ.च.ज.झ. क्रमेण वचनदान।

62. च. शरीरपोषणकरणे।

63. ञ. क्रमेण पूर्वोक्ताधिष्ठान।

प्राणमयबाह्याभ्यन्तरपरिपूर्णः अतिरिक्तशुद्धसाक्षिचैतन्य[64]प्रकाशरूप एवाहं न प्राणमयः इति [66]सर्वदा प्राणमयाद्विभेदेनात्मानं विचारयन्नेव ब्राह्मणः विद्वान् नान्यः "अप्राणः प्राणस्य प्राणः योऽशनाया पिपासे" इत्यादि श्रुतयः स्वानुभवाश्चात्मनः प्राणमयाद्विभेदे प्रमाणं। **मनोमयकोशविचारः।** मनोमयकोशोनाम वागादिकर्मेन्द्रिययुक्तः सुखदुःखादिधर्मकः इच्छाशक्तियुक्तः [67]संशयरूपः साभासान्तःकरणवृत्तिविशेषः एव मनोमयकोशः। अहो स्वामिन् [68]ग्रन्थान्तरेषु श्रोत्रादिज्ञानेन्द्रियाण्येव मनोमयावयवत्वेन प्रतिपादितानि अत्र तु एवं उपदिष्टं श्रीमद्भिः इति चेत् प्रबुद्धोऽसि ग्रन्थान्तरे मनः कर्मेन्द्रियैः युक्तं सत्कोशः स्यान्मनोमयः इत्युक्त्वात् [69]मनसः कुर्वद्रूपत्वात् चात्रास्माभिरेवमुक्तं। इत्युभयधाप्यविरोधः। मनः प्रीतिरेव पुरुषार्थः। "अन्योन्तरात्मा मनोमयः" (तैत्ति. २-३-१) "तेनैषपूर्णः" (तैत्ति.२-२, ३-४) इत्यादिश्रुतेः मनोमयः प्राणमयादप्यन्तरः प्राणमयमापूर्यावतिष्ठते। सुख्यहं, दुःख्यहं इत्यादिव्यवहरन्तो मनोमयतादात्म्यविभ्रान्तिमापन्नाः पामराः स्त्र्यन्नपानादिविषयलाभेन तात्कालिक[70]सुखाभासान् [71]दुःख्यलभ्यास्सम्पादयन्तो यथा कथञ्चित् मनःप्रीतिरेव पुरुषार्थः इति मन्यमानाः संसरन्ति। न तु विवेकिनः। इदानीं शान्त्यादिसात्विकवृत्तिभिः सुस्थिरं सत् मम मनः सुखितमभूत् इदानीं कामादिराजसवृत्तिभिः चपलं सत्क्वापि गतमिदानीं प्रमादालस्यादितामस वृत्तिभिः मूढं सत्किमपि न जानातीति अनुभवात् सवृत्तिकात् मनोमयात् आत्मनः तत्सर्वसाक्षिभूतस्य प्राणमयादिव विभेदो विस्पष्टमेवावगम्यते। चन्द्ररूपाधिष्ठान देवताप्रेरितं मनोरूपं अध्यात्म्यं मन्तव्यरूपाधिभूते प्रवृत्तं सत्कर्मानुरोधेन

---

64. इ.ज. प्रकाश एवाहंमिति प्राणमय। च. प्रकाशरूपएवाहान्नमय।

65-66. झ. पाठो लुप्तः।

67. क. ख. ग. संशययुक्तः। झ. संशय पदं नास्ति।

68. क. ख.ग.इ.छ.च. ग्रन्थान्तरे।

69. इ. मनसः रूपत्वाय।

70. इ. ज. झ. सुखदुःखलाभान्।

71. झ. दुख्यलभ्याः तत्सम्पादयन्तः।

सुखदुःखे अनुभवति । [72]नात्राहं किञ्चिदप्यनुभवामि । अध्यात्माधिदैवाधिभूतत्रितयाद्विविक्तः तत्सर्वकल्पनाधिष्ठानभूतः मनोमयबह्याभ्यन्तरपरिपूर्णः कूटस्थाचल निर्विकारनिर्भेदसाक्षिचैतन्यप्रकाश एवाहं नतु मनोमयः । मनोमयेन सह मम सम्बन्ध एव नास्तीति सर्वदा मनोमयाद्विभेदेनात्मानं विचारयन्नेव ब्राह्मणः विद्वद्वरः नान्यः । "अमनाः" (अन्नपू. ४-४८, मुक्तिकः २-२९) "मनसो यन्मनो विदुः" (बृ. ४-४-१८) "मनसस्तु पराबुद्धिः" (कठ.३-१०, गुह्यकाति.४१, भग. ३-४२, ४-४).

[73]अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः।
अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः॥ (भग. ३-३६) 229

काम एष क्रोध एष रजोगुणसमुद्भवः।
महाशनो महापाप्मा विद्ध्येनमिह वैरिणाम्। (भग. ३-३७) 230

इन्द्रियाणिमनोबुद्धिः अस्याधिष्ठानमुच्यते।
एतैर्विमोहयत्येषः ज्ञानमावृत्यदेहिनाम्॥ (भग. ३-४०) 231

तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ।
प्राप्मानं प्रजहि ह्येनं ज्ञानविज्ञाननाशिनम्॥ (भग. ३-४१) 232

मन एव मनुष्याणां कारणं बन्धमोक्षयोः।
एवं बुद्धेः परं बुद्ध्वा संस्तभ्यात्मनात्मना॥ 233

(ब्रह्मबिन्दुः २, शास्त्रायन १, मैत्रायणी ६-३४-११, अमनस्क १-७७, भवसं ३-४१, त्रि.ता ५-३-१) "जहि शत्रुं महाबाहो कामरूपं दुरासदम्"। (भग. ३-४३, त्रिताः ५-११)

सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे।
आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते॥ (भग. ४-२७) 224

---

72. इ. नात्माहं।

73-74. ख. ग. पाठे एव वर्तते।

ज्ञानाग्निसर्वकर्माणि भस्मसात्कुरुते तथा। (भग. ४-३७)

"न हि ज्ञानेन सदृशं पवित्रमिह विद्यते" भग. ४-३८

"ज्ञानं लब्ध्वा परां शान्तिम् अचिरेणाधिगच्छति॥ [74](भग. ४-३९)

इत्याद्याः श्रुतिस्मृतिसहस्राणि स्वानुभवश्चात्मनः मनोमयाद्विभेदेप्रमाणं। **विज्ञानमयकोशः** विज्ञानमयकोशो नाम श्रोत्रत्वक्चक्षूरसनघ्राणरूप-पञ्चज्ञानेन्द्रियसंयुक्तः, प्रमातृत्वकर्तृत्वाद्यनेकधर्मविशिष्टः, परलोक-गमनागमनसमर्थः, निश्चयरूपस्सान्तः करणवृत्तिविशेष एव विज्ञानमयकोशः। "अन्योन्तर आत्मा विज्ञानमयः" (तैत्ति. २-४) "तेनैषपूर्णः" (तैत्ति. २-२, ३-४) इत्यादि श्रुतेः। विज्ञानमयोऽयं मनोमयाभ्यन्तरो मनोमयमभिव्याप्यावतिष्ठते प्रमाताऽहं, कर्ताऽहं ऊहाऽपोहादिचतुरोऽहमित्यादिव्यवहरन्तः विज्ञानमयतादात्म्यविभ्रान्ति[75]-मवगताः केचित्पामराः कृषिवाणिज्यादिलौकिकव्यापारश्रद्धाजडाः तु विशिष्टाः केचित्कर्मोपासनादिवैदिकव्यापारं च कुर्वन्तः यथोचितमारब्धानि आरब्धान्यनुभवन्तः तदुपभोग एव पुरुषार्थः इति मन्यमानाः संसन्ति। न तु विवेकिनः। मम बुद्धिः इदानीं वशमायाति, नायति इति चेत् यद्यनुभवाद्विज्ञानमयादात्मनः तत्साक्षिभूतस्य मनोमयादिव विभेदो विस्पष्टः एवावगम्यते। दिग्वातर्कप्रचेतोश्विरूपाभिः [76]आधिष्ठानदेवताभिः प्रेरितानि श्रोत्रत्वक्चक्षूरसनघ्राणरूपाणि पञ्चज्ञानेन्द्रियाणि, शब्दस्पर्शरूपरसगन्धरूपेषु स्वस्वविषयेषु प्रवर्तन्ते। चतुर्मुखादिदेवताप्रेरिता बुद्धिर्बोद्धव्यरूपे विषये प्रवर्तमाना सती यज्ञादिवैदिकव्यापारान् कृष्यादिलौकिकव्यापाराश्च कुर्वाणाः तत्फलान्युपभुङ्क्ते। न तत्राहं सर्वसाक्षिभूतो नित्योदासीनः किञ्चित्करोमि, अनुभवामि वा। [77]किन्तु अकर्ता, [78]असंगः, निष्क्रियः, निर्मलः विज्ञानमयबाह्याभ्यन्तरपरिपूर्णः बुद्धितद्वृत्तिसाक्षिचैतन्यप्रकाशरूपः सन् नाहं

---

75. इ. च. छ. ज. उपगताः।

76. क.ख. ग. इ. छ. ज. अधिदेवताभिः।

बुद्धिरिति विचारयेत्, यदिच्छेच्छ्रेयः प्राणमयमनोमयविज्ञानमयरूपकोशत्रयं मिलित्वा सप्तदशावयवं सूक्ष्मशरीरमित्याभिधीयते। **कोशीयान्तःकरणादिविचारः।** एतत्सूक्ष्मशरीरप्रधानावयवभूतम् अज्ञानकार्यमन्तःकरणमेव जीवोपाधितस्य च अन्तःकरणस्य मनोबुद्धिचित्ताहंकार इति च चत्वारो अवयवाः। तत्र मनोबुद्धिः तद्व्यापारसम्बन्धः तावदात्मनः नास्तीति विचारितम्। एवमेव चित्ताहंकारतद्धर्मसम्बन्धोऽपि आत्मनः नास्त्येव। मम चित्तं अहंकारः इत्याद्यनुभवाच्चित्ताहंकाराभ्यां आत्मनः तत्साक्षिभूतस्य मनोबुद्धिभ्यामिव विभेदो विस्पष्टः एव। क्षेत्रज्ञरुद्ररूपाधिष्ठानदेवताप्रेरितौ चित्ताहंकारौ [79]स्मर्तव्याहंकर्तव्यरूपयोः अधिष्ठानभूतयोः प्रवर्तते। अहन्तु अध्यात्म्यादि भेदभिन्नप्रपञ्चस्य द्रष्टा सन् न कुत्रापि प्रवृत्तः कदाचिदपि चित्ताहंकारतद्व्यापारादिदृश्यप्रपञ्चे दृश्यप्रपञ्चेन सह मम सम्बन्ध एव नास्तीति सर्वदा विज्ञानमयाद्विभेदेनात्मानं विचारयन्नेव ब्राह्मणो विद्वद्वरीयान्नान्यः। "[80]धियो योनः प्रचोदयात्" विज्ञानमन्तारोयमिति[81] "विज्ञातेरपि विज्ञाता" "बुद्धेरात्मा महान् परः इत्याद्याः श्रुतयः। "यो बुद्धेस्तु सः"।

> एवं बुद्धेः परं बुद्ध्वा संस्तभ्यात्मानमात्मना।
> [82]जहि शत्रुं महाबाहो कामरूपं दुरसदम्॥
>
> (भग. ३-४३, त्रि.ता.५-११) 225

इत्याद्याः स्मृतयः स्वानुभवाश्चात्मनः विज्ञानमयाद्विभेदेप्रमाणम् इति विज्ञानमयकोशः। **आनन्दमयकोशः** आनन्दमयकोशो नाम जाग्रत्स्वप्नौ ग्रसित्वा जीवोपाधिभूतमन्तःकरणं स्वस्मिन् विलीनं कृत्वावस्थितं अविद्याज्ञानादिशब्दवाच्यं प्रियमोदप्रमोदादिवृत्तिमद्भोक्तृरूपं

---

77. इ.छ.ज.ञ. तत्पदं नास्ति। 78. क. ख. संगः।

79. च. स्मरन्नहंकर्तव्य। 80-81. इ.छ.ज.ञ. पाठेषु नास्ति।

82. ज. जहीशत्वं।

[83]साभासव्यष्ट्यज्ञानमेवानन्दमयकोशः । अहो स्वामिन्! कर्तृव्यवहारिणः विज्ञानमयस्यैव [84]भोक्तृत्वं युक्तम् न तु आनन्दमयस्याव्यवहारार्थस्येति [85]चेत्प्रबुद्धोऽसि। यथा "प्रियया स्त्रिया संपरिष्वक्तो न बाह्यं किञ्च न वेद नान्तरं" इत्यादि श्रुतीरितदृष्टान्तानुरोधेन अपेक्षितस्त्यादिविषयदर्शने [86]तल्लोभे तद्भोगे वा प्राप्ते सति तत्रैव मनसो विलयात् गृहगतं [87]रथ्यादि गतं वा विषयान्तरमजानन्नेव पुरुषः सुखं भुंक्त इति सर्वानुभवसिद्धत्वात् । [88]साभासाज्ञानरूपानन्दमयस्य तादात्म्यम् आपन्न एव विज्ञानमयः सुखं भुङ्क्ते नान्यथेति [89]युक्तमेवोक्तम् । आनन्दमयस्य भोक्तृत्वम् अस्माभिरिति चक्षुषीनिमील्य परिभावय सौम्योऽसि अस्यैव कारणशरीरमिति संकेतः । **कोशानां चतुर्णामप्युपादनविचारः ।** "अन्योन्तरात्मानन्दमयः" (तैत्ति. २-५) "तेनैषपूर्णः" (तैत्ति.२-२, ३-४) इत्यादि श्रुतेरानन्दमयः विज्ञानमयादभ्यन्तरः विज्ञानमयमापूरयन् अन्नमयादीनां विज्ञानमयान्तानां चतुर्णामपि कोशानां उपदानत्वात् मृदिव घटशरावादीन् [90]सर्वानपि कोशानापूर्यावतिष्टते। भोक्ताऽहं, प्रमत्तोऽहं, विमूढोऽहं, अज्ञोऽस्मि। आनन्दमथतादात्म्यविभ्रान्तिविमूढाः संसरन्ति। नत्वनरभिज्ञाः इत्यादिव्यवहरन्तः अनभिज्ञाः गर्भागारे गाढान्धतमोवस्थितं गतमितिवत् [91]मय्यज्ञानं गतम् अवस्थितं इत्यनुभवात् आनन्दमयादात्मनः तत्साक्षीभूतस्य [92]विज्ञानमयादिव विभेदो विस्पष्टमेवावगम्यते । अपेक्षितविषयदर्शनजन्यसुखरूपस्य प्रियस्य [93]तल्लाभजन्यसुखरूपस्य मोदस्य च तद्धर्मिणः अज्ञानस्य च तदतिरिक्ताधिष्ठानान्यनिरपेक्षसाक्षिचैतन्यप्रकाशरूपेण मयैवावभास्यत्वात् आनन्दमयबाह्याभ्यन्तरपरिपूर्णः अनन्यपूर्णः सर्वान्तरतमः

---

83-84. इ. ज. पाठे नास्ति ।
85. च. चेत्प्रमित्थोऽसि ।
86. ख.ग. तल्लाभे ।
87. छ. रन्ध्यादिगतम् ।
88-89. छ. पाठे नास्ति ।
90. चं. सर्वानप्यापूर्यावतिष्ठते ।
91. ञ. मदीयं ज्ञानम् ।
92. क.ख.ग. विज्ञानमयादिविभेदो ।
93. क. ख. ग. च. तल्लोभजन्य ।
94. इ.छ.ज. नानन्दमयोप्यानन्दः ।

अज्ञानतत्कार्याधिष्ठानभूतः अवाङ्मनसगम्यः "अत्राऽयं पुरुषः स्वयञ्ज्योतिः" (बृह. ४-३-९, ४-३-१४) इत्यादि श्रुतेः स्वयंप्रकाशमानसाक्षिचैतन्यप्रकाशः एवाहं [94]नानन्दमयः **अज्ञानेनैव ममान्धकारः** नाप्यानन्दमयेन मिथ्याभूतेन सह सत्यस्य मम मिथ्यारजतेनेव शुक्तेः सम्बन्धो नास्तीति विचारयेत्।

> यथा चन्द्रार्कसंयुक्तं तमस्तदुपलभ्यते।
> तथा शरीरसंयुक्तं ज्ञानं तदुपलभ्यते॥ 226

इत्यादिस्मृतेः तमोरूपराहुः सर्वदा विद्यमनोऽपि समयविशेषप्रकाशरूपेणादित्येन चन्द्रमसा वा संयुक्तः एव प्रकाशते। नान्यथा। एवमेव सुषुप्तौ अज्ञानतमः विज्ञानस्वरूपेण येनाधिष्ठानसाक्षिचैतन्यप्रकाशेन सह कल्पितसंबन्धवशात् प्रकाशितं सत् ततोप्युत्थानानन्तरं [95]सुखमहमस्वाप्सं गाढं मूढोऽहमासं न किञ्चिदवेदिष[96]मिति स्मरणेऽपि विषयी क्रियते। यश्चादित्यचन्द्रानलतारकवाङ्मनः [97]प्रभृतीनां ज्ञानहेतूनां सुषुप्तावभावेऽपि आनन्दमयरूपोपाधिसंयुक्तः सन् आनन्दमयमवभासयन् एक एव स्वप्रकाशेऽवतिष्टते। तथा विधनिरावरणाधिष्ठानात्मचैतन्यप्रकाशः एवाहम्। नत्वज्ञानम्। अज्ञानेन सह ममान्धकारादिना इवाकाशस्य सम्बन्धः कदापि नास्तीति सर्वदा आनन्दमयाद्विभेदेनात्मनं विचारयन्नेव ब्राह्मणः विद्वद्वरिष्ठो नान्यः। "अव्यक्तात्पुरुषः परः" (कठ. ३-११) "अक्षरात्परतः परः" इत्याद्याः श्रुतयः स्वानुभवश्चात्मनः आनन्दमयाद्विभेदे प्रमाणम्। किञ्च अन्नमयाद्यानन्दमयान्ताः पञ्चकोशाः। "[98]अस्मान्मायी सृजते विश्वमेतत्" (श्वेताश्वः ४-९) "[99]मायान्तु प्रकृतिं विद्यात् मायिनन्तु महेश्वरम्" [100](श्वेताश्व ४-१०) इत्यादिश्रुतेः ईश्वरमायापरिकल्पितब्रह्माण्डान्तर्भूतत्वात् ज्ञाननिवर्त्यत्वाच्च।

---

95-96. ख.ग. पाठे एव वर्तते। 97. इ. प्रकृतीनां, ज. प्रश्रुतीनां।

98. क. अस्मान्मां सृजति। इ.ज. अस्मान् मायी विसृजते।

99-100. क.ख.ग. पाठे एव वर्तते। 101. क.ग.इ.च.छ.ज.झ.ञ. अन्यद्रूपाः।

ऐन्द्रजालिकमायापरिकल्पितगन्धर्व नगरान्तर्भूतपदार्थाः [101]इवानृतरूपाः, अहन्तु "तत्सत्यं" (ऐतरेय ३-१२) "स आत्मा" (गणेश ५-७) "तत्त्वमसि" (छा. ६-८-७, ६-९-४, ६-१४-३, शुकर. २-३) "अहं ब्रह्मास्मि" (बृहदा. १-४-१०, पैङ्गल. ३-१, त्रि. वि. महाना. ७-१०, शुकर. २-२) "नेति नेति" (बृहदा. ३-९-२६, ४-२-४, ४-४-२२) "नित्यो नित्यानां" (कठ. ५-१३) इत्यादिश्रुतेः अन्नमयादानन्दमयान्तपञ्चकोशकल्पनाधिष्ठानत्वात् [102]तब्दावधिभूतत्वाच्च कालत्रयेऽपि बाधकाभावात् गन्धर्वनगराश्रयाकाश इव [103]सत्यस्वरूपः । अन्नमयाद्यानन्दमयान्ताः पञ्चापि कोशाः परस्परप्रकाशकत्वाभावात् तदतिरिक्तः साक्ष्यात्म[104]चैतन्यावभास्यत्वात् घटादय इव जडरूपाः, अहन्तु "सत्यं ज्ञानमनन्तं ब्रह्म" (तैत्ति. २-१-१, सर्वसा. ६, ना.उ.ता. १-५, त्रि.वि.महानाः ३-३) "नित्यं विज्ञानमानन्दं ब्रह्म" (बृहदा. ३-९-२९) "प्रज्ञानं ब्रह्म" (एते (आ) ५-३, शुकर. २-१, अन्नपू. १) इत्यादिश्रुतेः ज्ञानस्वरूपत्वेन "न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भाति कुतोऽयमग्निः तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" (कठ. ५-१५, मुण्डक २-२-१०, श्वेताश्वः ६-१४) इत्यादिश्रुतेः अन्नमयादि[105]समस्तप्रपञ्चावभासकत्वात्" अत्राऽयं पुरुषः स्वयंज्योतिः" (बृहदा ४-३-९, ४-३-१४) इत्यादिश्रुतेः स्वप्रकाशरूपत्वेन "विज्ञातारं अरे केन विजानीयात्" (बृहदा. २-४-१४, ४-५-५) इत्यादि श्रुतेः स्वांतिरिक्त प्रकाशान्तरावभास्यत्वाच्च । प्रदीप इव स्वप्रकाशचैतन्यरूपः अन्नमयाद्यानन्दमयान्ताः पञ्चकोशाः मुमुक्षूणां अन्नमयादिकार्यसहिताज्ञानविध्वंसं पुरुषार्थमपेक्ष्य देहादिदृश्यप्रपञ्चनिर्वेदपुरस्सरं श्रीगुरुसमाश्रयणादमुमुक्षूणां विमूढानामपि समयविशेषे शरीरादौ विद्वेषदर्शनाच्च अग्निकुण्डादिवद्दुःखरूपाः

---

102. च. तत्बन्धबद्धूतत्वाच्च ।

103. क.ग.च.झ.ञ. सत्यरूपः ।

104. इ.ज. चैतन्यप्रकाशावभास्यत्वाच्च ।

105. छ. ज. झ. ञ. सर्वदृश्यप्रपञ्च ।

भवन्ति। अहन्तु "आत्मनस्तु कामाय [106]सर्वं प्रियं भवति" (बृहदा. २-४-५) इत्यादिश्रुतेः अन्नमयादितदुपभोग्य[107]पुत्रदारादीनां सर्वेषामपि विषयाणां वस्तुतः [108]अप्रियाणामप्यात्मशेषत्वेन प्रियत्वश्रवणात् "रसो वै सः, रसगूँह्येवायं लब्ध्वानन्दी भवति, को ह्येवान्यत् कः प्राण्यात्, यदेष आकाश आनन्दो न स्यात्, एष ह्येवानन्द याति" (तैत्ति. ६,७,८,९,१०-७-२) इत्यादि श्रुतौ युक्तिप्रतिपादनपूर्वकमात्मनः परमानन्दस्वरूपत्वश्रवणात् उपाधिसम्बन्धमन्तरेणात्मनि विद्वेषाभावान्निरतिशयप्रेमास्पदत्वाच्च । अमृतकुण्डमिव परमानन्दरूपः । तथा च परस्परविरुद्धधर्मवत्वात् गन्धर्वनगरादाकाश इव, तमसः प्रदीप इव, विषादमृतमिव चास्मादन्नमयात् आनन्दमयान्तपञ्चकोश[109]सम्भूताद्विलक्षणः । कूटस्थनिर्विकारासंग-नित्योदासीन सत्यज्ञानानन्दैकस्वरूपः एवाहं नान्नमयादित्यतिनिर्विण्णः भूयो भूयो विचारयन् पञ्चकञ्चुक[110]संवेष्टितः पुरुषः कञ्चुकाश्रयः कञ्चुकेभ्यो विभिन्नः इति चक्षुस्सहकृतया बुद्ध्या यथा जानासि, एवं पञ्चकोशपरिवेष्टितोप्यात्मा तदाश्रयभूतः तत्साक्षीभूतः तेभ्यो विलक्षणः इति सूक्ष्मदर्शी सन् "दृश्यते त्वग्र्या बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः" (कठ. ३-१२) इत्यादिश्रुतेः विचारसहकृतया सत्त्वसम्पन्नया बुद्ध्या स्वात्मानं सम्यग्विज्ञाय सुखी भव! **अनात्मभ्योऽऽत्मनः पृथक्करणविचारः।** अहो स्वामिन्' आत्मनः अनिदंरूपस्याऽनैन्द्रियकत्वात् अनात्मभ्यः पञ्चकोशेभ्यः हस्ततः पृथक्कर्तुमशक्यत्वात् [111]बहुवारमनुष्ठितेनापि आत्मविचारेण कथं मम सम्यगात्मावगतिः भवेदिति चेत्सत्यं । यथा पुत्रान्वेषणैकाग्रचित्तःपिता बहुषु माणवकेषूच्चैरध्ययनं कुर्वत्सु सत्स्वपि पुत्रकण्ठध्वनिविशेषमनेकमाणवककण्ठध्वनिविमिश्रमपि हस्ततः

---

106. च.छ. सर्वेन्द्रियं प्रियं।

107. इ. झ. ञ. पुत्र भार्यादीनाम्।

108. ख.ग. प्रियाणां. . . . . प्रियत्वश्रवणात्।

109. ख. संघाताद्विलक्षणः।

110. ज.झ.ञ. परिवेष्टितः।

111. क.ग.इ.च.छ.ज.ञ. बहुवारमनुष्ठितेऽपि।

पृथक्कर्तुमशक्यमपि सम्यगाकर्ण्य मम पुत्रोऽध्ययनं कुर्वन्माणवकमध्ये सुखेनावस्थित इति श्रोत्रेन्द्रियसहकृतया बद्ध्या [112]पुत्रसत्तां विनिश्चित्य तुष्यति, एवमेव आत्मस्व[113]रूपान्वेषणैकाग्रचित्तस्त्वमपि पञ्च कोशेष्ववभासमानेष्वपि तदन्तर्वर्तिनमात्मानं अनात्मभूतान्नमयादिपञ्चकोश-विमिश्रमपि हस्ततः तेभ्यः पृथक्कर्तुमशक्यमपि "नेति नेति" (बृहदा. ३-९-२६, ४-२-४, ४-४-२२) इत्यात्मेत्यात्मनोऽतद्व्यावृत्तिप्रतिपादकेभ्यः "सत्यं ज्ञानमनन्तंब्रह्मा" (तैत्ति. २-१-१, सर्वसारः ६, ना.उ.ता. १-५, नि.वि. महाना: ३-३) "अत्रायं पुरुषः स्वयं ज्योतिः" (बृहदाः ४-३-९, ४-३-१४) "तत्सत्यम्" [ऐसरेय (आ) ३-१२] "स आत्मा" (गणेश - ५-७) "तत्त्वमसि" (छा.६-८-७, ६-९-४, ६-१४-३, शुकर. २-३) इत्यादिविधिमुखेनात्मास्थित्वप्रतिपादकेभ्यश्च श्रुतिवाक्येभ्यः स्मृतिपुराण-न्यायानुगृहीतेभ्यः समाकर्ण्य अन्नमयाद्यानन्दमयान्तपञ्चकोशतद्धर्म-कल्पनाधिष्ठानभूतवाङ्मानसगम्यः स्वप्रकाशसाक्षिचैतन्यप्रकाशएवाहम् । नान्नमयाद्यन्यतमः इति दीर्घकालनैन्तर्यसत्कारसेवितपरिपक्वविचारसहकृतया प्रज्ञया विनिश्चित्य वीतदुःखः सन् सुखमास्व सौम्य! नात्रा[114]पवित्रविकलैः चिराभ्यस्तैः बुद्धिक्षोभः कर्तव्यो भवता । यथा तु त्वं गन्धादिविषयलाभार्थी सन् गन्धादिविषयजातं रजःकण्टकादियुक्तपुष्पादिरूपतत्तदाश्रय[115]संवलितं तत्तदाश्रयेभ्यो हस्ततः पृथक्कर्तुमशक्यमपि घ्राणादितत्त[116]दिन्द्रियसहकृतया बुद्ध्यानुपयुक्तांशोपेक्षापूर्वकंग्रहीतुं शक्नोषि । [117]तथात्मलाभार्थिनो महानुभावसम्प्रदर्शितात्मविचारमार्गस्य भ (ग) वत्स्वरूपं विशुद्धचैतन्यं, सदानन्दघनं, अन्नमयाद्यानन्दमयान्ततत्तदुपाधिसंवलितमपि

---

112. छ. पुत्रवत्तां ।
113. ख.ग. रूपान्वेषणाग्रचित्तः ।
114. क.ग.इ.च.छ.ज.झ.ञ. अपवित्रविकल्पैः । 115. क. संवृत्तम् । च. सन्दलितम् । छ. सळलितम् ।
116. च. इन्द्रियबुद्ध्यानुप ।
117. च. तवात्मलाभार्थिनो ।

तत्तदुपाधिभ्योहस्ततः [118]पृथङ्निर्देष्टुमशक्यमपि विचारसह[119]कृतया बुद्ध्या प्रज्ञया अनुपयुक्तमिथ्याभूतोपाध्यंशोपेक्षापूर्वकं अवगन्तुं कोऽयमायासः । श्रद्धाविनयसम्पन्नोऽस्मत्पक्षपातोऽन्यत्र पक्षपातं परित्यज्य सम्यगात्मप्रबोधोदयपर्यन्तमात्मानमेव विचारय, इन्द्रियैरर्थोपलब्धिरूपा-स्थूलशरीरप्रधाना जाग्रदवस्था । जागरितसंस्कारजन्यसविषयप्रत्ययरूपा सूक्ष्मशरीरप्रधाना स्वप्नावस्था । जाग्रत्स्वप्नग्रसनशीलकेवलाज्ञानरूपा कारणशरीरप्रधाना सुषुप्त्यवस्था इत्येदवस्थात्रयम् । "[120]तस्य त्रय [121]आवस्था· [122]त्रयस्वप्नाः" (ऐत (आ) ३-१२) "नेह नानास्ति किञ्चन" (कठः ४-११, बृहदाः ४-४-१९, त्रि.वि.महानाः ३-३, अध्यत्म ६३, निराः ११) इत्यादिश्रुतेः मिथ्यात्वादृश्यत्वच्च नाहम् किन्तु तत्त्रितय-कल्पनाधिष्ठानभूतः तत्त्रितयसाक्षिचैतन्यप्रकाश एवाहमित्यपि सर्वदा आत्मानं अवस्थात्रयाद्विभेदेन विचारयेत् ।

तमैवेकं विजानथात्मानमन्यावाचो विमुञ्चथा ।
नानुध्यायाद्बहूंच्छब्दान्वाचो विग्लापनं हि तत् ॥ (मुण्डकः २-२-५) 227

इत्यादि श्रुतीरितवाग्वेगं विसृज्य

अहं ब्रह्मेति वाक्यार्थबोधो [123]यावद्दृढी भवेत् ।
शमादिसहितस्तावदभ्यसेच्छ्रवणादिकम् ॥ 228

इति भगवद्भाष्यकारोपदेशात् ।

श्रवणादिक्रिया तावत्कर्तव्येह प्रयत्नतः ।
यावद्यथोक्तविज्ञानमाविर्भवति भास्वरम् ॥ 229

---

118. च. पृथक्कर्तुमशक्यमविघ्राणादितत्तद्विचार ।

119. च. कृतया प्रज्ञया ।

120. च. सत्व (त्य) त्रय ।

121. च.छ.ज. अवस(न)धा

122. च. त्रय स्वप्राणाः ।

123. इ.झ.ञ. यावत् धृती भवत् ।

इत्यादि वार्तिककारवचनात्।

आपरोक्ष्यावसानत्वाद्भूयो भूयो विचारयेत्। इत्युक्तत्वाच्च यावद्ब्रह्मसाक्षात्कारो मनस्याविर्भवति तावत्पर्यन्तमनिर्विण्णः [124]श्रद्धवित्तो भूत्वा,

दद्यान्नावसरं किञ्चित्कामादीनां मनागपि।
आसुप्तेरामृतेः कालं नयेद्वेदान्तचिन्तया॥ 230

इत्युक्तत्वात्सुषुप्तिपर्यन्तं दिवसं, मरणपर्यन्तमायुश्च व्यर्थमकुर्वन् आत्मानमेव विचारयन् अन्नमयादीनामानन्दमयान्तानां पञ्चानामपि कोशानां मध्ये कोऽहं स्यामित्यनुतापपुरस्सरं इदं नाहं इदं नाहमित्यात्मनि विचारिते सति यन्मयस्सन्निधिं नाहमिदमिदं इत्यात्मनो अतद्व्यावृत्तिं प्रतिपद्यसे [125]तन्मय एव त्वं नान्यः इति सिद्धमित्यनात्मान्नमयाद्यात्मतानिरसनपूर्वकं त्वं पदार्थभूतमात्मानं वस्तुतः ब्रह्मत्वेनावशिष्टं विचार्य तत्पदार्थभूतं [126]परंब्रह्म विचारयेत्। आत्मनः तदैक्यावगतेरेव पुरुषार्थहेतुत्वात् तथाहि आकाशादीनां पृथिव्यन्तानां पञ्चानामपिभूतानां मध्ये किं स्याद्ब्रह्म इत्युपताप[127]पुरस्सरं पूर्वोपपादिताभिरेव युक्तिभिः नेदं ब्रह्म, नेदं ब्रह्म। **चिद्विलासप्रपञ्चोऽयं** एतेषां अनृतत्वाज्जडत्वात् दुःखरूपत्वाच्चेति विचारे कृते यदेकमवशिष्टं आकाशादिपृथिव्यन्त-पञ्चभूततत्कार्यब्रह्माण्डकल्पनाधिष्ठानभूतं, तब्दाधावधिभूतं, तत्साक्षिभूतं, तत्सर्वबाह्याभ्यन्तरपरिपूर्णं, अनन्यपूर्णं, सर्वान्तरतमं, अवाङ्मानसगम्यं, सृष्टिस्थितिसंहाररूपमहास्वप्न महाजाग्रन्महासुषुप्तिरूपावस्थात्रयकल्पनाधिष्ठान

---

124. क.ग. श्रद्धावितो। इ.छ.ज. श्रद्धाचित्तो। ञ. श्रद्धान्वितो।

125. क. तन्नय एव त्वम्।

126. क. ग. परं विचारयेत्। इ.च.ज.झ.ञ. परं ब्रह्मैव विचारयेत्।

127. झ. पूर्वकम्।

भूतं, तत्त्रितयबाधावधिभूतं, तन्त्रितयसाक्षिभूतं, आकाशादपि विस्तीर्णं,[128] विष्वग्निष्वावभासकं, [129]सर्वबुद्धिगुहाज्योतिरूपं, परमकारणं "आकाशशरीरं ब्रह्म" (तैत्ति.१-६-३) "सत्यात्मप्राणारामं मन आनन्दं" (तैत्ति. १-६-४) "शान्तिसमृद्धममृतं" (तैत्ति. १-६-५) "सत्यं ज्ञानमनन्तं ब्रह्म" (तैत्ति. २-१-१, सर्वसारः ६, नाउ.ताः १-५-, त्रि.वि.महानाः ३-३) "नित्यंविज्ञानमानन्दं ब्रह्म" (बृहदाः ३-९-२८) "तत्त्वमसि" (छा.६-८-७, ६-९-४, ६-१४-३, शुकर. २-३) "अहं ब्रह्मास्मि" (बृहदा. १-४-१०, पैङ्गलः३-१, त्रि.वि.महानाः७-१०, शुकरः २-२) "प्रज्ञानं ब्रह्म" (ऐत (आ) ५-३, शुकर.२-१, अन्नपूः१) इत्यादिश्रुतेः सत्यज्ञानानन्दस्वरूपं वस्तुतः प्रत्यक्त्वेनैवावशिष्टं पूर्णचैतन्यमेव परम्ब्रह्म इत्यपि विचार्य "तत्त्वमसि" (छा.६-८-७, ६-९-४, ६-१४,३ शुकर २-३) "अहं ब्रह्मास्मि" (बृहदा.१-४-१०, पैङ्गल.३-१, त्रि.वि.महानाः ७-१०, शुकर २-२) इत्यादिवेदान्तवाक्येभ्यः स्मृतिपुराणन्यायानुग्रहीतेभ्यः स्वानुभवच्चाहमेव परम्ब्रह्म ब्रह्मैवाहमिति परस्परतादात्म्यमनुभूय ब्राह्मणः आत्मत्वादेव ब्रह्मणि पारोक्ष्यादिविभ्रान्तिं आत्मनो ब्रह्मत्वादेवात्मनि सूद्वितीयत्वादिविभ्रान्तिं च परिहृत्य

> चिद्विलासप्रपञ्चोऽयं सखे ते दुःखदः कथम्।
> [130]नहीन्द्रवारुणी रामा [131]सीतया कटुतां व्रजेत्॥ 231

इत्याद्युक्तत्वात्स्वतः [132]अन्यदिव इहावभासमानमपि व्यष्टिसमाष्ट्यात्मकमशेषं दृश्यजातं अध्यस्तमधिष्ठानात्मचिद्विलासमात्रतयावलोक्य नामरूपे द्वे अपि मिथ्यात्वादुपेक्ष्य प्रापञ्चिकोपायापायप्रयुक्तहर्षमर्षादि [133]दुःखविहीनः

---

128. इ. ज. विहग्निश्वावभासकम्।

129. क.ख.ग. सर्वबुद्धिमहाज्योतिरूपं।

130. क.ग.छ.ञ. नहीन्द्रवरुर्णा।

131. क.ख.ग.च.छ. सितया।

132. क. अन्यदिहावभास।

133. इ. दुःखलिहिनः।

परमकारणसच्चिदानन्दाद्वितीयसर्वपरिपूर्णप्रत्यमभिन्न [134]ब्रह्मचैतन्यप्रकाश-मात्रस्सन् यथा कश्चित्कण्टकसमाकीर्णकाष्टभारं शिरस्युद्वहन् दुःखितस्सन् तं च भारं दुःखबुद्ध्या समुत्सृज्य सुखमास्ते, एवमेव प्रमातृत्वकर्तृत्वभोक्तृत्वादिविभ्रमाद्यनेकदुष्कण्टकाकीर्ण लौकिकवैदिककर्म-कलापरूपसंसारमहाकाष्टभारं मनस्युद्वहन् एतावत्पर्यन्तमतिदुःखिनः इदानीं कार्यज्ञेयसमाप्तेः तं च भारं दुःखबुद्ध्या समृत्सृज्य निर्भरो निर्भयो निर्मलः [135]निष्प्रपञ्चनिबिडसौरातप इव प्रकाशमात्रः शीतलाशयो, वीतदुःखो निष्प्रपञ्चाकार इव सन्मात्रो निष्प्रपञ्चे [136]निबिडचन्द्रालोकः इवानान्दमात्रः परममोक्षमवाप्स्यसि। श्रद्धस्व तात श्रद्धस्व नात्रसंशयकारणम्। एतावतश्श्रेयसः पञ्चकोशविचारः परमसाधनमिति भूयो भूयः [137]पथ्यं निवेदयितव्यमिति न्यायात्पञ्चकोशविचारप्रकारः अस्माभिः सम्यगेव प्रदर्शितः । भवन्ति चात्रश्लोकाः ।

भूतेभ्यो एव चोत्पन्नं शरीरं पाञ्चभौतिकम् ।
तस्मात्प्राणमयोह्यात्मा विभिन्नश्चान्तरो यतः ॥ 232

[138]योऽयं प्राणमयोह्यात्मा भाति सर्वशरीरिणाम् ।
ततो मनोमयोह्यात्मा विभिन्नश्चान्तरो यतः ॥ 233

योऽयं मनोमयोह्यात्मा भाति सर्वशरीरिणाम् ।
[139]विज्ञानमय आत्मा च ततोन्यश्चान्तरो यतः ॥ 234

[140]विज्ञानमय आत्मा यो भाति सर्वशरीरिणाम् ।
आनन्दमय आत्मा च ततोऽन्यश्चान्तरो [141]यतः ॥ 235

---

134. च ब्रह्म चैत्यप्रकाश ।

135. क. ग. निष्प्रपञ्चाकाश इव ।

136. झ. ञ. निर्बिम्ब चन्द्रलोक ।

137. क. ग. पथ्य । इ.ज. सद्यः । च.झ.ञ. तथ्यम् ।

138. इ. योगो ।

139. इ. ज. विज्ञानमयमात्मयो ।

140-141. इ.च.ज. नास्ति ।

योऽयमन्नमयस्सोऽयं पूर्णः प्राणमयेन तु
मनोमयेन प्राणोऽपि कोशः पूर्णस्तथैव च ॥ 236

तथा मनोमयोह्यात्मा पूर्णो ज्ञानमयेन तु
आनन्देन सदा पूर्णः कोशो ज्ञानमयस्सुराः ॥ 237

तथानन्दमयश्चापि ब्रह्मणाऽन्येन साक्षिणा
सर्वान्तरेण सम्पूर्णो ब्रह्मा नान्येन केनचित् ॥ 238

यदिदं ब्रह्मपुच्छाख्यं [142]सत्यज्ञानसुखात्मकम्।
[143]सरसस्सर्वदा साक्षात्स एवानन्द उत्तमः ॥ 239

नात्मा वपुः पार्थिवमिन्द्रियाणि, देवाह्यसुर्वायुजलं हुताशः।
मनोन्नमात्रं धिषणा च सत्वमहंकृतिः खं क्षितिरर्थसाम्यम् ॥ इत्याद्याः
240

इति

**कम्भम्पाटि अमरेश्वरशास्त्रिभिः**

*कृताज्ञानध्वान्तचण्डभास्करे*

*पञ्चकोशविचारो नाम*

*पञ्चमं प्रकरणं समाप्तम्।*



142. क.ख.ग.इ.च.झ. सत्यज्ञानद्वयात्मकम्। 143. झ. स नरस्सर्वदा।

## भावनाभेदविचारो नाम षष्ठमप्रकरणम्।

**जीवेश्वरैक्यभावना विचारः।** अथ भावनाभेदान्विचारयामः। प्राज्ञसमष्टिरूपेश्वरैकदेशप्राज्ञोपाधिभूतं ईश्वरोपाधिभूताज्ञानसमष्टिरूपमायैक देशव्यष्टयज्ञानं, प्राज्ञसमष्टिरूपेश्वरोपाधिभूतां, अज्ञानसमष्टिरूपां, मायां च मिथ्येति, समष्टयन्तः भूतत्वाद्व्यष्टेः आम्रादिबीजतत्समष्टयोरिवात्रापि भेदो नास्तीति च पर्यालोच्य, [1]तदुभयमुपेक्ष्य तदुभयाधिष्ठानसाक्षिचैतन्यप्रकाशः आम्रादिबीजतत्समष्टयवच्छिन्नाकाश इवैकः एवेत्यपि विचार्य, स च साक्षिचैतन्य[2]प्रकाशोऽहमेवेत्यनुचिन्तनमेव **जीवेश्वरैक्यभावना** तैजससमष्टिरूपहिरण्यगर्भैकदेशतैजसोपाधिभूतं, हिरण्यगर्भोपाधिभूतर्लिङ्गशरीरं, समष्टिरूपसूक्ष्मप्रपञ्चैकदेशव्यष्टिलिङ्गशरीरं, तैजससमष्टिरूपहिरण्यगर्भोपाधिभूतलिङ्गशरीरसमष्टिरूपं, सूक्ष्मप्रपञ्चं मिथ्येति समष्टयन्तर्भूतत्वाद्व्यष्टेः आम्राद्यङ्कुरतत्समष्टयोरिवात्रापि भेदो नास्तीति च पर्यालोच्य, तदुभयमुपेक्ष्य तदुभयाधिष्ठानसाक्षिचैतन्यप्रकाशः आम्राद्यङ्कुरतत्समष्टयवच्छिन्नाकाश इव एकः एवेत्यपि विचार्य, स च साक्षिचैतन्यप्रकाशोऽहमेवेत्यनुसन्धानमेव तैजसहिरण्यगर्भैक्यभावना विश्वसमष्टिरूपविराडेकदेशविश्वोपाधिभूतं विराडुपाधिभूतस्थूलशरीरसमष्टिरूपब्रह्माण्डैकदेशव्यष्टिस्थूलशरीरं विश्वसमष्टिरूपविराडुपाधिभूतं, स्थूलशरीरसमष्टिरूपं, ब्रह्माण्डं च मिथ्येति समष्टयन्तर्भूतत्वाद्व्यष्टेः आम्रादिवृक्षतत्समष्टिरूपवनयोरिवात्रापि भेदः अस्तीति च पर्यालोच्य,

---

1 ङ. च.तदुभयमपेक्ष्य। 2. क.ख ग. प्रकाशोनामेत्यनुचिन्तनम।

तदुभयमुपेक्ष्य, तदुभयाधिष्ठा न साक्षिचैतन्यप्रकाशः आम्रादिवृक्षतत्समष्टिरूपवनावच्छिन्नाकाशेव एकः एवेत्यपि विचार्य स च साक्षिचैतन्यो प्रकाशोऽहमेवेति पर्यालोचनमेव विश्वविराडैक्यभावना, एवमेवावशिष्टजीवचैतन्यषट्कस्यावशिष्टेश्वरचैतन्यषट्केन सहैक्यमन्तर्मुखे नास्ति। केन बुद्धिमता यथायोगमवधानादनुसन्धेयम्। यदा तु ज्ञानाभ्यासिनः मुमुक्षोः तवास्मदुपदिष्टप्रकारेण प्राज्ञादित्रयस्य ईश्वरादित्रयेण सहैक्यभावना परिपक्का स्यात्तदा व्यष्टिसमष्ट्यात्मकमिदं विश्वं मय्यैव परिकल्पितं अहमेव सर्वप्रपञ्चकल्पनाधिष्ठानभूतं परमकारणं परंब्रह्म न मत्तोऽन्यत्किञ्चिदपि "तत्त्वमस्तीति" स्वसाक्षिको हृत्तापनिवृत्तिकरः सर्वदुर्वासनाविध्वंसकृत्सम्यगनुभवः स्यात्।

न शास्त्र श्रवणान्मोक्षः ब्रह्मात्मानुभवं विना।
नह्यन्नश्रवणात्तृप्तिः अन्नादनमृते नृणाम्॥ 241

अनुभूतिं विना मूढो [3]वृथा ब्रह्मानुमोदते।
प्रतिबिम्बितशाखाग्रफलास्वादानु[4]मोदवत्॥ 242

इत्यादिनास्मदीयैरात्मानुभवापर्यवसन्नस्य शास्त्रार्थश्रवणस्य श्रममात्रपर्यवसन्नत्वेन वैय्यर्थ्यप्रतिपादनात् **दुर्वासनाविषलतासमूलोन्मूलनम्** "कश्चिद्धीरः [5]अस्मांल्लोकान्प्रेत्य आत्मानं वेद" "अयमहमस्मीति" "कश्चिद्धीरः प्रत्यगात्मानमैक्ष" दित्यादिश्रुतेः निम्नगायाः महानद्याः इव निरोधे रजस्तमोवृत्तिप्रवाहनिरोधेऽपि महदेव धैर्यं परिगृह्यात्मलाभान्नपरं विद्यते। "यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः" (यो.शि.३-१३, भग.६-२२) इत्यादिशास्त्रात् आत्मलाभमेव परमपुरुषार्थं मन्यमानःततोऽतिरिक्तंविषयनिरपेक्षो

---

3. क.ख.ग.च.छ.झ. कथा। 4. क.ख.ग.च.छ. मोदनवत्।

5. क.ग.च.छ.ज.झ. अस्मान् लोकान् होत्य।

[6]मानावमानादिद्वन्द्वसहनशीलः, जिह्वोपस्थवेगतिरस्करणमहाधीरः भूतद्रोहपरान्मुखः, [8]कामत्यागमहातपस्संवर्धितसत्वातिशयविशदीकृत-प्रज्ञाविशेषः, प्राक्तनानेकभवपरम्परापरिप्राप्तकर्तृत्वादिविविधदुर्वासना-[9]विषलतासमूलोन्मूलनमहाशूरः, विद्यमानमपि इमं देहादिप्रपञ्चं गतमेव मन्यमानः, क्वाप्यनासक्तहृदयः, प्राक्तनभाग्योदयेश्वरानुग्रहः, श्रीगुरुकारुण्य-प्रभावभवितव्यब्रह्मात्मानुभवाविर्भावसमयं प्रतीक्षमाणो, निर्वेदेन स्वात्मानमेवेत्थं परिभावयन्, मत्तेभ इव कपित्थफलरसं, ब्रह्माण्डाख्यकपित्थफलरसरूपब्रह्मानन्दचिद्रसं, आस्वाद्यान्यत्सर्वं उपेक्ष्य यथारब्धं विचारयन्, सुखी भव सौम्योऽसीति । इत्थं ममुक्षुजनानुजिघृक्षया अस्माभिः भावनाभेदाः [7]विचारिताः ।

**श्रीकम्भम्पाटि अमरेश्वरशास्त्रिकृताज्ञानध्वान्तचण्हभास्करे भावनाभेदविचारे षष्टतमं प्रकरणं समाप्तम् ।**



श्रीमच्छङ्कर भगवत्पादाचार्याः ।

6-7. ख.ग. नास्ति । क.इ.च.छ.झ.ञ. मानावनानादि ।

8. क.च.छ.झ.ञ. काम्यत्याग ।

9. क.च.छ. विषयता । इ.ज. विफलता ।

## अथ ज्ञानस्वरूपविचारे सप्तमं प्रकरणम् ।

अथ ज्ञानस्वरूपं विचारयामः । [1]यथ भारूपमात्र एव प्रकाशैकस्वभावोऽग्निः सर्वत्रावस्थितोऽपि [2]वर्त्याद्युपाध्यसंस्पृष्टः अप्रकाशमानस्सन् तैलार्द्रलोहितशुक्लकृष्णप्रशिथिलतूलावयवपरिणामरूप-वर्त्याद्युपाधिकः सन् संप्राप्तदीपादिसंज्ञः सविकारवर्त्यादिकं तदाधारभूतसच्छिद्रसविकार [3]काचस्थाल्यादिकं च प्रकाशयन् स्थाल्याद्यधिकरणभूतं सोपकरणं अपवारकमप्यैक्यरूपेण स्वतो निर्विकारः तत्सर्वशद्धयशुद्धिहानिवृद्ध्यादिविकारासंस्पृष्टोदासीनः एकः एव स्वसन्निधिमात्रेण प्रकाशयति एवमेवायमात्मा सर्वपरिपूर्णाद्वितीय सच्चिदानन्दमात्रः अग्निस्थानीयनिर्विशेषब्रह्मचैतन्यप्रकाशैकस्वभावो निरुपाधिकः सर्वत्रावस्थितः [4]प्रकाशमानोऽपि

> यथा चन्द्रार्कस्संयुक्तं तमस्तदुपलभ्यते ।
> [5]तथा शरीरसंयुक्तं ज्ञानं तदुपलभ्यते ॥ 243

इत्यादिशास्त्रात्सुषुप्त्यादिव्यवहारैकसमाधिगम्यत्रिगुणात्मकतैलस्थानीयजीवादृष्ट-गर्भप्रशिथिलतूलावयवराशिस्थानीयमूलाज्ञानपरिणामरूपसविकारवर्तिस्थानीय्यान्तः-करणोपाधिकः सन् सम्प्राप्तप्रत्यक् संज्ञः, सविकारमन्तःकरणं वर्तिस्थानीयं

---

1. क. यथा रूपमात्र एव । झ. ञ. यथाहि रूपमात्र एव ।
2. क.ग.इ.च.छ.ञ. वत्याद्युपाधि संस्पृष्टः ।
3. क.ग.इ.छ.ज.झ. काचस्थादिकं ।
4. क.ग.इ.छ.ज.झ.ञ. प्रकाशमानेऽपि ।
5. क.ग.इ.छ.ज.झ.ञ. तदा ।

तदाधार[6]भूतसच्छिद्रकाचस्थालीस्थानीयस्थूलशरीररूपपिण्डाण्डं च प्रकाशयन् पिण्डाण्डाश्रयभूतं तत्सर्वसमष्टिरूपं ब्रह्माण्डमपवरकस्थानीय[7]मप्यैक्यरूपेण स्वयंनिर्विकारः तत्सर्वशुद्ध्यशुद्धिहानिवृद्ध्यादिविकारासंस्पृष्टो नित्योदासीनः एकएव स्वसन्निधिमात्रेण प्रकाशयति। तथाहि स्वशरीररूपे पिण्डाण्डे शिरःफलितरोमादिकं आप्तवाक्येनान्तःर्नाडीभेदादिकं योगशास्त्रादिना स्वोदीरितं स्वोदरगतं शाब्दिकं स्वयमेव च श्रोत्रेन्द्रियद्वारा शरीरगतशीतोष्णस्पर्शादिकं त्वगिंन्द्रियद्वारा तद्गतनीलपीतादिरूपं स्थौल्यकार्श्यादिकं च चक्षुरिन्द्रियद्वारा स्वजिह्वादि तत्तदवयवगतरसविशेषादिकं रसनेन्द्रियद्वारा स्वशरीरगतगन्धादिकं घ्राणेन्द्रियद्वारा च एतच्छरीरान्तस्थान्तःकरणोपाधिकेन तत्सर्वबाह्याभ्यन्तरपरिपूर्णेनावाङ्मनसगोचरप्रकाशैकस्वभावेन विषयिणाऽनिदं-रूपेण सर्वेषां [8]सोहमहमिति। नित्यप्रत्यक्षरूपेणेदमित्थमिति हस्ततो निर्देष्टुमशक्येन ईदृग्तादृगिति मनसा ध्यातुं वा वाचावक्तुं वाप्यशक्येन स्वस्वरूपसाक्षिचैतन्यात्मप्रकाशेन आपादमस्तकं मांसास्थिमयमिदं विषयरूपं सविकारं शरीरं सच्छिद्रकाच[9]घटोदरवर्तिस्थदीपाग्निना घटतद्धर्मादिकं गृह्यते। न शरीरोपाधिकचैतन्यैन शरीरान्तरतद्धर्मादिकं गृह्यते। घटान्तर्गतदीपाग्निना घटान्तरमिवेति आबालपण्डितमतिप्रसिद्धमेतत्। एवमेवैतच्छरीरान्तरावस्थितं सप्राणेन्द्रियमन्तःकरणरूपं सरागादि[10]विकारं स्थूलसूक्ष्मशरीरमपि स्थूलशरीरावभासकचैतन्येनैव घटावभासकदीपाग्निना घटोदरगतसविकारवर्ति-स्वरूपमिवावभास्यतेति सूक्ष्मदृशाम् अतिविस्पष्टमेवैतत्। एवमेतत्सूक्ष्मशरीरावभासकचैतन्येनैव तदुपपादनभूतमज्ञानरूपं कारणशरीरमपि वर्त्यवभासकदीपाग्निना वर्त्युपादानभूतप्रशिथिलतूलायवजातमिवावभास्यतेति

---

6. इ, ज. भूतकाचस्थाली।

7. क. ग. इ. च. छ. ज. मप्येकरूपे।

8. ख. नोहमहमिति।

9. क.ख.ग.इ.च.छ.झ.ञ. घटोदरवर्तिवर्तिस्थ।

10. क.ग.च.छ.झ.ञ. विकारसूक्ष्मशरीरमपि।

विचारचारुचेसतां स्पष्टतरमेवैतत्। एवञ्च "येन वा पश्यति" (II ऐत ५-१) इत्यादिश्रुतेः।

इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते।
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः॥ (भग. -१३-२) 244

इत्यादिशास्त्रात् ममेदं शरीरं ज्ञायत इत्यनुभवाच्च [11]स्वस्य द्रष्टुत्वमस्य दृश्यत्वं च स्पष्टतममेवावगम्यते।

जाग्रत्स्वप्नसुषुप्त्यादिप्रपञ्चं यत्प्रकाशते।
तद्ब्रह्माहमिति ज्ञात्वा सर्वबन्धैः प्रमुच्यते॥ 245
[12]त्रिषु धामसु यद्भोग्यं भोक्ता भोगश्च यद्भवेत्।
तेभ्यो विलक्षणस्साक्षी चिन्मात्रोऽहं सदाशिवः॥ 246
एक आत्मैव मन्तव्यो जाग्रत्स्वप्नसुषुप्तिषु।
स्थानत्रय व्यपेतस्य पुनर्जन्म न विद्यते॥ 247

इत्यादिश्रुतेः योऽहं सुषुप्तौ किमप्यजानन् सुखमस्वाप्सं स एव स्वप्ने किमपि कष्टमनुभूयेदानीं जागरे निर्भयोऽस्मीति प्रत्यभिज्ञाबलाच्चैकस्यैव शरीरद्रष्टुरात्मनः व्यवहारशालाभ्यवहारशाला[13]शय्यापवरकादित्रितयप्रकाशकत्वं एकार्कप्रकाशस्यैव जाग्रत्स्वप्नसुषुप्तिरूपावस्थात्रयप्रकाशकत्वमपि स्पष्टमेवावगम्यते इति **पिण्डाण्डे साक्षित्वमात्मनः निर्विवादमुपपादितमेवमेव** ब्रह्माण्डेऽपि पिण्डाण्डसाक्षिणः एव आत्मनः साक्षित्वप्रतिपादनपूर्वकं ब्रह्मत्वं प्रतिपाद्यतेऽस्माभिः सावधानमनाः समाकर्णय सौम्य! पिण्डाण्डसाक्षिचैतन्यप्रकाशरूपेणात्मनैव ब्रह्माण्डेऽपि वेदशास्त्रपुराणादिप्रतिपादितं पारलौकिकं, किञ्च गंगाप्रभृतिभिः सर्वनिम्नगारूपकुल्यालिंगितानेकपारावारसरोवराभिशोभिते, सुरासुरयक्षोगणादि

---

11. क.ग.इ.च.छ.ज.झ.ञ. स्वस्व। 12. क. ग. छ. तिष्ट।
13. क.ग.इ.च.छ.ज.ञ. शय्यापनरकादि।

क्रीडज्जनगर्भमहासमूहहेमाचलाद्यनेकक्रीडा [14]धरणीधरातिभूषिते विरिञ्चादिकीटान्तोत्तममध्यमाधमरूपचतुर्विधसांसारिकजीवजालपरिपूरित चतुर्दशविविधजगति, विचित्रमहाविधविस्ताराातिविस्तृते, सत्यलोकवैकुण्ठ कैलासाद्यतिविचित्रमहाराजमन्दिरालंकृते, [15]प्रान्तानवरतदन्दह्यमान-नितान्तदर्शन [16]श्रवणस्मरणानर्हातिदुस्सहतीव्रदुःखकालानलसन्तप्यमान-मरणजीवनोभयविलक्षणदुर्दशापन्न[17]पातकिजनपशुनिचयविशसनाति-महाशूरैकानेकपाद निष्पादैका नेकपाणि निष्पाण्यैकानेकप्रज्वलद्धूम्रनेत्र-निर्नेत्रैकानेकलम्बकुसूलकर्ण निष्कर्णानेकप्रज्वलद्धूम्रमुखनिर्मुखनासिका-दुर्बिलविनिसृतदुस्सहप्रलयपवनवेगान्यूनश्वासप्रश्वासमहावाताति भीषणदाहभेदकवितर्कनभक्षणतर्जनभर्जन महाव्यग्राग्रानेकयमभट (यमभटशतृघ्न) दुष्कोलाहलप्रचण्डमहानरकचण्डालवाटिकातिविकृते, ब्रह्माण्डमहापट्टणे, मूलज्ञानरक्षमायानिर्मिते, भोक्तृत्वदुराग्रहग्रैवेयपरिगृहीत-कर्तृत्वभ्रमणार्थभारारोपितः, करद्वयसंघटित देहाभिमानद्रुपदग्रथितः, पुण्यपापरूपकर्मपाशहस्तरागरक्षोवराकेण वीथ्यां वीथ्यां अपाराधीव इतस्ततः चार्यमाणः, प्रवृत्तिकशासंताडितक्लिन्नसर्वांगः, क्वचित्कामपिशाचेन सर्वमायाकरण्डदुर्मलभाण्डवनितापिण्डाद्युपभोगरूपमल-भक्षणे विनियोजितः, क्वचिद्गर्भनरके सन्निरुद्धः, क्वचिन्महानरकदुर्गर्ते परिभ्रामितः, भोगवासनादुर्भगकामिनीभूतेन ममतालतासंवेष्टितसर्वगात्रः, देहाभिमान पट्टपिहितविवेकचक्षुः, दोषदुष्कण्टकाकीर्णविषयाऽरण्ये विस्पष्टः । बहुविधदुःखमासादितः सुषुप्तिच्छलेन क्वचिन्मूर्च्छितः स्वप्नमिषेणामिषेण किञ्चित्प्रलपन्, जाग्रद्व्याजेनातिदुस्सहं दुःखमसहमानः, बहुविधमार्तस्वरं कुर्वन्नुच्चैः प्ररुदन् क्वाप्यात्मनः, क्षेमकृच्चरण[18]मपश्यन् पारलौकिकं

---

14. ख. झ. क्रीडाधणी घराति । 15-16. ख.प्रान्तानवरतनितान्तदन्दह्यमान दर्शन श्रवण ।

17. ञ. पातकजन । 18. ख. झ. ञ. मपश्यन् विषयजात ।

विषयजातमैहिकमपि देशान्तरस्थाप्तोदीरितं, श्रोत्रियेंद्रियद्वारा वीथ्यर्कातपादिशीतोष्णस्पर्शादिकं त्वगिन्द्रियद्वारा, नीलपीतादिरूपसहितं गिरिनदीसमुद्रवृक्षसूर्येन्दुतारकादिकं यावच्छक्यं चक्षुरिन्द्रियद्वारा नदीसमुद्रादिगतरसविशेषादिकं रसनेन्द्रियद्वारा, भूम्यादिगतगन्धादिकं घ्राणेन्द्रिय द्वारा ब्रह्माण्डमिदं पिण्डाण्डावयवंविभास्यते इति।

[19]सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम्।
द्वयमेतद्धि जन्तूनां अलंघ्यं दिनरात्रिवत्॥ 248

इति पौराणिकवाक्यमनुसरन् स्वस्य परमसुखाविर्भावकालं प्रतीक्षमाणः कदापि दुःखम्बुधेः परं पारं [20]नापश्यत् अतः पिण्डाण्डसाक्षिणः एवात्मनः ब्रह्माण्डसाक्षित्वात् दीपस्याग्नित्वमिव ब्रह्मत्वं सिद्धम्। तथा च "प्रज्ञानं ब्रह्म" (ऐत (आ) ५-३, शुकर. २-१, अन्नपूर्णः।) "अयमात्मा ब्रह्म" (माण्डूक्य २, नृ.पू. ४-२, नृसिंह १-२, शुकर. २-४, राम २-१, गणेशः [illegible]-६) "तत्त्वमसि" (छा. ६-८-७, ६-९-४, ६-१४-३, शुकर २-३) "अहं ब्रह्मास्मि" (बृहदा १-४-१०, पैङ्गलः ३-१, त्रि.वि.महानाः ७-१०, शुकरः २-२) "सयश्चायं पुरुषे" (तैत्ति. २-८, ३-१०-४)

क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत।
क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तद्ज्ञानं मतं मम॥ (भग १३-३) 249

यस्येदमखिलं नित्यं गोचरं रूपवद्रवेः
तदेव परमं ब्रह्मा वित्त यूयं सनातनम्॥ 250

येन शब्दं रसं रूपं गन्धं जानासि राघव।
सोऽयमात्मा परं ब्रह्मा सर्वमापूर्यसंस्थितः॥ 251

इत्यादि श्रुतिस्मृतिपुराणनिचयैः **देहसाक्षिणः जीवस्यैव जगत्साक्षित्वेन ब्रह्मत्वप्रतिपादनात्** [21]पिण्डाण्डसाक्षिचैतन्याप्रकाशरूपोऽहमेव

---

19-20. ख. झ. ञ. पाठेषु वर्तते। 21. क.ग.[illegible]

ब्रह्माण्डसाक्षित्वात् ब्रह्मचैतन्यप्रकाशरूपोऽस्मीत्येवमाकारकं जायमानं ज्ञानमेव सर्वसंसारदुःखनिवर्तकं सम्यग्ज्ञानं "ब्रह्म विदाप्नोति परं" (तैत्ति. २१-१, भस्मजा. २-७) "आनन्दं ब्रह्मणो विद्वान्" (तैत्ति. २-४, शरभः १८) "न भिभेति कुतश्चनेति" (तैत्ति. २-४) "एतद्बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत।" (भग. १५-२०)

[22]एतद्धि जन्मसाफल्यं यद्योगेनात्मदर्शनात्[23] ।
यदा जन्मजरादुःखव्याधीनामेकभेषजम् ॥ 252
केवलं ब्रह्मविज्ञानं जायतेऽसौ सदाशिवः ।

इत्यादिशास्त्रादेवंविधमेव सम्यग्ज्ञानं ब्राह्मणेन सम्पादनीयम् । [24]नान्यद्भेदज्ञानं "उदरमन्तरं कुरुते" (तैत्ति. २-७) "अथ तस्य भयं भवति" (तैत्ति. २-७)

योऽन्यथासन्तमात्मानं अन्यथा प्रतिपद्यते ।
किं तेन न कृतं पापं चोरेणात्मापहारिणा ॥ 253

इत्यादिशास्त्रेण भेदप्रतिपत्तेः नरकहेतुना निन्दितत्वात् **सर्वं साक्षिभास्यं** [25]अहो स्वामिन् ! भित्यादिव्यवहितस्य वस्तुनः पुरुषान्तरबुद्धिव्यापारस्य च मयाऽनवगतत्वात्कुतो मम सर्वसाक्षित्वं कुतस्तरां ब्रह्मत्वं कुतस्तमां तत् ज्ञानादज्ञाननिवृत्तिद्वारा मोक्षः इति चेच्छृणु सौम्य!! [26]सर्वं वस्तु ज्ञाततया वा अज्ञाततया वा साक्षिचैतन्यस्य विषय इति शास्त्रविदां [27]वादात् ज्ञातमज्ञातमिति च द्विप्रकारमेव सर्वं [28]नान्यथा । तत्र यत् ज्ञातं तत् ज्ञातमिति, यदज्ञातं [29]तदज्ञातमिति च सर्वस्यापि प्रपञ्चस्य पुरुषान्तरबुद्धिव्यापारस्य च विष्वग्निष्वावपूरकविशुद्धचैतन्यसामान्यरूपेण पुरुषान्तरबुद्ध्युपाधिकेन च

---

22-23. च. छ. पाठे नास्ति ।
24. क.इ.च.छ/ज.झ.ञ. नान्यदज्ञानं ।
25. ख. अहे ।
26. क. ग. च. छ. झ. सर्वान्वस्तु ।
27. क ग.च.छ.इ.ज.झ.ञ. वादान् ।
28. ज. नान्यथावात्र यद्ज्ञानं ।
29. इ. तदज्ञातः सर्वस्यापि ।

त्वय्यैव दृश्यमानत्वात् तवैव सर्वसाक्षित्वं न ह्येतत् बुद्ध्युपाधिचैतन्येन बुद्ध्यन्तरव्यापारः विशेषतः [30]नावगम्यत इति एतावतैव सर्वसाक्षित्व भङ्गः। तथा चेत् काशीस्थघटोपाधिकादित्यप्रकाशेन काञ्चीस्थघटो न प्रकाश्यत इत्यादित्यप्रकाशस्यापि सर्ववस्तुप्रकाशकत्वं न स्यात्, यदि च तद्वस्तूपाधिकस्यादित्यप्रकाशस्य तत्तद्वस्तुप्रकाशकत्वं, तर्हि पिपीलिकादिब्रह्मान्ततत्तद्बुद्ध्युपाधिकस्यैकस्यैवात्मचैतन्यप्रकाशस्य तव तत्तद्बुद्धितद्व्यापारप्रकाशकत्वात् **सर्वसाक्षित्वं अस्माकमिष्टमेव सम्पन्नमिति** नात्र दुश्शंकावकाशः। यथा च सर्वत्रावस्थितस्यात्मचैतन्यप्रकाशस्य स्वाध्यस्ताविद्याकार्यसर्वबुद्धिसाक्षित्वाच्च सर्वसाक्षित्वं। तथैव स्वसन्निधिसत्तामात्रेण सर्वबुद्धिप्रेरकत्वात् सर्वकर्तृत्वं। सर्वकर्तृत्वादेव च सत्वोत्कर्षतारतम्यपरिप्राप्त [31]सर्वजीवानुभूतसर्वदुःखभोक्तृत्वं सर्वसुखभोक्तृत्वादेव सर्वेषामानन्दानां स्वस्यैव ज्ञानबलेन सिद्धत्वात् सिद्धे वस्तुनि इच्छाविरहात् क्वापि कामानुवृत्तेः अकामहतत्वं ब्रह्मविदो ब्राह्मणस्येत्य[32]भिप्रेत्य तैत्तिरीयशाखायां श्रूयमाणा भगवती श्रुतिः "सैषानन्दस्य मीमाग्ँसा भवति" (तैत्ति. २-८) इति प्रतिज्ञाय "[33]युवा स्यात्साधुयुवाध्यायकः" (तैत्ति. २-८) इत्यादि "स एको मानुष आनन्दः" (तैत्ति. २-८) इत्यन्तं मानुषानन्दं प्रतिपाद्यास्य चानन्दस्य दृष्टत्वात् तुच्छत्वात् च कियानयं आनन्दो ब्रह्मा विदेत्युपेक्ष्य "[34]ते ये शतं मानुषा आनन्दाः, सय एको मनुष्यगन्धर्वाणामानन्दः [35]श्रोत्रियस्य चाकामहतस्य" इत्यारभ्य स एको बृहस्पतेरानन्दः[36], श्रोत्रियस्य चाकामहतस्य" इत्यन्तेन

---

30. क.इ.च.छ.ज.झ.ञ. नावगतश्च।

31. क.इ.च.छ.ज. सर्वबीजानुभूत।

32. क.इ.च.छ.ज. त्यभिप्रेत्य तैस्तैवृत्तेः अकामहतत्वं ब्रह्मविदो ब्राह्मणस्येत्यभिप्रेत्यश्रूयमाणा भगवती श्रुतिः।

33. क.इ.च.छ.ज. सु वा स्यात्।

34. क.ग.च.छ. तेये ये शतम्।

35-36. क.ग.इ.च.छ. पाठेषु नास्ति।

कर्मानुष्ठानतारतम्यपरिप्राप्तसत्वोत्कर्षतारतम्यरूपं आनन्दतारतम्यं "स एक: प्रजापतेरानन्द:, श्रोत्रियस्यचाकामहतस्य" इत्यादिना "स एको ब्रह्मण आनन्द:, श्रोत्रियस्य चाकामहतस्य" इत्यन्ते[37]नोपासनातारतम्यपरिप्राप्तमानन्दतारतम्यं च युगपदेव सर्वाधिष्ठानसर्वपरिपूर्णसाक्षि[38]चैतन्यसामान्यरूपस्य बिम्बानन्दरूपस्य ब्रह्मविदो: ब्राह्मणस्य प्रज्ञानधनस्य प्रतिपादयतीत्येतावत: श्रेयस: परमसाधनं ब्रह्मात्मज्ञानमेव महतापि प्रयत्नेन सम्पादनीयम् ब्राह्मणेनेत्येतन्न विस्मर, किञ्च श्रोत्रादिपञ्चेन्द्रियसमधिगम्यपिण्डाण्डरूपशरीरद्रष्टाऽहमेव । श्रोत्रादि पञ्चेन्द्रियसमधिगम्य ब्रह्माण्डस्यापि द्रष्टास्मि न मत्त:, पृथग्द्रष्टा नामन्यो नास्तीति ज्ञात्वा, पिण्डाण्डब्रह्माण्डरूपदृश्यजातं दृगात्मरूपेण च ज्ञात्वा, दृगानन्दे सत्ये दृश्यविस्तारं असत्यञ्च निश्चित्यासत्येऽध्यस्ते दृश्ये सत्यमधिष्ठानं दृगात्मानं मरुवारुणि मरुभूमिमिवावलोक्य, सत्येऽधिष्ठाने दृगात्मन्यसत्यमध्यस्तं दृश्यं [39]मरुभूमौ मरुवारिवद्विचार्य, सत्यमध्यस्तं दृश्यं सत्याधिष्ठानदृग्रूपं तद्वदेव मत्वा, सत्यात्मन्यसत्यं [40]दृश्यं कालत्रयेऽपि मरुभूमौ मरुवारिवन्नास्तीति निश्चित्य, सर्वदृश्यनिरासे यदेकमवशिष्टं परमकारणमद्वितीयमधिष्ठानचैतन्यानन्द-सन्मात्रस्वरूपं, तदेवाहमस्मीत्येव[41]माकारनिश्चय: एव सम्यग्ज्ञानम् । "कूटस्थ[42]ब्रह्मणो र्भेदो नाममात्रा[43]दृते नहि" । [44]इत्युक्त्वात् पञ्चकोशसाक्षिचैतन्यप्रकाशस्य प्रत्यगात्मेति, पञ्चभूतसाक्षिचैतन्यप्रकाशस्य ब्रह्मेति च संकेतमात्रत्वात्, तांश्च पञ्चकोशांस्तानि च पञ्चभूतानि मिथ्यात्वेनोपेक्ष्य, तदुभयसाक्षिचैतन्यप्रकाशोऽहमस्मीत्येवावलोकनमेव जीवब्रह्मैक्य सम्यग्ज्ञानम्। **किं ब्रह्मसाक्षात्कारो नाम ।** "आत्मा वारे द्रष्टव्य:

---

37. क.इ.च.छ. नोपमानतारतम्य ।

38. झ. ञ. चैतन्यसामान्यसाम्पन्यरूपस्य ।

39-40. क.ग.इ.च.छ.ज. पाठेषु नास्ति ।

41. क.ग.इ.च.छ.ज. माकारक: एव ।
    क.ग.इ.च.छ.ज. माकारकनिर्णय ।

42. क.ग.इ.च.छ.ज. ब्रह्मणाभेदितो ।

43. इ.ज. द्वते नहि ।

44. क.ग.च.छ.इत्युक्तत्वात्प्रत्यगात्मेति ।

श्रोतव्यो मन्तव्यो निदिध्यासितव्यः'' (बृहदाः २-४-५, ४-५-६) [45]इत्यादिश्रुतेः अहं ब्रह्मेति वाक्यार्थबोधो यावद्दृढी[46-47] भवेत् शमादिसहितः तावदभ्यसेत् श्रवणादिकं इति श्रीभगवद्भाष्यकारोपदेशात्

श्रवणादिक्रिया तावत्कर्तव्येह प्रयत्नतः ।
यावद्यथोक्तविज्ञानमाविर्भवति भास्वरम् ॥ 254

इति वार्तिककारवचनाच्च ।

सदा विचारयेद्विद्वान् [48]जगज्जीवपरात्मनः ।
जीवाभाव जगद्भावबाधे स्वात्मैव शिष्यते ॥ 255

इत्या[49]द्यभियुक्तोक्तेश्च दीर्घकालनैरन्तर्यसत्कारसेवितश्रवणमननिदिध्यासनापरिपाकातिशयविशदीकृतचित्तस्य श्रीगुरुकटाक्षवीक्षितस्य ब्राह्मणस्य देहेन्द्रियादिसंघातरूपपिण्डाण्डसाक्षिचैतन्यप्रकाशरूपोऽहमेव । भूतभौतिकसंघातरूपब्रह्माण्डस्यापि साक्षिचैतन्यप्रकाशोऽस्मीति सम्यक् निश्चित्य "अहं ब्रह्मास्मि" (बृहदाः १-४-१०, पैङ्गल ३-१, लि.वि.महानाः ७-१०, शुकरः २-२) [50]इत्याद्यनुभवमहावाक्यादहमेवब्रह्म ब्रह्मैवाहमस्मीति परस्पर तादात्म्यसम्यग्दर्शनेन ब्रह्मणि पारोक्ष्यभ्रान्तिमात्मनि सद्वितीयत्वभ्रान्तिं च परिहृत्य परिपक्वं शुद्धसत्वप्रधानं चित्तं, दृश्यासंस्पृष्टसर्वदृश्यावभासकनिर्भेदसर्व-परिपूर्णप्रत्यगभिन्नब्रह्मानन्दचैतन्यप्रकाशं, विशुद्धचक्षुरिव मध्याह्नार्कप्रकाशं, निस्संशयं सम्यगंगीकृत्य, ब्रह्मात्मचैतन्यप्रकाश [51]प्रतिफलनविशिष्टं "[52]सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयं" (छा. ६-२-१, पैङ्गल. १-१) "आत्मा वा इदमेक एवाग्र आसीत्" (ऐत (आ) १-१) "नान्यत्किञ्चनामिषत्" (एतः

---

45-46. च.छ.इत्यादिविश्वश्रुत्या आचार्यप्रसादेन बोधायनवृद्धिः भवेत् ।

47. क.ख.ग.झ.ञ. भवति ।

48. क.ग.इ.च.छ.ञ. जगज्जीवनमात्मनः ।

49. क.ग.इ.च.छ ञ. द्युक्तोक्तेश्च ।

50. क.ग.इ.च.छ. इत्यनुभवमहावाक्यमेव ब्रह्मा ।

51. क.ग.इ.च.झ. प्रतिफलनशिष्टं ।

52-53. ख.झ.ञ. पाठेषु नास्ति ।

(आ) १-१) "अनादिमत्परंब्रह्म" (भग. १३-१३)

अहमेवासमेवाग्रे नान्यद्यत्सदसत्परम्।
पश्चादहं यदेतच्च योऽवशिष्यति सोऽस्म्यहम्॥ 256

प्राक्सृष्टेः प्रलयादूर्ध्वं नासीत्किञ्चिद्द्विजोत्तम।
ब्रह्मसंज्ञमभूदेकं ज्योतिष्मत्सर्वकारणम्[53]॥ 257

इत्यादिना सर्वजीवप्रारब्धविशेषमहिमपरिप्राप्तेककालप्रसक्तसमस्तदीर्घ-सुषुप्तिसमष्टिरूपजगद्बीजभूतमायामात्रावस्थानरूपमहाप्रलयकाले निर्विशेष सच्चिदानन्दैकरसं कूटस्थनिर्विकाररूपं परम्ब्रह्मैवान्यनिरपेक्षप्रकाशं स्वतोऽवभासमानमेकमेवावस्थितं इति प्रतिपाद्य "तदैक्षत" (छा. ६-२-३) "सोऽकामयत" (तैत्ति. २-६) "बहुस्यां प्रजायेयेति" (तैत्ति. २-६) "स तपो तप्यत" (प्रश्नः १-४, तैत्ति. २-६, ३-१-५, नृ.पू. १-१, ग. पूताः १-३, बृ.जा. १-३) "सतपस्तप्त्वा" "इदगँसर्वमसृजत, यदिदं किञ्च, सत्सृष्ट्वा तदेवानुप्राविशत्, तदनुप्रविश्य सच्चत्यच्चाभवत्" इत्यादिश्रुतिसहस्रेण स्मृतिपुराणोपबृंहितेन पुनः सृष्टिसमये जीवादृष्टानुरोधेन स्रष्टव्यपर्यालोचन रूपमायासत्ववृत्तितमःपूर्वकं मायाशबलस्य दृग्रूपब्राह्मणः एव समस्त दृश्यरूपत्वस्य प्रतिपादितत्वात् प्राक्सृष्टेः अनन्तरं मध्ये च सर्वपरिपूर्णं परमकारणं ब्रह्मैकमेव सत्यम्। तत्र परिकल्पितजीवेश्वरादिब्रह्माण्डान्तनामरूपदृश्यविस्तारः दृश्यत्वात् आकाशपरिकल्पितगन्धर्वनगरविस्तारवत् मिथ्येति निर्विवादमेतन्न विस्मर। अत्रचार्थे कपिलकणभुगक्षचरण, जैमिनिशैवशाक्त रामानुजभागवतबौद्धकापालिकादिमतानुवर्तिनः भेदवादिनस्सर्वेऽपि तत्तत्प्रमाणतर्काभासैः "तत्त्वमस्यादि" वेदान्तशास्त्रार्थम् अन्यथाऽन्यथा पर्यालोच्य मायापरिमोहिताः वृथैव बहुधा प्रलपन्त वाक्याभासमरुप्रदेशसञ्चारश्रन्ताः तुच्छद्वैतकाणवराटिकालाभमात्रपरितुष्टा अद्वैतरत्नाकरोपनिषद्गूगर्भनिर्भेदकृद्भिः अद्वैतरत्नपरीक्षकै

श्रीमच्छंकरभगवद्भाष्यकारादिभिरेव भग्नाः कृताः इति न तत्रास्मकमाग्रहः । त्वं तु चिराभ्यस्ततदन्यतमपक्षपातपरिप्राप्तमपस्मारं परित्यज्य "**नैषा तर्केण मतिरापनेया**"

न तु तार्किकतामेत्य नाशनीया प्रबुद्धता ।
अनुभूत्यपलापान्तैः रपवित्रैः विकल्पितैः ॥ 258
दुस्तर्कात्सुविरम्यतां श्रुतिमतस्तर्कोऽनुसन्धीयताम् ॥

इत्युक्त्वात् शुष्कदुस्तर्केण बुद्धिक्षोभमकृत्वा "मदुपदिष्ट वेदान्तार्थरहस्य पर्यालोचनानुकूलसत्तर्कसंवर्धितप्रज्ञः, सावधानमनाः समाकर्णय सौम्य"!! "सत्प्रचण्डातपमध्यनिक्षिप्तो दीपप्रकाशः आतपेनैवाधिष्ठान प्रत्यगभिन्नब्रह्मचैतन्यप्रकाशेन सहैकीभूतं, [54]सत्सुप्रतिष्ठितं, भवतीति सोऽयं परमकारणे प्रत्यग्रूपे ब्रह्मणि चित्तस्य निरुद्धत्वाकारपरिणामोऽस्ति "स एव ब्रह्मसाक्षात्कारो नाम" । किञ्च "प्रचण्डार्कातपमध्यनिक्षिप्तः स्पाटिको मणिः तत्र प्रतीयमानः जपाकुसुमरागादिश्च यथा हि एकैनैवातपेन प्रकाश्यते, तद्वत्परमकारणाधिष्ठानबिम्बभूतब्रह्मचैतन्यप्रकाशरूपेण मयैवातपस्थानीयेन मय्यध्यस्तमविद्याकार्यान्तःकरणं मणिस्थानीयं तत्र स्वप्नपरिदृष्टपदार्थजातं स्वप्नान्तर इव पूर्वपूर्ववासनावशात् प्रतीयमानं व्यष्टिसमष्ट्यात्मकं विश्वञ्च, जपाकुसुमादिस्थानीयं प्रकाश्यते । नान्येति निश्चयः सम्यगीक्षणं । [55]विचारणायामविचारणायां वा अहमेव परमकारणं [56]परम्ब्रह्म। विचारणायां अविचारणायां वा ईश्वरादि [57]ब्रह्मान्तनामरूपदृश्यविस्तारो "नेह नानास्ति किञ्चन" (कठ. ४-११, बृहदा ४-४-१९, त्रि. वि. महाना: ३-३, अध्यात्मः ६३, निराः ११) इत्यादि श्रुत्या स्वप्नदृष्टान्तेन स्वानुभवावष्टम्भेन च मिथ्येति निश्चित्याद्वितीया[58]त्मतत्त्वानुसन्धाने कदाऽपि अप्रमत्तः सन् कूटस्थनिर्विकार

---

54. क.ग.इ.च.छ.ज. सत्यप्रतिष्ठितम् ।
55-56. क.ग.इ.च.छ.ज. पाठे नास्ति ।
57. क.इ.च.छ.ज. ब्रह्माण्डान्त ।
58. क.इ.च.छ.ज. आत्मवत्वानुसन्धाते ।

परिपूर्णाखण्डब्रह्मचैतन्यप्रकाशरूपे मयि अवस्थात्रयसहितं व्यष्टिसमष्ट्यात्मकं विश्वमिदं बाधितमपि यावद्विदेहकैवल्यं प्रारब्धवशादप्रार्थितमेवेत्थं प्रतिभासते। [59]मरुवारिवदिति उपेक्षाबुद्धियुक्तः प्रागुदीरितज्ञाननिष्ठाप्रभावप्रध्वंसिताशेष लौकिकवैदिककर्मकलापस्सन् यथा सोपकरणगृहदाहकाग्निज्वालया कुसूलस्थरम्यारम्यधान्यराशीनां दग्धत्वात् आगामिसस्यनिचयानामनावृष्ट्या फलसम्पादनसामर्थ्याभावात् भावे वा राजचोरादिभिः उपहृतत्वाच्च घटस्थसिद्धान्तमात्रं [60]भुञ्जन् तत्रोभयत्र निराशः एव पुमान् भवति । एवमेवायं ब्रह्मविद्वान् सकार्यज्ञानविध्वंसकाप्रतिबद्धापरो साक्षात्काराग्निना सिञ्चितशुभाशुभकर्मणां दग्धत्वादागामिशुभाशुभकर्मणां चाध्यास[61]पूर्वकाभावेन फलसम्पादनसामर्थ्याभावाद्भावे वा तस्य पुत्रादायमुपयान्ति, सहृदः साधुकृत्यां, द्विषन्तः पापकृत्यां" इत्यादि श्रुतेः [62]परिचर्यासमासक्तैः भक्तजनैरसदेव कर्तृत्वं सम्पाद्य दूषयद्भिः पापजनैश्चापहृतत्वात्प्रारब्धं उपभञ्जन्

> यथा मृतस्तथा जीवन् यथा सति तथासति ।
> यस्यैवं बुद्धिलाभं स्यात्सनरः केन तप्यते ॥ 259

इत्युक्तत्वात् । **पुरुषाधमस्यैवेतादृशपुरुषार्थचिन्तना** । ज्ञानामृतशीतलहृदावगाहनपरिहृतहृत्तापः, स्वस्वरूपनिष्ठागरिष्ठः, विजितेन्द्रियग्रामः, शीतोष्णसुखदुःखमानावमानादिद्वन्द्वसंहनशीलः, स्वभावविषयप्रवणोदरोपस्थवेगतिरस्करणमहाधीरः, प्रज्वलत्क्रोधवेगविजयमहाशूरः [63]नैरपेक्ष्यादिसुगुणरत्नकरण्डभूतः । "एष नित्यो

---

59. क.ग.च.छ. मरुहारिवदिति ।

60. इ.ज.भुञ्जन् कुसूलस्थ रम्यारम्य तत्रोभयत्र ।

61. क.ग.इ.ज. पूर्वकत्वभावेन ।

62. क.इ.च.छ.ज. परिचर्यासमासकैः ।

63. झ.इ.ज. नैरपेक्ष्यादिसुखगुणरत्न । ग.च.छ. नैरपेक्ष्यादिगुणरत्न ।

महिमा ब्राह्मणस्य'' (बृहदा: ४-४-२३, इतिहासः २०) इत्यादिश्रुतेः ।

यस्त्वात्मरतिरेवस्यादात्मतृप्तश्च मानवः ।
आत्मन्येव च सन्तुष्टः तस्य कार्यं न विद्यते ।। (भग. ३-१७) 260

इत्यादिस्मृतेः ।

नामादिभ्यो भूम्नि स्वराज्ये चेत्स्थितोऽद्वये ।
प्रणमेत् कं [64]तदात्मज्ञो न कार्यं न कर्मणा तदा ।। 261

इति श्रीमद्भाष्यकारोपदेशात् ।

न कर्मणा [65]कनीयस्तानवृद्धिर्वान्तरात्मनः ।
इति बाहुमिवोद्धृत्य वेदान्तैः घोषणा कृता ।। 262

इति वार्तिककारवचनात्

शोचमाचमनं स्नानं न तु चोदनया (मा) चरेत् ।
अन्यांश्च नियमान् ज्ञानी [66]यथाहं लीलयेश्वरः ।। 263

इत्यादिपुराणवचनाच्च विधिप्रतिषेधगन्धविदूरः ।

यावनर्थ [67]उपादाने सर्वतः [68]संप्लुतोदके ।
तावत्सर्वेषु वेदेषु ब्रह्मणस्य विजानतः ।। 264

इति स्मृतेः ।

स एवेति निश्चित्य जपसन्ध्यादिकं तपः ।
[69]अखण्डैकात्मभावो [70]यो [71]विचरेदिहलीलया ।। 265

इत्युक्तत्वाच्च । ब्रह्मात्मज्ञानमहातपस्संवर्धिततेजोऽतिशयेन प्रज्वलन्

---

64. क.ख.ग. तदात्मज्ञानकार्यं कर्मणा तदेति । इ.ज. तदात्मज्ञो न कार्यं कर्मणा तदेति ।

65. क.ग.च.छ. कनीयस्तानवान्तरात्मनः ।

66. क.ग. यथाह . . . . . येश्वरः ।

67. क.ग. उदपातेन । इ.ज. उदपाने । च.झ. उदापाने ।

68. क.ग.स.च.छ.ज. संवृतोदके ।

69. क.ग.छ. . . . . खण्डैकतात्म ।

70. क.ग.छ.झ. मे ।

71. क.ग.इ.च.छ.ज. विचारयेदिह ।

नित्योदासीन:, निर्नमस्कार:, निस्तुति:, निष्क्रिय:, सनेत्रशिलाप्रतिमादिवदवभासमानस्वरूपमात्र: ब्राह्मण: एव ब्रह्म भावरूपपरममोक्षार्हो भवति । नान्य: ।

ईश्वरानुग्रहादेव पुंसामद्वैत[72]वासना ।
[73]पापोपहतबुद्धीनां तद्वार्तापि न रोचते ।। 266

गौतमस्य मुनेश्शापात् दधीचस्य च शापत: ।
जन्मान्तर कृतात्पापादयमर्थो न रोचते ।। 267

इत्युक्तरीत्या [74]ब्रह्मशापदग्धस्य पापादावाग्निदग्धहृदयस्य

एतावत्यपि ये भीता: पापभोगरसेस्थिता:
[75]स्वमातृविष्टाक्रिमय: कीर्तनीया न ते [76]धमा: ।। 268

इत्युक्तरीत्यास्वमातृविष्टाक्रिमिरूपस्य दुर्भगस्य निर्भाग्यस्योदरोपस्थभोगानुकूल वैदिकलौकिक कर्मानुष्ठानविक्षिप्तसर्वकरणस्य अशासहस्रसञ्चारिमन: पिशाचतिरस्कृतस्य पुरुषाधमस्येतादृशपरमपुरुषार्थसाधनज्ञानाभ्यास-रुच्यनुत्पत्तावपि श्रुत्याचार्येश्वरप्रसादसंपन्नस्योक्तविलक्षणस्य, ब्राह्मणस्य, गुरुशिक्षितस्य, [77]भवादृशस्य, भवत्येवात्रादर: इति तदर्थमेव भूयो भूय: [78]तथ्यं निवेदयितव्यमिति न्यायात् ज्ञानस्वरूपं सम्यगत्र विचारितम् अस्माभि: सौम्य!! एतन्न विस्मर सावधानमन: सौम्योसि । **समाधिरेव ज्ञानमिति मतं विकल्प्यखण्डनम्** अत्र केचित् भ्रान्ता: प्रलपन्ति ''समाधिरेव ज्ञानं, तत्सिद्ध्यैव मोक्षसिद्धि:, न तु केवलतत्त्वसाक्षात्कारमात्रादिति'' तत्रेवं विवेचनीयम् । कोऽयं समाधिर्नाम? तूष्णीमवस्थितिर्वा, केवलाद्वैतविस्मृतिर्वा, तत्त्वस्मृतिसहिता सा वा, उततत्त्वसाक्षात्कार एव वा । नाद्य:, मूर्खाणामपि

---

72. ख.ञ. भावना ।
73. च. पाचापहत ।
74. ख.च. ब्रह्मशापबद्धस्य ।
75-76. क.ग.छ.ज. पाठे नास्ति ।
77. क.ग.च.छ.ज. भवाब्धिदृशस्यैवादर: ।
78. क.ग.इ.च.छ.ज. पथ्यम् ।

मोक्षापत्तेः, तेषामपि क्वचित्तूष्णीमवस्थानसम्भवात् । नद्वितीयः, कीटादिविरिच्यान्तानां सर्वेषामपि प्राणिनां पुरुषप्रयत्नमन्तरेणापि मोक्षसिद्धेः मोक्षशास्त्रानर्थक्यापत्तेः सर्वेषामपि प्रत्यहं सुषुप्तौ द्वैतविस्मृतिसम्भवाच्च । न तृतीयः महिषाश्वादीनामप्यर्थसमाधिलाभात् ईषन्न्यूनकृतार्थतापत्तेः तेषां तत्त्वस्मृत्यभावेऽपि द्वैतविस्मृतेः सर्वसम्मतत्वात् । योगाभ्यासवतां पुरुषाणां प्रर॰धाधीनदैहिकव्यापाराणां यथाकथञ्चित् विक्षेपप्रसक्तेः सर्वात्मना द्वैतविस्मृतेः जीवद्दशायां सम्पादयितुमशक्यत्वात् अर्थसमाधिमत्वस्यापि अभावप्रसंगाच्च, न च तेषां तत्त्वस्मृतिसम्भवात् अर्थसमाधित्वमविकलमितिवाच्यम्, पूर्णसमाधेः कल्पकोटिशतैरपि असम्पाद्यत्वेन मोक्षसिद्धेः, तस्मान्न श्रोतव्यं एतन्मूर्खप्रलपितं मुमुक्षुभिः "तत्त्वावबोधो भगवन्तः तत्सर्वाऽशातृणपावकः । [79]प्रोक्तः समाधिशब्देन न तु तूष्णीमवस्थितिः" इत्युक्त्वात् चरमः पक्षः परिशिष्यते, सचाद्वैतदर्शनसम्मतः एवेत्यस्मदुपपादितमेव ज्ञानस्वरूपमनवद्यं सम्पन्नं अलमतिकथयेत्युपरम्यते । इति

**श्री कम्भम्पाटि अमरेश्वरशास्त्रिकृताज्ञानध्वान्तचण्डभास्करे सप्तमं प्रकरणम् ।**



79. इ.ज. समाधिशक्तेवन ।

## अथ वासनाक्षयविचारे अष्टमं प्रकरणम्।

अथ वासनाक्षयं विचारयामः बहुकालमारभ्य श्रवणमनननिदिध्यासनानुष्ठानं कुर्वन्तोऽपि अधिकारिणः ब्राह्मणाः ब्रह्मसाक्षात्कारा भावेन संसारबद्धाः एव दृष्टाः इति श्रवणादीनां ज्ञानसाधनत्वमन्वयव्यभिचारात्कथमभ्युपगन्तव्यमित्युक्ते तेषामधिकारिणां वासनाक्षयरूपसहकार्यभावेन शीघ्रं [1]ज्ञानं नोत्पद्यत इति तदेवमीश्वरप्रसादपरिलब्धेश्वररूपश्रीगुरुवरश्री।चरणपरिचरणनिपुणम् अधीतसर्ववेदान्तविद्यं नित्यानित्यवस्तुविवेकसम्पन्नं

आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन
मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥ (भग. ८-१६) 269

यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः। (भग. १६-१५)

अनेकचित्तविभ्रान्ताः मोहजालसमावृताः।
प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ ॥ (भग. १६-१६) 270

आत्मसंभाविताःस्तब्धा धनमानमदान्विताः।
यजन्ते नाम यज्ञैस्ते दम्भेनाऽविधिपूर्वकम् ॥ 271

एवं लोकं परं पश्येन्नश्वरं कर्मनिर्मितं।
स तुल्यातिशयध्वंसं यथा मण्डलवर्तिनाम् ॥ 272

---

1. क.ग.इ.च.छ.ज. ज्ञानोत्पद्यत।

श्रुतं दृष्टमदृष्टं च स्पर्धासूयात्ययाप्ययैः ।
बह्वन्तरायाक्रान्तत्वात्कृषिवच्चापि निष्फलम् ।। 273

कर्मणां परिणामित्वादविरिञ्चादमङ्गलम् ।
विपश्चिन्नश्वरं पश्येददृष्टमपि दृष्टवत् ।। 274

कालयज्ञतपस्तीर्थदेवार्चनजपभ्रमैः ।
चिरमाधिशतोपेताः क्षपयन्ति मृगा इव ।। 275

इत्यादि सर्वेषामपिकर्मणां श्रुतिस्मृतिविहितानां सतुल्यातिशयनित्यफलत्वेन शालितण्डुललाभे प्राचीनकोद्रवतुषावघातवदगतिरिति, तदाश्रयेण वा "को हि तद्वेद यद्यमुष्मिन् लोकेऽस्ति वा न वेति" इति तस्मिन्नेव कर्मकाण्डे

दुर्गन्धक्रिमिसंयुक्तं चण्डालगृहपातितम् ।
काकमांसं शुनोच्छिष्टं स्वल्पं तदपिदुर्लभम् ।। 276

इतिवत् संदिग्धफलत्वेन च श्रूयमाणत्वात्सर्वस्मादनित्यसंदिग्धफलात् कर्मकलापात् निर्विद्याशुचौ दुर्गन्धबीभत्से किं कामोपभोगैरिति सम्प्राप्तामुष्मिक भोगवैराग्यं ।

स्वदेहाशुचिगन्धेन न विरज्यति यः पुमान् ।
विरागकारणं तस्य किमन्यदुपदिश्यते ।। 277

मांसासृक्पूयविण्मूत्रस्नायुमज्जास्थिसंहतौ ।
देहे चेत्प्रीतिमान् मूढो भविता नरकेऽपि सः ।। 278

रोगक्रिमिसमाकीर्णे नवरन्ध्रस्रवन्मले ।
शरीराख्यव्रणे प्रीतिः येषां तेभ्यो नमो नमः ।। 279

अर्थानामार्जने दुःखमार्जितानां च रक्षणे ।
रक्षितानां व्यये दुःखं धिगर्थाः दुःखकारिणः ।। 280

यावतः कुरुते जन्तुः सम्बन्धान् मनसः प्रियान् ।
तावन्तोऽस्य निखन्यन्ते हृदये शोकशंकवः ॥ 281

त्यजतः सञ्चयान्पुसो यान्ति नाशमुपद्रवः ।
न हि सञ्चयवान् कश्चिद्विद्यते निरुपद्रवः ॥ 282

स्त्रीणामवाच्यदेशस्य क्लिन्ननाडीव्रणस्य च ।
अभेदोऽपि मनो भेदाज्जनः प्रायेण वञ्च्यते ॥ 283

चर्मखण्डं द्विधाभिन्नमपानोद्गारधूषितम् ।
वस्त्रेणाच्छादितं नोचेन्मक्षिकाणां महोत्सवः ॥ 284

मलमूत्रपरिक्लिन्ने स्त्रीबिले कामलम्पटाः ।
रमन्ति ये नमस्तेभ्यस्साहसं किमतः परम् ॥ 285

प्रादुर्भवन्ति वपुषः कति वा न कीटा,
यान्यत्नतः खलु तनोरपसारयन्ति ।
मोहः क एष जगतो यदपत्यसंज्ञाः
तेषां विधाय परितोषयति स्वचित्तम् ॥ 286

इत्यादिनादेहतदुपयोगसाधनोक्तिकलत्रपुत्रादेः अतिहेयत्वेनातिदुःखरूपत्वेन प्रतिपादितत्वात् तदुपभोगार्थप्रयत्नात् सर्वस्माद्धस्मान्तव्यापारात् निर्विद्य सम्परित्यक्तैहिकभोगाभिलाषं

नाविरतो दुश्चरितान्नाशान्तो नासमाहितः ।
नाशान्तमानसो वापि प्रज्ञानेनैवमाप्नुयात् ॥
(कठः २-२४, ना.परिः ९-१९, महोः ४-६९) 287

लोकवासनया जन्तोः शास्त्रवासनया (नरः) तथा ।
देहवासनया ज्ञानं यथावन्नैव जायते ॥ (मुक्तिकोः २-२) 288

बन्धो हि वासनाबन्धः मोक्षः स्याद्वासनाक्षयः ।
वासनास्त्वं परित्यज्य मोक्षार्थित्वं [2]परित्यजेत् ॥ 289

[3]तत्र तत्र मोक्षशास्त्रे प्रतिपादितत्वात् श्रवणादीनां सहकारित्वेनांगीकृतः वासनाक्षयः सम्पादनीयः **भोगविषयकामाग्निज्वालनिरूपणम्** कियतापि कालेनात्मविचारितेऽपि केषाञ्चित् चित्तेषु प्रबलप्रारब्धवशेन कामक्रोधलोभनिन्दावमानगर्वलोकवासनाशास्त्रवासनादेहवासनादिरूपाः, ऐहिकवासनाः कर्तृत्वाभिनिवेशपूर्विकाः परलोकवासनाश्च रूढमूलाः निवसन्ति चेत् केनचिदपि प्रयासेनापि प्रज्ञा [4]स्वात्मस्वरूपे न सम्यगवतिष्ठते । जन्मान्तरे त्ववतिष्टते "अन्तः शरीरे ज्योतिर्मयो हि शुभ्रोऽयं प्रपश्यन्ति यतयः क्षीणकल्मषाः" इत्यादि श्रुतेः ।

शरीरेऽन्तः स्वयंज्योतिः स्वरूपं स्वकमीश्वरम् ।
क्षीणदोषाः प्रपश्यन्ति नेतरे [5]मायया वृताः ॥ 290

इत्याद्युक्तत्वाच्च प्रज्ञामान्द्यकुतर्कविपर्ययपुराग्रहादिदोषरहिताः समानाधिकरणसूक्ष्मार्थग्रहणनिपुण कुशलतीव्रप्रज्ञामहाधनाः पुरुषश्रेष्ठाः प्रागुदीरितकामादिचित्तदोषणां प्रतीकारं, तत्तद्दुर्वासनाप्रतिपक्षभूत तत्तत्सद्वासनाप्रतिपादकशास्त्रेषु युक्तिबलेन च धैर्यब्रह्मचर्यसहिष्टुत्वादिस्वनैपुण्येन सत्पुरुषसमागमेन च यथोचितं सम्पाद्याभिभवं कुर्वन्ति चेत् दीर्घकालनैरन्तर्यसत्कारसेवितानि श्रवणादीनि अविद्यानिवर्तनक्षमं प्रत्यगभिन्नब्रह्मसाक्षात्कारं इदानीमेव सम्पादयन्ति । न जन्मादिविलम्बेन इत्यतस्तेषां दोषणामित्थं प्रतीकारो विचारणीयः । विष्वग्निश्वावपूर्वक-

---

2. च. छ. परित्यज ।

3. इ.च.छ.ज. तत्रमोक्षशास्त्रे । क.ग.इ.छ.ज. तत्र शास्त्रेषु प्रति ।

4. क.ग. इ.छ.ज. स्वरूपेण सम्यगवतिष्ठते । 5. क.ग.इ.च.छ.ज. मायावृताः ।

विशुद्धसर्वपरिपूर्णबिम्बानन्दब्रह्मचैतन्यप्रकाशरूपे मयि "अहमन्नमहमन्नमहमन्नं, अहमन्नादोऽहमन्नादः" (तैत्ति. ३-१०-६) "नेह नानास्ति किञ्चन" (कठ. ४-११, बृहदा: ४-४-१९, त्रि.वि.महाना: ३-३, अध्यात्म: ६३, निरा: ११) इत्यादिश्रुत्या भोक्तृभोग्यभोगरूपेऽस्मिन् दृश्यप्रपञ्चे दृगानन्दात्मव्यतिरेकेण मरुभूमौ [6]मरीचिकाजालमिवाकाशे गन्धर्वनगरवत्स्वप्नसाक्षिणि स्वप्नप्रपञ्चवच्चाधिष्ठानव्यतिरेकेण निपुणतरैरप्यनिरूप्यत्वेन मिथ्याभूते सति [7]भोगविषयककामाग्निज्वालया हे [8]चित्त!! वृथा किमिति सन्तप्यसे ? मानुषानन्दादितत्तदानन्दावधिक[9]प्रत्येकशतगुणोत्तराधिकतमहिरण्यगर्भानन्दां तैत्तिरीयश्रुतीरित[10]प्रतिबिम्बानन्दबिम्बभूतपरकारणाद्वितीयपरमानन्दात्मनं सम्यग्दृष्ट्या सुखिनो भूत्वा लौकिक[11] वैदिकोदरोपस्थ क्षुद्रविषयसुखाभासातिलम्पटान् श्वसूकरादिसमानान् कामुकमूढजनपिशचवराकानुवहसद्वीतलौकिकवैदिकसर्वसंसारदुःखं सत्स्वात्मन्येव यथा सुखमास्वेति चित्तं बलवदुपलालनपूर्वकमाश्वास्य सत्यात्ममिथ्यादृश्यवस्तुविवेकदृष्ट्या शास्त्रप्रसिद्धैहिकामुष्मिकविषयदोषदृष्ट्या च संकल्पमूलं सर्वानर्थहेतुभूतं कामं [12]निहत्याकामहत एव ब्राह्मणो मोक्षार्हो भवति। भवन्तिचात्र श्लोकाः

> [13]काम एष क्रोध एष रजोगुणसमुद्भवः ।
> महाशनो महापाप्मा विद्ध्येनमिह [14]वैरिणम् ॥ (भग. ३-३७) 291
>
> त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।
> कामः क्रोधस्तथा लोभः तस्मादेतत्त्रयं त्यजेत् ॥ (भग. १६-२१) 292

---

6. इ.ज. मरीचिकाजलवदाकाशे ।
7. क.ग.इ. भोगविषयाग्निज्वालया ।
8. क.ग.च चित्र ।
9. क.ग.इ.च. प्रत्येक प्रत्येकशतगुणोत्तर ।
10. छ. प्रतिबिम्बबिम्बभूत ।
11. छ. ज. वैदिकसं रदु.
12. क.ग.इ. निहत्वाकामहुत एव ।
13-14. इ.ज. नास्ति ।

शक्नोतीहैव यस्सोढुं प्राक्च्छरीरविमो (च) क्षणात् ।
काम क्रोधोद्भवं वेगं स युक्तः स सुखी नरः ॥ 293

[15]ब्राह्मणस्य च देहोऽयं क्षुद्रकामाय नेष्यते ।
कृच्छ्राय तपसे चेह प्रेत्यानन्तसुखाय [16]च ॥ 294

यः कामान् प्राप्नुयात्सर्वान् यश्च कामान् परित्यजेत् ।
प्रापणात्सर्वकामानां परित्यागो विशिष्यते ॥ 295

न ह्यन्तं सर्वकामानां [17]गतपूर्वोस्मि कश्चन ।
शरीरे जीविते चैव तृष्णा मर्त्यस्य जायते ॥ 296

न पूर्वो [18]नापरो जातु कामानामन्तमाप्नुयात् ।
त्यक्त्वा सर्वसमारम्भान् प्रतिबुद्धोऽस्मि जागृमि ॥ 297

नूनं मे हृदयं कामवज्रसारमयं दृढम् ।
[19]यदनर्थशताविष्टं शतथा [20]न विशीर्यते ॥ 298

काम! जानामि ते मूलं संकल्पात्किल [21]जायसे ।
न त्वां संकल्पयिष्यामि ततो मे न भविष्यसि ॥ 299

नैव त्वं वेत्थ सुलभं नैव त्वं वेत्थ दुर्लभम् ।
नित्योद्वेगेन दुष्पूरो मां दुःखै भोक्तुमिच्छसि ॥ 300

त्यजामि काम त्वां चैव यच्च किञ्चित्प्रियं [22]तव ।
न तवाहं न वा त्वं मे ज्यजमां त्वं पिशाचवत् ॥ 301

---

15-16. इ.ज. नास्ति ।
17. इ.ज. गतपूरोऽस्मि ।
18. क.ग.न परो जातु । इ.ज.वापि को जातु ।
19. क.ग.इ.च.छ. यदनिष्ट ।
20. क.ग.इ.च.छ. ज.स विशीर्यते ।
21. क.ग.इ.च.छ. जायते ।
22. इ.ख.ज. वद ।

कामनभिलषन् मोहान्नरो न सुखमेधते ।
श्येनालयतरुच्छायां व्रजन्निव कपिञ्जलः ॥ 302

यन्निमित्तं भवेच्छोकः तपो वा दुःखमेव वा ।
आयासो वा यतो मूलं तदेकांगमपि त्यजेत् ॥ 303

याः तामिस्रान्धतामिस्रा [23]रौरवाद्याश्च यातनाः ।
भुङ्क्ते नरो वा नारी वा मिथस्संगेन निर्मिताः ॥ 304

जगन्मिथ्यात्वधी भावादाक्षिप्तौ काम्यकामुकौ ।
तयोरभावे सन्तापः शाम्ये निस्नेहदीपवत् ॥ 305

इत्यायाः । **आत्मानमेवान्ये बहु पीडयन्ति** । स्थूलशरीरे वातपित्तश्लेष्मजन्याः व्याधयः सूक्ष्मशरीरे कामादिवासनाः प्राप्ताः, शान्त्यादिवासनाः अप्राप्ताश्च, कारणशरीरे तु आगामि स्वप्नजाग्रत्संसारदुःखबीजरूपाः वासनाः च, बहिः शतृव्याघ्रवृश्चिकाद्याः कोटिशः दुःखहेतवो निवसन्ति इत्यतः तेषु सर्वेष्वसंख्याकेषु एतच्छरीरत्रयं पीडयत्सुसत्सु हे चित्त!! प्रत्युत तत्सर्वहिंसाबुद्धिरूपक्रोधदावाग्निना दंदह्यमानं त्वमेव विनश्यमानं सत् कं वा दुःखहेतुं हन्तुं शक्नोषि, उक्तेषु एकं वा कथं तव वशे तिष्ठेत् नैकस्यापि [24]हनने तव सामर्थ्यं स्यात् अतः परद्रोहात् निवृत्तिं सत्

प्राणाः यथात्मनोऽभीष्टाः भूतानामपि ते तथा ।
आत्मौपम्येन भूतानां दयां कुर्वीत मानवाः ॥ 306

इत्युक्तरीत्या सर्वेष्वपि भूतेषु स्वशरीर इव कृपाबहुलं भवे (दि) ति चित्तमुपलालयन् [25]अनेकस्पटिकस्तम्भप्रतिफलितः शुनकः स्वप्रतिबिम्बैः सह

---

23. ज. कारवाद्याश्च ।     24. क.ग.च.छ. वासने ।

25. ज. अनेकप्रतिफलितः ।

कलहं कर्तुमुद्यक्तश्चेत् [26]लोकः तं यदोपहसेदेवमेवाहं परमकारणाद्वितीयबिम्बभूतब्रह्मचैतन्यप्रकाशरूपस्सन् स्वाध्यस्ताज्ञान कार्यान्तःकरणोपाधिष्वेक एव प्रतिबिम्बितोऽहमिति त्वमित्ययमिति स इति च जलधरेष्वंशुमानिव चालिन्यामातप इव नानारूप (पेष्व) इवावभासमानः स्वप्रतिबिम्बभूतैः जीवैस्सह कलहं कुर्यां चेत्तत्वज्ञो [27]मामुपहसेदिति विलज्जितः शत्रुमित्रस्वदेहादिष्वेकमेव कूटस्थनिर्विकारमसंगनित्योदासीनं कार्यकारणासंस्पृष्टं परमकारणं प्रत्याग्भूतमानन्दघनं ब्रह्मचैतन्यं सम्पश्यन् प्रशान्तचित्तः [28]चित्तमात्मनि स्थिरीकृत्य स्वविषयकाधिक्षेपताडनतर्जनभर्जन, विकर्तन, मूत्रविष्ठानिष्ठीवनविसर्जनादिभिः विकारैः आत्मानमन्ये पीडयन्ति चेत् [29]प्रारब्धक्षय एव मामभवत्। "शरीराद्व्यतिरिक्तं यत्पश्यतः प्रविवेकिनः विकर्तितांगकरस्यापि न किञ्चिदपि कर्तित"मित्युपहसन् किं नच्छिन्नमिति निर्विकारस्सन् [30]प्रसादरूपक्षमासारः एव पुरुषवर्यो ब्राह्मणः परमशिवः अत्रापि महन्तो वर्णयन्ति।

द्विषन्तः परकायेषु स्वात्मानं [31]हरमीश्वरम्।
मृतके [32]सानुबन्धेऽस्मिन् बद्धस्नेहाः पतन्त्यधः॥ 307

क्रुद्ध्यन्तं न प्रतिक्रुद्ध्येदाकृष्टं कुशलं वदेत्।
अतिवादांस्तितिक्षेत नावमन्येत कञ्चन॥ 308

एकः प्रपद्यते ध्यानं हित्वैव स्वकलेबरम्।
[33]कुशलेतरपाथेयो भूतद्रोहेण[34]यद्भृतम्॥ 309

---

26. क.ग.च.छ.झ. लोकस्थं ह्यथाहचुपहसेदेव। इ.ज. लोकस्थं ह्यथा ह्युपहसन्नेव।
27. क.ग.च.छ. मामुपहसेति।
28. क.ग.च.छ. चेत्तमात्मनि।
29. क.ग.च.छ. प्रारब्धक्षयः मामभूत्।
30. ख.झ. प्रासादरूप पक्षमासान्त एव।
31. क.ग.ख. हरिमीश्वरम्।
32. क.ग.ख. स्वानुबन्धेऽस्मिन्।
33. ज. कुशले तप पाथेयो।
34. क.ग.इ.च.छ. यद्भृशम्।

तापत्रयेणाभिहतं (हितं) यदेतदखिलं जगत् ।
तदा शोच्येषु भूतेषु द्वेषं प्राज्ञः करोति कः ॥ 310

बद्धवैराणि भूतानि द्वेषं कुर्वन्ति चेत्ततः ।
शोच्यान्यतीव मोहेन व्याप्तानीति मनीषिण ॥ 311

रिपौ मित्रे स्वदेहे च समैकात्म्यं प्रपश्यत ।
विवेकिनः कुतः कोपः स्वदेहावयवेष्विव ॥ 312

स्वान्तःकरणदोषेण कल्पितेऽस्मिन् जगद्भ्रमे ।
कः प्राज्ञः कलहं कुर्यात् स्फटिके मण्डपे श्ववत् ॥ 313

त्वय्यस्ति भगवान्विष्णुः [35]मयि चान्यत्र चास्ति सः ।
यतः ततोऽयं मित्रं मे शत्रुश्चेति पृथक्कुतः ॥ 314

सर्वभूतात्मके तात जगन्नाथे जगन्मये ।
परमात्मनि गोविन्दे मित्रामित्रकथा वृथा ॥ 315

अयं बन्धुरयं नेति गणना लघुचेतसां ।
उदारचरितानां तु वसुधैव कुटुम्बकम् ॥ 316

क्रुद्धेस्मेर मुखावधीरणमदाविष्टे प्रसादक्रमो,
व्याक्रोशे कुशलोक्तिरात्मदुरितच्छेदोत्सवस्ताडने ।
धिग्जन्तो रजतात्मनोऽस्य महती दैवादुपेता विपत्,
दुर्वा रेति दयारसार्द्रमनसां क्रोधस्य कुत्रोदयः ॥ 317

इत्यादिलोभपुरस्सरं यावद्यावद्वस्तु संगृह्यते तावत्तावद्दुःखमेव प्रभूतं पुरुषस्य जायते न सुखमिति विचार्य

अकृत्वापरसन्तापं अगत्वाखलमन्दिरं ।
अक्लेशयित्वा चात्मानं यदल्पमपि तद्बहु ॥ 318

---

35. क.ख.ग. मम ।

इति मत्वा यदृच्छालाभेन, क्षुत्पिपासोपशमशीतनिवारण गोप्यङ्गगोपनपूर्वकं देहनिर्वाहकं कुर्वन् "आत्मलाभान्न परं विद्यते" "यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः" इत्युक्तत्वात् आत्मनोऽन्यस्य लब्धव्यस्थाभावादात्मानन्दलाभप्रयुक्तसन्तोषेण लोभवासनां परिहरन्नेव पुरुषः परमसुखी। अस्मिन्नेवार्थे स्मरन्ति सन्तः।

असन्तुष्टः को न शक्नोति फलैर्मूलैश्च वर्तितुम्।
सर्वस्वेन्द्रियलौल्येन संकटान्यवगाहते॥ 319

सर्वत्र सम्पदस्तस्य संतुष्टं यस्य मानसम्।
[36]उपानादूढपादस्य ननु [37]चर्मावृतैव भूः॥ 320

सन्तोषामृतचित्तानां यत्सुखं शान्तचेतसाम्।
[38]पातालकल्पलोभानां कुतस्तद्धनकाङ्क्षिणाम्॥ 321

असन्तोषः परं दुःखं सन्तोषः परमं सुखम्।
सुखार्थी पुरुषस्तस्मात् सन्तुष्टः सततं भवेत्॥ 322

इति सर्वेष्वपि भूतेषु एकात्मभावनया प्रपञ्चमिथ्यात्वभावनया च स्वकर्मवशसम्प्राप्तस्वकर्मकान्यकर्तृकनिन्दावमानप्रयुक्तं दुःखं निहन्यात् **आत्मनिन्दावमानदूषणं महद्दुःखकारणम्** आत्मानं निन्दन्त्यवजानन्ति वा, शरीरं वा। आद्ये निन्दावमानकर्तृशरीरेषु स्वशरीरे चैकैव बिम्बभूतपरिपूर्णात्मचैतन्यप्रकाशोऽवसितः इति निन्दावमानकर्तृणामेव, दुःखाभावे स्वयं किमर्थं ततः खिद्येत्। द्वितीये तु कारणशरीरस्याव्यक्तत्वात् निन्दादिविषयत्वशंकैव नास्ति। सूक्ष्मशरीरस्य परेषामप्रत्यक्षत्वात्

---

36. क.ग. उपास्य गूढपादस्य। च.छ.झ. बुपानाद्युथपानस्य।

37. क.ग.इ.च.छ. चर्मादृतेव भूः। 38. क.ख.ग.इ. पताककल्प।

निन्दाविषियत्वं [39]वक्तुं न युक्तं। सर्वप्रकारेणापि स्थूलशरीरस्य निन्दावमानादयः वक्तव्याः। तच्च शरीरमनेकदोषदुष्टं, सर्वदुःखकरण्डं, प्रतिक्षणविलक्षणं, स्वमातृविष्ठारूपमावश्यकविगर्हणीयं, आपातरमणीयं, अत्यादरविचार-परिहरिणीयं, अनेकबिलविनिस्रुतमलभूयिष्ठमहाव्रणवदतिहेयं, धिग्धिगित्यनुक्षणं [40]मुमुक्षुभिरस्माभिरपि नंद्यन्त एव। [41]वशिष्टविश्वामित्रश्वेतकेतुरारुणिदूर्वास ऋभुनिदाघ जडभरतदत्तात्रेय रैवतकयाज्ञवल्क्य जनकसनत्कुमारादिजीवन्मुक्ताः [42]लब्धब्रह्मज्ञानिनं तथान्यैरपि निद्यन्ते चेत् ते सर्वेप्यस्माकं साहाय्यमेव कुर्वन्तीति विवेचयतः पुरुषधौरेयस्य किमिति तत्प्रयुक्तदुःखं स्यात् सर्वदेवतासार्वभौमौ शिवविष्णू अपि वैष्णवशैवादिभि[43]रिन्द्रादयो देवताः, रावणादयो राक्षसाः बलिहिरण्यकशपुमहिषासुरादिभिः राक्षसैः वालिप्रभृतिभिश्च, वशिष्टाद्याः ऋषयः [44]विश्वामित्रादिभिश्च। तत्तद्वादिनो वाद्यान्तरैश्च। तत्तदाश्रमिणः आश्रम्यन्तरैश्चाबालगोपालं परस्परं निन्दिताः अवमानिताश्चाभवन्, न केनापि कोप्यंगीकृतः इति स्मृतिपुराणप्रत्यक्षादिषु सत्सु कुलशीलवयोरूप विद्यातेजस्तपो[45]रूपबलपराक्रमविनयमाहात्म्य-प्रज्ञातिशयविहीनानां [46]अतिवराकाणां अस्माकं [47]कैव गणनेति [48]चित्तमुपलालयन्नेव पुरुषः परमसुखी। भवन्ति चात्र श्लोकाः।

> आत्मानं यदि निन्दन्ति [49]निन्दन्ति स्वयमेव हि।
> शरीरं यदि [50]निन्दन्ति सहायास्सन्ति ते मम ॥ 323

---

39. झ. वक्तुमयुक्तं।

40. क.ग.इ.ज. मुमुक्षुभिरपि निद्यन्त।

41-42. ख.झ. पाठे एव वर्तते।

43-44. क.ग.इ. इन्द्राद्याः राक्षसादिभिश्च ततद्वादिनो। च. इन्द्राद्याः राक्षसादिभिश्च वशिष्टाद्याः ऋषयो विश्वामित्रादिभिश्च तत्तद्वादिनो। छ.ज. रावणाद्यो राक्षसाः वालिप्रभृतिभिः वशिष्टादि ऋषयः विश्वामित्रादिराजर्षिभिश्च।

45. क.ग.ततो बलपराक्रम। छ.ज.झ. तपो बलपराक्रम।

46. क.ग. अपि वराकाणाम्।

47. क.ग.इ.च.छ. केन।

48. झ.ख. चित्तमुपलम्भयन्नेव।

49-50. क.ग.इ.च.छ. पाठेषु नास्ति।

[51]निन्दावमानावन्त्यन्तभूषणं यस्य योगिनः।
धीविक्षेपः कथं तस्य [53]वाचाटैः [52]क्रियतामिह ॥ 324

[54]तथा चरेत वै योगी सतां मार्गमदूषयन्
जनाः यथावमन्येरन् गच्छेयुः नैव [55]संगतिम् ॥ 325

[56]चेष्टमानं शरीरं स्वं पश्यन्नन्यशरीरवत्।
[57]संस्तवे चापि निन्दायां [58]कथं क्षुभ्येन्महाशयः ॥ 326

मन्निन्दया यदि जनः परितोषमेति, [59]नन्वप्रयत्नजनितोऽयमनुग्रहे मे।
श्रेयोर्थिनः हि पुरुषाः परतुष्टिहेतोः दुःखार्जितान्यपि धनानि परित्यजन्ति ॥327

सततसुलभदैन्ये निस्सुखे जीवलोके, यदि मम परिवादात्प्रीतिमाप्नोति कश्चित्।
[60]परिवदतु यथेष्टं मत्सपक्षंतिरो हि, जगति तु बहुदुःखे दुर्लभः प्रीतियोगः ॥328

इत्याद्याः स्वस्मादधिकतमेन स्वस्य क्वचित्कदाचिदवश्यं भंगो भविष्यतीति परिभाव्य विद्याधनसौन्दर्यादिमदरूपं गर्वं निहन्यात् स्वस्मादधोऽधः पर्यालोचनायां मूकापेक्षया पामरोऽपि पठितविद्यः, दिगम्बरापेक्षया कौपीनवानपि भाग्यवान्, गोलांगूलापेक्षया कपिरपि अतिसुन्दरः। स्वस्मादुपर्युपरि परिभावनायां वाक्पत्यपेक्षया शेषोऽप्यल्पविद्यः, श्रीशिवापेक्षया कुबेरोऽप्यल्पसौभाग्यः विष्ण्वपेक्षया कन्दर्पोऽप्यल्पसौन्दर्यः इत्युभयधापि न कोप्यधिकः न वा नीचः इति कोऽत्र गर्वावकाशः। तदुक्तं

[61]अधोधो यदि पश्यन्ति [62]सर्व एव महोन्नताः
उपर्युपरि पश्यन्ति सर्व एव महाधमाः ॥ 329

---

51-52. च.छ. नास्ति।
53. क.ग.इ.ज. वाचालैः।
54-55. च.छ. नास्ति।
56. ख.च. चैत्रमानं।
57. क.ग. संस्थापयेच्चापि। ख.झ. संस्थवेचाति।
58. क.ग. रथम्।
59. क.ग.ख.इ.छ. न स्वप्रयत्न।
60. इ.च.क.ग. परितदनु।
61. इ. ज. यथोधो।
62. ज. सर्पएव।

अनात्मदृष्टा: लोकेशा: नाधिका: मायिकत्वत:
[63]आत्मदृष्ट्या तु लोकेशा: नाधिका: आत्मरूपत: ॥ 330

इति पुरुषश्रेष्ट: धर्मव्यवस्थासेतुभूतहृदय: श्रीरामोऽपि

हसद्भि: क्रियते कर्म रुदद्भिरनुभूयते ।
अयुद्धेन हतो वाली तस्येदं कर्मण: फलम् ॥ 331

इत्युक्तत्वात् अन्यायेन वालनं हतवानिति

क्वनु कुलमकलंकमायताक्ष्या:, क्व च [64]रजनीचरवेश्मगापवाद: ।
अयि खलु विषम: पुराकृतानां भवति हि जन्तुषु कर्मणां विपाक: ॥ 332

इत्युक्तत्वात् सर्वलोकजननी सत्कुलप्रसूता सद्गुणनिचय[65]परमपातिव्रत्याद्युग्र-तप:प्रभावोपज्ञाहेतुभूतापि सीता भगवती रावणमन्दिरे निरुद्धेति च । युधिष्ठिर: परमधार्मिकप्राथमिककीर्तनार्होऽप्यश्वत्थामा हत: इत्युक्तत्वात् अनृतवचनमंगीकृतवानिति च । [66]हरिश्चन्द्र: सत्यवाक्यपरिपालनादीक्षादक्षधुरन्धरोऽपि तदीयव्रतरक्षणाय श्मशानवाटिकारक्षणं, चण्डालसेवां, स्वपुत्रदाराविसर्जनञ्च, अहल्याद्रौपदी सीता कुन्ती तारा मण्डोदर्यादीनां [67]कुलटात्वारोपणञ्च सर्वेष्वपि लोकेषु आबालवृद्ध वनितां अद्यापि तान् दूषयत्सु सत्सु अस्मादृशा: तादृशान् [68]कोट्यंशेनाप्यसमाना: कथं लोकै: सामीचीन्येंऽगीकर्तव्या: । यथोचितमस्माकं कालेऽपनीते सति ये वा के वा यद्वा [69]तद्वा युक्तमयुक्तं वा वदतु नाम । स्तुतश्चास्तुतश्च तावानेव सोऽर्थ इति मत्वा [70]किमस्माकं गतमागतं वेति विचार्य सर्वेऽपि जना: यथा मां स्तुवन्ति, यथा च न निन्दन्ति तथा

---

63. क.ग. अनात्म्य दृष्ट्या ।
64. क.ग. रजनीचरवेश्मजापवादा: ।
65. क.ग.इ.च.छ.ज. परमपरिचर्यानिचय पातिव्रत्य ।
66-67. क.ग.इ.च.छ.ज. पाठेषु नास्ति ।
68. क.ग.इ. कोट्यंशेनाल्पसमाना: ।
69. च.छ. तद्वद्युक्तमयुक्तम् ।
70-71. ख.ग. पाठेषु लुप्त: ।

चरिष्यामीत्यभिनिवेशरूपां लोकवासनामुन्मूलयन्नेव पुरुषो [71]विवेकी । तदुक्तं

गन्धर्वनगरस्यार्थे भूषिते दूषितेऽथवा ।
अविद्यांशे [72]सुखादौ वा कः क्रमः सुखदुःखयोः ॥ 333

दृष्ट्वा तमबुधास्सर्वे यद्यथेच्छं वदन्त्विह ।
सर्वेषां बहिरन्तस्थो विचरेदिह [73]लीलया ॥ 334

विद्यते न खलु कश्चिदुपायः, सर्वलोकपरितोषकरो यः ।
सर्वथा स्वहितमाचरणीयं किं करिष्यति जनो बहुजल्पः ॥ 335

इत्यादिः । भरद्वाजनामके कस्मिंश्चिदृषौ त्रिभिः [74]पुरुषायुभिरधीतेष्वपि वेदेषु अन्तमगत्वा [75]पाठव्यसनेन दुःखिते सतीन्द्रः तमवलोक्य कृपया ब्रह्मविद्यां उपदिदेशेति **तैत्तिरीयशाखायां** । कस्मिंश्चिदृषौ सर्वाण्यपि शास्त्राण्यधीत्यार्थ-बोधव्यसनेन पुस्तकभारं शिरसि निधाय समागते सति परमकृपालुः कश्चिद्ब्रह्मनिष्ठः तं दृष्ट्वा भारवाहि! गर्दभसाम्यमापाद्य कृपया तन्निर्वेदानुकरणरूपहास्यं चकारेति च । ततो विलज्जितः सर्षिः तं च पुस्तकभारं दुःखबुद्ध्या समुद्रे परित्यज्य ब्रह्मविद्यां सम्पादितवानिति । चान्यत्र कस्मिंश्चि[76]न्निदाघभिधे ब्राह्मणे अनुष्ठानव्यसनेन देहाभिमानं वर्धयित्वा दुःखिते सति ऋभुः नामा ब्रह्मनिष्ठः तं निरीक्ष्य कृपया त्रिवारं ब्रह्मोपदेशं कृतवानिति च विष्णुपुराणे प्रतिपादितत्वात् तद्विदित्वा शब्दजालापारमहार्णवपारगमने कथं न समर्थाः ।

तत्कर्म [77]यन्न बन्धाय सा विद्या या विमुक्तये ।
आयासापरं कर्म विद्याऽन्या शिल्पिनैपुणम् ॥ 336

---

72. क.ग.घ. मखादौ । 73. क.ग.घ.ज. लोलया ।
74. क.ग.ज. पुरुषायुर्भीतभीतेष्वपि । 75. ग.च.छ. पाठ्यव्यसनेन ।
76. च.छ. नि(वि) रमाभिधे । 77. क.ग.घ.च. यन्निबन्धाय ।

इत्युक्तत्वत्वात् ज्ञानसम्पादनासमर्थया उदरोपस्थव्यापारानुकूल [78]वाङ्मात्र चमत्कृतिरूपया मनोवाग्विग्लापनहेतुभूतया विद्यया प्रतिक्षणमवश्यविनश्यत्यस्मिन् कलेबरे निरादरणमस्माकं किं लभ्यमिति च विचार्य पाठर्थबोधानुष्ठानव्यसनरूपां शास्त्रवासनां समूलमुन्मूलयतः पुरुषधौरेयस्य दुःखलेशोऽपि नास्ति । तदापि श्रूयते ।

तमैवैकं विजानथात्मानमन्या वाचो निमुञ्चथ ।
[79]नानुध्यायाद्बहूच्छब्दान्वाचो विग्लापनं हि तत् ॥ 337

(तै. आ ३-१-३, महा.वाः ३, ना.पू. १-६, त्रि.वि. महानाः ४-३, चितिः १२-७, १३-१) इति स्मर्यते च ।

यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति ।
तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य वेति ॥ (भ.ग. २-५२) 338

वेदवादरतो न स्यात् न पाषण्डी न हेतुकः ।
[80]शुष्कवादी न वादे च पक्षं किञ्चिन्न संश्रयेत् ॥ 339

नानामतं महर्षीणां साधूनां योगिनां तथा ।
दृष्ट्वा निर्वेदमापन्नः को न शाम्यति मानवः ॥ 340

हरो यद्युपदेष्टा ते हरिः कमलजोऽपि वा ।
अथाऽपि न तव स्वास्थ्यं सर्वविस्मरणादृते ॥ 341

अनन्तशास्त्रं बहुवेदितव्य[81]मल्पश्च कालो बहवश्च विघ्नाः ।
यत्सारभूतं तदुपासितव्यं हंसो यथा क्षीरमिवाम्बुमिश्रात् ॥ 342

इत्यादि सर्वपरिपूर्णा द्वितीय परमकारणसत्यचेतनान्यानन्दघनब्रह्मस्वरूपः तावदात्मा अनाद्यविद्यानिधनत्वेनानुत्पाद्यत्वात् नित्यात्पत्वेनानाप्तत्वात्

---

78. च.छ. राज्ञां चमत्कृतिरूपया ।

79. क.ख.ग.च. नानुष्ठायात् बाह्यात् शब्दान् ।

80. क.ग.घ.छ.ज. शुष्कवादनपादे च ।

81. क.ग.घ.मल्प ... बहुपश्चविघ्नाः । च.छ.द.ज.य. स्वल्पश्चकालो बहवश्च विघ्नाः ।

[82]क्रियाङ्गत्वाभावेनासंस्कार्यत्वात् नित्याप्तत्वेनाप्तत्वात् क्रियांगत्वाभावेनासंस्कार्यत्वात् कूटस्थासंगनिर्विकारैकरूपत्वेनाविकार्यत्वाच्च कर्मसम्बन्धाभावेन नित्यपरिशुद्धः। शरीरन्तु मांसासृक्पूयविण्मूत्रस्नायुमज्जास्थि-संहतिरूपत्वात् [83]मलमूत्रपात्रत्वाच्चान्त्यन्तापवित्रं मलिनममंगलमसंस्पृश्यं चेति सर्वेषां नः प्रत्यक्षमेवैतत्। असंशयमस्मिंश्च शरीरे नवेभ्यो रन्ध्रेभ्यो मलेषु स्रवत्सु सत्सु अभेदेन प्रक्षालयितुं एवाशक्ये सति शीतवातातपक्लेशाध्वश्रमपूर्वकतीर्थादिपर्यटनेन दुःखमेकं विनानेकवार मनुष्ठितेनापि गंगादितीर्थस्नानेन सालग्रामशिलातीर्थप्रोक्षणादिना नास्य शरीरस्य शुद्धिलेशोप्यस्ति। प्रत्युतएतच्छरीरादिमलेन तीर्थ एवापवित्रीकृते सति [85]शरीरं शुद्धमिति वक्तुमपि वा लज्जा कस्य न स्यात् शरीरमेतदध्यस्य कर्तृत्वेन व्यवहरतः तत् चिदाभासरूपजीवस्येयं शुद्धिः भविष्यतीत्युक्ते अन्त्यन्तापवित्रैकस्वभावस्य शरीरस्यै वै तच्छुद्धिगन्धासंस्पर्शे शरीरद्वारा तदन्तस्थजीवे शुद्धिः स्यादित्यप्यज्ञानेन्धनमात्रमेतन्नविचारसहं किञ्चाकर्त्रात्मभूते कूटस्थनिर्विकाराखण्डानन्दैकचिद्रसे निष्प्रपञ्चे [86]परमकारणभूते मयि कर्तृकार्यक्रियादिरूपे जाग्रदादिप्रपञ्चे [87]सर्वस्मिन् "नेह नानास्ति किञ्चन" (कठः ४-११, बृहदाः ४-४-१९, त्रि.वि.महाना ३.३, अध्यात्म ६३, निरालम्बः ११) "त्रय अवस्थाः त्रयस्वप्नाः" (ऐत (आ) ३-१२) इत्यादिश्रुत्या अधिष्ठानव्यतिरेकेण शुक्तौ रजतवत्, समद्रे फेनादिवच्चासत्वेन मिथ्याभूते सति कर्ताऽपि नास्ति शुद्धिरपि नास्ति। तदनुकूलव्यपारः सर्वेऽपि वृथा दुःखमिति विचारशास्त्रोणास्मिन् देहे शास्त्रीयवासनापाशमुच्छेदयन्नेव पुरुषो धीरः। **मोक्षार्थी मानसतीर्थ सेवनं।** भवन्ति चात्र श्लोकाः।

---

82. ख.च.छ. क्रियांगत्वा भावेनासंसारित्वान्नित्य संस्कार्यत्वात् कूटस्थ।

83. ख.च.छ. मलमूत्र गर्तत्वात्।

84. ख.इ.ज.झ. अखेदेन।

85. क.ग.घ.इ.च. शरीरव्यापार।

86-87. ग.घ. नास्ति।

मातापित्रोर्मलं देहं [88]ज्ञात्वाप्याचारसंयुताः ।
स्वप्ने किं प्राप्यते मूढैः सुप्तौ निर्गुणमद्वयम् ॥ 343

अत्यन्तमालिनो देहो देही चात्यन्तनिर्मलः ।
[89]उभयोरन्तरं ज्ञात्वा कस्य शौचं विधीयते ॥ 344

नवच्छिद्रयुताः देहाः स्रवन्ति घटिका [90]इव ।
बाह्यशौचैः न शुद्ध्यन्ति नान्तश्शौचं तु विद्यते ॥ 345

सर्वा नद्यः सरस्वत्यः सर्वे पुण्याः शिलोच्चयाः ।
[91]ज्ञाजले तीर्थमात्मैव मा स्म देशातिथिर्भव ॥ 346

आत्मतीर्थं परं तीर्थं अन्यतीर्थं निरर्थकम् ।
तत्र ध्यानजलैः स्नातो भवेन्नित्यमतन्द्रितः ॥ 347

तीर्थानि तोयपूर्णानि देवान् पाषाणमृण्मयान् ।
योगिनो न प्रपद्यन्ते स्वात्मध्यानपरायणाः ॥ 348

चित्तमन्तर्गतं दुष्टं तीर्थस्नानैर्नशुध्यति ।
शतशोऽथ बहिर्धौतं सुराभाण्डमिवमिवाशुचिः ॥ 349

आत्मतीर्थं परित्यज्य बाह्ये यो रमते नरः ।
स मूढः [92]काञ्चनं त्यक्त्वा लोष्टं गृह्णाति सुव्रत ॥ 350

सन्त्यज्य हृद्गुहेशानं देवमन्यं प्रयान्ति ये ।
ते रत्नमभिवांच्छन्ति त्यक्तहस्तस्थ कौस्तुभाः ॥ 351

आत्मा नदी संय्यमितोयपूर्णा, सत्यह्रदा शीलतटादयोर्मिः ।
तत्राभिषेकं कुरु पाण्डुपुत्र, न वारिणा शुद्ध्यति चान्तरात्मा ॥ 352

---

88. क.इ.च.छ. ज्ञात्वात्याचार । ग.घ. ज्ञात्वाह्याचार ।

89-90. क.ग.घ.छ. पाठेषु नास्ति ।

91. क.ग.घ.च.छ. जा जले । ख. जागन्ते । 92. क.ख.किञ्च सत्यक्त्वा ।

यस्मिन् देवाश्च वेदाश्य पवित्रं कृत्स्नमेकताम् ।
व्रजेत् तन्मानसं तीर्थं तस्मिन् स्नात्वामृतो भवेत् ॥ 353

ज्ञानहृदे ध्यानजले रागद्वेषमलापहे ।
[93]यत्स्नाति मानसे तीर्थे सयाति परमां गतिम् ॥ 354

इत्याद्याः वातपैत्य[94]श्लेष्मजन्येषु रोगेषु कोटिशः शरीरमेतत्पीडयत्सु सत्सु कियन्त्यौषधानि सेवितुमस्माकं शक्यानि वृथैव श्रममात्रपर्यवसन्नोऽयं व्यापारः इति विविच्यौषधादिसेवारूपां लौकिकदेहवासनां परित्यजन् अतिचञ्चलजलबुद्बुदरक्षायामिव प्रतिक्षणापरिमितापायग्रस्तप्रारब्धमात्राधीन शरीररक्षायामपि यथा तथा वास्तु, किमनेन शरीरेण शरीरात्मचैतन्य प्रकाशरूपस्य ममेत्युपेक्षाबुद्धियुक्तः एव पुरुषः परमसुखी । तदुक्तम् ।

अद्यैव मरणं यातु [95]कल्पान्तप्रलयेऽपि वा ।
न ज्ञः कलंकमाप्नोति हेमपंकगतं यथा ॥ 355

[96,98]आत्माभिमानहीनाः कुणपशरीराभिमानपरितुष्टाः ।
वारिजबद्बुदरक्षां मूढाः [97]बध्नन्ति [99]लोहबन्धेन ॥ 356

इति च । [100]श्रीदक्षिणामूर्तिविलासेऽस्माभिरप्युक्तं[101] ।

पिपीलिकादिब्रह्मान्त मरणेऽवश्यं भाविनि ।
किं दुःखं ब्रह्मनिष्ठानां कुकलेबरसंक्षयात् ॥ 357

सासारकामनाशस्य देहनाशो गुणायते ।
वृश्चिकच्छेदकामस्य पुच्छच्छेदो यथा तथा ॥ 358

---

93. क.ग.घ. यः स्नाति ।
94. च.छ. श्लेष्मरोगेषु ।
95. ख.ग.घ.च.छ.ज. कल्पान्तनिचयेऽपि वा ।
96. ख.ज. आत्माभिमानदीनाः ।
97. च.छ. कुर्वन्ति ।
98-99. ग.घ. पाठे नास्ति ।
100-101. च.छ.ज. पाठे नास्ति । ख. इ. दक्षिणामूर्ति वीक्षाविलासे ।

आगामि देहराहित्ये सिद्धे ब्रह्मात्मनिश्चयात् ।
[102]कलेबरक्षयादन्यत् मङ्गलं किमुमादृशाम् ॥ 359

पञ्च भूतात्मके देहे गते पञ्चत्वमीदृशे ।
भूतपञ्चकसद्भावादलं दुःखेन दुःखिनाम् ॥ 360

अयमिवलोक [103]परोऽपिलोकः क्षयिष्णुत्वात्सातिशयत्वादमङ्गलम् ।
[104]स्पर्धासूयाधनाशाविनाशपावित्र्यादि दोषदूषितत्वाच ॥ 361

तद्वांच्छया तदनुकूल कर्मोपासनादिव्यापारेण देहप्राणेन्द्रियान्तःकरणादिसंघात [105]सन्तापमात्रान्तत्वात् सर्वतो निर्विण्णो ''न स पुनरावर्तत'' (निरालम्बः ३३) इत्यादि श्रुत्युद्घोषितं परममोक्षपदमेवाकांक्षिणोयं नानित्यपदमिति विचार्य परलोकवासनाजालं परिहरन्नेव पुरुषवर्यो ब्राह्मणः परमोधीरः श्रूयते हि ''तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यकृतो लोकः क्षीयते'' (छां. ८-१-६) ''परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेनेति'' (मुण्डकः १-२-१२) स्मर्यते च ।

आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ।
मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥ (भग. ८-१६) 362

[106]एवं यथा यथा यया वासनोदेति तदा तदा [107]तस्यास्तस्याः । यथोचितं प्रतीकारमाचरन् चित्तप्रसादं सम्पाद्य [108]परिहतदैन्यो गृही तद्धैर्यब्रह्मचर्य

---

102. क.ग.घ. ककेबरक्षयादन्यत् ।

103. क.ग.घ.च.ज. परो हि लोकः । छ. अयमिवलोकः क्षयिष्णुत्वात् ।

104. क.ग. स्वार्थासु माथ नाना पावित्र्यादि । च.छ.ख.घ. स्पर्धासूयादिदोषनाविश । इ.ज.झ. स्पर्धासूयाविनाशदोषदूषितत्वात् ।

105. क.ख.झ.च.छ. सन्तापमात्रान्तरायः । ग.घ.इ. सन्तापमक्लेशयित्वा सर्वतो ।

106-107. क.ग.घ. सर्वं यदा यदा ममाहि सनोति इति तदा तदा । इ.च.ज.झ. एवं यधा यधा या या वा सनोदिति तदा ।

108. ग.घ. परिवर्धेत धैर्यं ।

सहिष्णुत्वादि[109]ज्ञानसाधनकलापः सन् ऐहिकामुष्मिकोपभोग[110]साधनत्वेन लोकवेदप्रसिद्धस्य निषेकादिभस्मान्तः कर्तव्यस्य सर्वस्यापि व्यापारस्याविवेकमूलस्य देहेन्द्रियान्तःकरणादिसंघातसन्ताप[111]मात्रान्तत्वात् अनित्यत्वादनात्मार्थत्वाच्च सर्वत्रावस्थितां प्रीतिमात्मन्येवोपसंहृत्यात्मज्ञानार्थी सन् ब्रह्मनिष्ठागरिष्ठोपशमसुखरसिकः [112]श्रीगुरुपादारविन्दसेवां कृत्वा शास्त्राचार्येश्वरप्रसादसम्पन्नो भूत्वा यथोक्तश्रवणमनन निदिध्यासनानुष्ठानं कृत्वा शास्त्राचार्योपदेशेन शास्त्रानुसारेण स्वमनस्युद्बुद्धैः न्यायैश्च स्वात्मानं सर्वसाक्ष्य[113]संस्पृष्टानन्दरूपकूटस्थासङ्गनिर्विकारोदासीनपूर्णचैतन्यप्रकाशस्वरूपत्वेन ज्ञात्वा स्वस्वरूपाद्विभेदेनाविचारितपरिदृश्यमानं व्यष्टिसमष्ट्यात्मक[114]मिदं मनसाप्यचिन्त्यरचनारूपं अविचारितं सत् सत्यवदवभासमानं सर्वं सर्वाधिष्ठाने स्वात्मनि परमकारणे व्यर्थमप्रार्थितमेवेत्थं स्वप्नसाक्षिणि स्वप्नप्रपञ्च इव निद्रादोषेण, [115]मरुभूमौ मरीचिकाजलमिव दिनकरकरजालेन, [116]शंखे पैत्यमिव पित्तदोषेण, मायया परिकल्पितमिति मत्वा मायार्थं परिकल्पितस्यास्य दृश्यप्रपञ्चस्य द्रष्टुरूपोऽहमेव तदधिष्ठानभूतः परमार्थसत्यः न मत्तोऽन्यत्किञ्चित् परिदृश्यमानमपि सत्यमिति निश्चित्य "आत्मैवेदं सर्वं (छा. ७-२५-२) "ब्रह्मैवेदं सर्वं (नृ. ७-३) "सर्वं खल्विदं ब्रह्म" (त्रि.वि.महाना: १-३, निरालम्बः ११, गन्धर्वः ६, छाः ३-१४-१, महोः ४-११९) "ऐतदात्म्यमिदं सर्वं" छा. ६-८-७, ६-९-४, ६-१०-३, ६-११-३, ६-१२-३, ६-१३-३, ६-१५-३, ६-१६-३) "तत् सत्यं" (ऐत (आ) ३-१२) "स आत्मा" (गणेशः ५-७) "तत्त्वमसि" (छा. ६-८-७, ६-९-४, ६-१४-३, शुकरः

---

109. क.छ. ज्ञानधनकलापः ।

110-111. ग.घ. पाठे नास्ति ।

112. ग.घ.इ. श्रीगुरुपादाश्रयसेवां, च.छ.झ. श्रीगुरुपादाश्रयणञ्च ।

113. ग.घ.च.झ. संस्पृष्टापरोक्षानन्दरूप ।

114. ग.घ. मिदंस्वस्मिन् विलाप्यचिन्त्य ।

115. ग.घ.छ. मरुभूमौ यथा मरुमरीचिका ।

116. क.ख. शंखे पैत्यमिव पीतदोषेण । ग.घ. शंखे दैत्यमिव पित्तदोषेण ।

२-३) इत्यादि श्रुतिशतेभ्यः। "इदं सर्वमहमस्मि, अहमेव ब्रह्म, ब्रह्मैवाहमस्मीति" परस्परतादात्म्यं अनुभूय तं चानुभवं दृश्यं दृगात्मनात्मनि [117]प्रविलाप्य तच्च विलापनमात्मचैतन्यप्रकाशरूपत्वेनावलोक्य मौनेकसमाधिगम्यत्वात् [118]आत्ममात्रावशिष्टाखण्ड ब्रह्मचैतन्यप्रकाशरूपस्सन् प्रकाशमानः ब्राह्मणः ब्रह्मवित्प्रवरः जीवन्मुक्तः परममोक्षार्हो भवति। नात्र संशयः। एतावता परमश्रयसो वासनाक्षयः कारणमिति वासनाक्षयः सम्यग्विचारितः। श्रूयते हि- "आत्मक्रीडा आत्मरतिः" (छा. ७-२५-२) "क्रिया क्रियावानेष ब्रह्मविदां वरिष्ट" भवन्ति चात्र श्लोकाः।

[119]शास्त्राचार्योपदेशेन तर्कैः शास्त्रानुसारिभिः।
सर्वसाक्षतयात्मानं सम्यक्निश्चित्य सुस्थिरः॥ 363

स्वात्मनोऽन्यतया भात समस्तमविशेषतः।
स्वात्ममानतया बुद्ध्वा पुनः [120]स्वात्मानमद्वयम्॥ 364

शुद्धं ब्रह्मेति निश्चित्य स्वयं स्वानुभवेन तु।
निश्चयं च स्वचिन्मात्रे विलाप्याविक्रिये द्वये॥ 365

विलापनं च चिद्रूपं बुद्ध्वा केवलरूपतः।
स्वयं तिष्ठेदयं साक्षात् ब्रह्मवित्प्रवरो मुनिः॥ 366

इति **श्रीकम्भम्पाटिकुलजलधिपूर्णेनामरेश्वरशास्त्रिणा कृतं अज्ञानध्वान्तचण्डभास्करे वासनाक्षयविचारोनामाष्टमं प्रकरणं समाप्तम्।**



117. क.ख. प्रविभाव्य। ग.घ. प्रविलाप्येतच्च। ज. पाठे नास्ति।

118. क.ख. आत्ममात्रोपदिष्टाखण्ड। 119-120. झ. पाठे नास्ति।

## जीवन्मुक्तस्वरूपविचारः नवमं प्रकरणम् ।

अथ जीवन्मुक्तस्वरूपं विचारयामः ।

[1]वटमूले महच्चित्रं सुन्दरः परमश्शिवः ।
तरुणो मौनयुक्च्छम्भुः मुनयः [2]पण्डितोत्तमः ॥ 367

प्रत्यगभिन्नब्रह्मसाक्षात्कारसम्पन्नः वर्णधर्माश्रमाचारशास्त्रकोलाहलं परित्यज्य कूटस्थनिर्विकारपरिपूर्णाखण्डानन्दैकचैतन्यप्रकाशरूपे प्रत्यगभिन्ने ब्रह्मणि विश्रान्तिसिद्ध्यर्थं चित्तं [3]बलवदुपलालनपूर्वकं प्रशान्तं कृत्वा दृश्यप्रपञ्चमिथ्यात्वदृष्ट्या विषयासक्तिविवर्जितः "जक्षन् क्रीडन् स्त्रीभिः यानैः वा रममाणः" (छा. ८-१२-३) इत्यादिश्रुतेः "शरीरं केवलं कर्मकुर्वन्नाप्नोति किल्बिषमित्यादि स्मृतेः ।

क्वचिद्भूमौ शय्या क्वचिदपि च पर्यङ्कशयनम्,
क्वचिच्छकाहारः क्वचिदपि च शाल्योदनरुचिः ।
[4]क्वचित्कन्धाधारी क्वचिदपि च दिव्याम्बरधरः,
मनस्वी [5]मोक्षार्थी न गणयति दुःखं न च सुखम् ॥ 368

[6]इत्थं यः कर्मबद्धो भ्रमति परवशः प्राणभृज्जन्मसंघैः,
दुःखस्यान्तं न वेत्ति स्मरति न च जनिव्रातमज्ञानयोगात् ।
तं सर्वानर्थमूलं प्रशमनविधिना स्वात्मराज्येऽभिषेक्तुं,
तात्पर्येण प्रवृत्ताः श्रुतिशिखरगिरः सूत्रभाष्यादयश्च ॥ 369

---

1-2. क.ग.घ.च.छ. पाठेषु नास्ति ।
3. क.च.घ.झ. बलवदुपलालयन् ।
4. क.च.ज.झ. क्वचि . . . . धारी ।
5. ख.इ. कार्यार्थी ।

दुःखं स्वर्गात्प्रपाते बहुविधनरके गर्भवासेऽतिसुःखं
तारुण्येऽमर्षलोभव्यसनपरिभवोद्वेगदारिद्र्यदुःखं,
वार्धक्ये शोकमोहेन्द्रिय विलयगदैः दुःखमन्तेऽतिदुःखम्॥ 370

इन्द्रलोके महद्दुःखं प्राजापत्ये तथैव च
विष्णुलोके च रौद्रे च दुःखमेव [7]विचारितः॥ 371

[8]इत्यभियुक्तोक्तेश्च प्रबलप्रारब्धाधीनशरीरचेष्टो निश्चेष्टः [9]पूर्णानन्दात्मस्वरूपदृष्ट्या नित्यसंन्तुष्टः, अन्तः सुखं, [10]अन्तरारामोऽन्तःप्रकाशः, आत्मरतः, आत्मतृप्तः, आत्मसन्तुष्टः, दूरीकृतदुरितक्रियः, प्रशान्तचित्तः, जितेन्द्रियः, कृतकृत्यः, स्वयंप्रकाशमानः, ब्राह्मणः एव जीवन्मुक्तः, **अध्यासविहीनविभेदसंचारशीलो जीवः**, एवं विधः पुरुषधौरेयो ब्राह्मणः प्रबलप्रारब्धवशपरिप्राप्तस्वकीयपरकीयकामक्रोध-निन्दस्तुतिमानावमानादिनानविधवृत्तिप्रवाहपर्यापतित[11]सुखदुःखखेदसंकटातिलम्पट-देहप्राणेन्द्रियान्तःकरणादिसंधाते वर्तमानोप्यवर्तमान [12]इव एतादृश[13]सांसारिकसङ्कटासंस्पृष्टः [14]परमानन्दास्वादमदमत्तः सन् लोके जीवः उत्क्रान्ते सति [15]तदीयजीवशरीरं दृष्ट्वा गुणान् गणयित्वा गुणज्ञाः केचित्स्तुवन्ति, [16]दुष्टाः चेत् द्विषन्तः निन्दन्ति, वाहकाः शिरसि निधाय [17]सन्मानवदश्वत्थादिकाष्ठखण्डेषु निपात्य रज्जुभिः दृढं बद्ध्वा [18]दहनचर्या

---

6-7. क.ग.घ.इ.झ. पाठेषु नास्ति। 8. इ.ज. इत्यविभियुक्त।

9. ग.घ. पूर्णानन्दस्वरूप। क.च.छ.ज.झ. पूर्णानन्दात्मस्वरूप वृष्ट्या।

10. क.इ.च.ज. अन्तरारामोन्तप्रलयाकाशः। (अन्तरात्मान्तःप्रकाशः)

11. ग.घ.इ.च.ज. सुखदुःखादि संकटा। क. सुखदुःखभेदसंकटादि।

12. क.इ.ज. इव तादृश। 13. च.छ. संसारातिक।

14. क. परमानन्दास्पदमद। च.छ.परमानन्दास्पदमत्ती सन्।

15. ग.घ.इ.च.ज़. तदीयशवशरीरम्। 16. च.छ. इष्टाश्च निन्दन्ति।

17. क.इ.ज. सम्मानवद।

चरन्ति । पत्नी चेत्कामार्ताऽतिदुःखिता सती गाढमालिंगति पुत्रादयः [19]शिरस्यलतं निक्षिप्य प्रदहन्ति । इत्येवमाद्यनेकविकारैः अतिसंकटग्रस्तं तदेतच्छरीरं देवाद्युत्तमशरीरे प्रविष्टः स च जीवः पश्यन्नपि यथापूर्वं तस्मिन् शरीरे आत्माऽत्मीयत्वाभिमानाभावात् यथा तद्विकारैः सुखदुःखादिसंकटमसंस्पृशन् हसन्नेव गच्छतीत्येवमेवाऽयं ब्राह्मणः ब्रह्मनिष्ठः [20]स्वकीयदेहप्राणेन्द्रियान्तःकरणादिसंघाताद्विभिन्नः तत्सर्वसाक्षिचैतन्य प्रकाशमात्रः तत्सर्वसंधातासंस्पृष्टः सर्वपरिपूर्णाद्वितीयब्रह्मस्वरूपस्सन्

न स्मर्तुं न च विस्मर्तुं [21]नादातुं नो जिहासितुं ।
न मन्तुं नह्यमन्तुं या शक्यते सा चिदस्म्यहम् ॥ 372

इत्यक्तत्वात् दानोपादानोपेक्षादिव्यवहारशक्यः, सर्वव्यवहारातीतः "अशरीरं वावसन्तं अशरीरो महानात्मा" (छा. ८-१२-१) इत्यादि श्रुतेः स्वतः अशरीरोऽपि सर्वेष्वपि शरीरेषु बहिरन्तश्चापूर्यावस्थितः । "अचक्षुः" इत्यादिश्रुतेः निरिन्द्रियोऽपि चक्षुषः चक्षुः इत्यादिशास्त्रात् सर्वेन्द्रियद्रष्टा सन् "अप्राणः" इत्यादिश्रुतेः स्वतोऽप्राणोऽपि प्राणस्य प्राणमित्याद्युक्तत्वात् सर्वप्राणप्रेरकः "आकाशवत्सर्वगतश्च नित्यः" (शांडिल्यः २-१-३) इत्यादिश्रुतेः आकाशवत्सर्वव्यापकः ।

सूर्यो यथा सर्वलोकस्य चक्षुः न लिप्यते चाक्षुषैः बाह्यदोषैः ।
एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः ॥ 373

[22]इत्यादिश्रुतेः ।

---

18. क. विमानवच्चरन्ति । ग.घ.इ.च.ज. अवमानवच्चरन्ति । 19. इ.ज. शिरस्युल्कान्तं ।

20. ग.घ. सशरीरेन्द्रियान्तःकरणादि । इ.ज. स्वशरीरदेहेन्द्रियान्तःकरणादि ।

21. ग.घ. न दातुं ।

22. छः इत्यादिश्रुतेः शारीरिकं केवलं कर्म कुर्वन्नाप्नोति किल्बिषनित्यादि ।

यथा प्रकाशयत्येकः कृत्स्नलोकमिमं रविः।
क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत॥ (भग. १३-३४) 374

मनोबुद्धीन्द्रियाणां च ह्यवस्थाः कर्मचोदिताः।
चैतन्येनैव भास्यन्ते रविणेव घटादयः॥ 375

इत्यादि भगवद्भाष्यकारोपदेशाच्च सवितृप्रकाशवत् शुद्धाशुद्धव्यष्टि[23]-समष्ट्यात्मकविश्वासभासकविशुद्धचिन्मात्रः सन् एतद्देहप्राणेन्द्रियादिसंघात-प्रकाशः "अत्राऽयं पुरुषः स्वयं ज्योतिः" (बृहदाः ४-३-९, ४-३-१४) इत्यादिश्रुतेः स्वयंप्रकाशमानः सन् कस्य वेदं शरीरं न ममेति मन्यमानः शरीरादिविकारासंस्पृष्टः।

शमएव परं तीर्थं शम एव परं तपः।
शम एव परं ज्ञानं शमो योगः परा गतिः॥ 376

इत्युक्तत्वात् [24]उपशान्तिसुखरसिकः।

[25]एकं विवेकसुहृदमेकां प्रोढसखीं धियम्।
आदाय विहरन्नेव संकटेषु न मुह्यति॥ 377

इत्युक्तत्वात् विवेकः सुहृत् संगो "असंगोह्ययं पुरुषः" (बृहदाः ४-३-१५, ४-३-१६) इति श्रुतेः स्वतोऽसंगः प्रज्ञाप्रौढसखीसहाये द्वितीयाभावात् स्वतोऽसहायः।

बुद्धो [26]बालकवत्क्रीडेत् कुशलो जडवच्चरेत्।
वदेदुन्मत्तवद्विद्वान् गोचर्यां नैगमश्चरेत्॥ 378

---

23. ग.घ. समष्ट्यात्मकविश्वानीकविशुद्धविश्वाभासक।

24. ख.झ. उपशान्तिसुखरसितः।

25. च.छ. एवं।

26. क.ग.घ.च.छ. बालवत्क्रीडा।

उपाधिस्थोऽपि तद्धर्मैः अलिप्तो व्योमवन्मुनिः ।
[27]सर्वविन्मूढवत्तिष्ठेदसक्तो [28]वायुवच्चरेत् ॥ 379

ना पृष्टः कस्यचिद्ब्रूयात् न [29]चान्यायेन पृच्छतः
जानन्नपि च मेधावी जडवल्लोकमाचरेत् ॥ 380

निर्वासनो निरालम्बः स्वच्छन्दो मुक्तबन्धनः ।
क्षिप्तः [30]संस्कारवातेन चेष्टते शुष्कपर्णवत् ॥ 381

इत्यादिशास्त्रादध्यासविहीनविनोदसंचारशीलः, यथा [31]सर्पो निर्लयनी निर्मोकानन्तरं तां च निर्लयनीं वायुना इतस्ततः चाल्यमानां वर्षधाराभिः आर्द्रीकृतामातपसन्तप्तां दावाग्निदग्धां वा सन् निरीक्ष्य [32]यथापूर्वं तस्यां स्वस्यात्मीयत्वाभिमानाभावादुदासीनः एव सञ्चरन् न [33]खिद्यति । एवमेवाज्ञानदशायामिव शरीरादिसंधातात्मीयत्वभ्रान्तिरहितत्वात् अतिप्रबुद्धः।

सा कालसूत्रपदवी सा महावीचिवागुरा ।
सासिपत्रवन[34]श्रेणी [35]या देहेऽहमितिस्थितः ॥ 382

सा त्यज्या सर्वयत्नेन सर्वनाशेप्युपस्थिते ।
स्प्रष्टव्या सा न भव्येन साश्वमांसेव पुल्कसी ॥ 383

इत्यादिशास्त्राद्देहात्मभ्रान्तिं [36]चण्डालवाटिकामिव दूरतः एव [37]संत्यजन् सर्वपरिपूर्णाद्वितीयपरमकारणब्रह्मात्मानुभवाग्निना देहात्माध्यासतूलराशिं

---

27. क.ग.घ. सर्ववन्मूढ ।
28. क.च.छ.झ. वसुवच्चरेत् ।
29. ग.घ. चाल्याद्येन ।
30. क.ग.घ. संकारवातेन ।
31. क.च.छ. सर्वः ।
32. ग.घ. यथापूर्वं तथा तस्या ।
33. क.च.छ.ज. भिद्यत्येव ।
34. ग.घ. श्रोणी यो ।
35. च.छ. या वैसोऽहमिति ।
36. च.छ. वन्तालवाटिकामिव ।
37. इ.ज. संत्यज्य ।

प्रदहन्नेतच्छरीरादिकं सर्वविकारग्रस्तं चेष्टमानं वपुः पश्यन्निदमन्यशरीरवत् "देहेन्द्रियगुणातीतो विचरेदिह लीलया" इत्युक्तत्वात् परकीयशरीरमिव उदासीनः सम्पश्यन् दृढापरोक्षात्मनिश्चयसम्पन्नः

वासना एव संसारः इति सर्वा विमुञ्चता ।
तत्त्यागो [38]वासनात्यागात् स्थितिरद्य यथासुखम् ॥ 384

नचाध्यात्माभिमानोऽपि विदुषोस्त्यासुरत्वतः ।
विदुषोऽप्यासुरी चेत्स्यात् निष्फलं ब्रह्मदर्शनम् ॥ 385

यो वेदालुप्तदृक्त्वमात्मनोऽकर्तृतां तथा ।
ब्रह्मवित्त्वं तथा मुक्त्वा स आत्मज्ञो न चेतरः ॥ 386

इत्यादिशास्त्रात् वर्णाश्रमसदाचारदुराचारकामक्रोधलोभदम्भ[39]दर्पकुहर क्रौर्य[40]शौर्यचौर्यशाठ्यमदमत्सरद्वेषकार्पण्य निन्दास्तुतिमानावमानेर्ष्या-गर्वासूयादयानैष्ठुर्यवाक्पारुष्यदिनानाविधचित्तविकाररहितः, स्त्रीवासनार्थवासना प्रतिष्ठावासनाकर्तुत्वभोक्तृत्वादिवासनाविवर्जितः, सर्ववासनानिवृत्त्यनन्तर-भाविनीमपि ब्रह्मज्ञोऽहमस्मीति अभिमानरूपां [41]ब्रह्मज्ञत्ववासनामपि अन्तः परित्यज्य [42]परिशुद्ध ब्रह्मस्वरूपमात्रः [43]सर्वपरिपूर्णरूपः नित्यस्स्वच्छश्शान्तो निष्प्रपञ्चः [44]यथा ह्याकाशवत् स्वस्मिन् परिकल्पितगन्धर्वनगरतद्विकारैः [45]असंस्पृष्टः एव तदाश्रयः परिदृष्टः । एवमेव स्वस्मिन् परिकल्पिताकाशादिदृश्यप्रपञ्चः तद्विकारैः [46]असंस्पृष्टः तदाश्रयः स्वयं निराश्रयः

38. क.ग.घ. वासनात्यागास्थिति । इ.च.छ.ज.झ. वासनात्यागास्थितिरप्ययथासुखम् ।

39. ग.घ.छ.झ. दर्पकुहकक्रौर्य ।

40. क.इ.च.छ.ज.झ. शौर्यशाठ्य ।

41. क.च. ब्रह्मजज्ञत्व ।

42. ग.घ. विशुद्धब्रह्म ।

43. झ. सर्वपरिपूर्णस्वरूपः ।

44. ग.घ. यथाह्याकाशः तस्मिन् ।

45. क.इ.च.छ.ज.झ. अस्पृष्टः एव ।

46. क.ग.घ. संस्पृष्टः ।

यथैवाकाशः [47]शुद्धाशुद्धसर्वघटबाह्याभ्यन्तरपरिपूर्णोऽपि कूटस्थनिर्विकारासंगः दृग्रूपत्वात् तदीयशुद्ध्यशुद्ध्यादि[48]विकारैः असंस्पृष्टः तथैव स्वयमपि **कुतः निष्फलं ब्रह्मदर्शनम्** ।

> [49]न चाध्यात्माभिमानोऽपि विदुषोऽस्त्यासुरत्वतः ।
> विदुषोऽप्यासुरी चेत्स्यान्निष्फलं ब्रह्मदर्शनम् ॥ 387

अत एव परमानन्दपरिपूर्णः जीवसाम्राट् ज्ञानाज्ञानस्मरणविस्मरणहानोपादान दाहच्छेदक्लेदनशेषणरागद्वेषोपेक्षादिव्यवहाराशक्यसर्ववाङ्मनसव्यवहारातीत सर्वव्यवहारालम्बनभूतातिविस्तीर्णाकाशबाह्याभ्यंतरपरिपूर्णः [50]ब्रह्मक्षत्रादिभेदभिन्नः जगदोदनमृत्यूपसेचनपरमकारणब्रह्मस्वरूपचैतन्य-प्रकाशमात्रः सन् आविर्भावतिरोभावसंकोचरहितः निर्लेपनिरुपाधिकनिरस्त-सकलविकारविधिप्रतिषेधविनियोगायोग्यप्रमाणाविषयसर्वप्रमाणसाक्षिभूत-चित्स्वरूपस्वज्ञानकल्पितस्वप्रकाशितसमस्तदृश्यप्रपञ्चग्रसनस्वभाव भावाभावविनिर्मुक्त सदेकस्वरूपः स्वात्मचैतन्य[51]महाकोटरान्तः स्वमनोविलासपरिकल्पितात्याश्चर्यकर[52]परिदृश्यमान कोटिकोटिब्राह्माण्ड-विस्तारबाह्याभ्यन्तरपरिपूर्णस्वस्वरूपापरविस्तारः परदृष्टिव्यपेक्षापरिदृष्टप्रबल-प्रारब्धकालेयकुलगलसमर्पितदेहप्राणेन्द्रियान्तःकरणादिसंघातात्मात्मीय-त्वाभिमानविवर्जितः काशी [53]रामेश्वरकाञ्चीपुरादिनानाविध-विचित्रदेशाननुसञ्चरन् कैश्चित्क्वचिद्वन्दितः क्वचिन्निन्दितः क्वचित्संस्तुतः क्वचिन्मानितः क्वचिदवमानितः क्वचित्तिरस्कृतः क्वचित्पुरस्कृतः क्वचित्सत्कृतः क्वचिद्धिक्कृतः क्वचिद्भूषितः क्वचिद्दूषितः क्वचिदर्चितः क्वचिच्चर्चितः,

---

47. क.ग.घ. शुद्धाशुद्धघटबाह्य ।
48. क.झ. विकारैरेव ।
49-50. ख.झ. पाठे एव वर्तते ।
51. ज.झ. महाकोटरान्तर स्वमनो ।
52. ख.ज. परिदृश्यमानानन्तकोटि ।
53. ख.ज. रामेश्वरादिनाना ।

क्वचिदुपेक्षितः **स्वारोपितमूढजन समाचार**परिप्राप्तमनोहर्षविषादतदभिव्यञ्जक-[54]मुखदैन्यविकाररहितः तथा तथा कुर्वन्तः तांश्च सर्वान् दुष्टशिष्टजनरूपप्रतिबिम्बपिशचानुपहसन् तत्सर्वप्रतिबिम्बपिशाचोच्छाटन-महोपायभूतबिम्बात्मसम्यग्दृष्टि महामूलिकाहस्तः स्वरूपानुसन्धाननिष्ठागरिष्ठः स्वमाहात्म्यपरिज्ञानपूर्वकपरिप्राप्तस्वचरणपरिचरणपरिशोधित स्वान्तशिष्यजनदेहात्म भ्रान्तिविषलतासमूलोन्मूलनसमर्थातिरिक्तपूर्णानन्दात्म-सम्यग्दर्शनतीक्ष्णकुद्दालप्रदानेच्छया एक वारं वक्तव्ये कोटिवारमुपदिशन् अन्यत्र कोटिवारं वक्तव्ये एकवारमप्यवदन् परिचर्यासमासक्तभक्तजनो परिस्वतपः सौभाग्यं विकिरन् क्वचिदास्तिकानां सन्मार्गं प्रदर्शयन् क्वचित्सम्पूर्णदयादृष्टिवह्निज्वालया नास्तिकपापजनानां पापतूलराशिं प्रदहन् [55]स्वसमानैकसमधिगम्यविनोदसञ्चारशीलः नित्यतृप्तः निराश्रयः परमानन्दास्वादमदमत्तः सन् ''हावू हावू हावू'' इति **तैत्तिरीयश्रुतीरितां ब्रह्मगीतिं** मनोविश्रान्त्यनुकरणरूपामनुगायन् स्वतेजसा सर्वमिदं विराजयन् [56]विरराज।

ब्रह्माऽभिन्नत्वविज्ञानं भवमोक्षस्य कारणम्।
येनाद्वितीयमानन्दं ब्रह्म सम्पद्यते बुधैः ॥ 388

वेदान्तवाक्येषु सदा रमन्तः भिक्षान्नमात्रेण च तुष्टिमन्तः।
अहर्निशं ब्रह्मसुखे रमन्तः कौपीनवन्तः खलु भाग्यवन्तः॥ 389

मूलं तरोः केवलमाश्रयन्तः पाणिद्वयं भोक्तुममन्त्रयन्तः।
अशोकमन्तःकरणे चरन्तः कौपीनवन्तः खलु भाग्यवन्तः॥ 390

**विषयपाशविनिर्मुक्तोपायः।**

यथा सर्गगतं सौक्ष्म्यादाकाशं नोपलिप्यते।
सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यते॥ 391

54. ख.ज. मुखे दैन्यादि।

55-56. ख.ज.झ. पाठेषु एव वर्तते।

इत्यादिशास्त्रात् [57]आकाश इव शुद्धाशुद्धसर्वदृश्यप्रपञ्च[58]बाह्याभ्यन्तर-परिपूर्णोऽपि कूटस्थनिर्विकारासंगदृग्रूपत्वात् तदीयशुद्ध्यशुद्ध्यादिविकारैः असंस्पृष्टः नित्यपरिशुद्धः नित्योदासीनः आकाशादपि विस्तीर्णस्वरूपः चिदाकाशमात्रः परमसुखैकस्वरूपः दूरीकृतसंसारः देहेन्द्रियादिगुणातीतः देवतास्पृहणीयशीलः सन् गृहारामक्षेत्रवित्तं पुत्रमित्रकलत्रमध्यस्थद्वेष्यजनतीक्ष्ण-दुष्कण्टकतरुगुल्मलताकीर्णे कामादिचोर[59]सुसञ्चारे, व्याधिव्याघ्रभयंकरे, मृत्युसिंहभयग्रस्ते, जरापिशाचीपरिवृते, दुरितराक्षसघोरे, तृष्णाव्रात्यासमाकुले, हर्षामर्षझंझानिलदूषिते, [60]दैन्यपर्वतसंकटे, स्वर्गनरकदुर्मार्गतिरोहितापवर्ग-सन्मार्गे, च संसारारण्येऽह्यनिर्वेदसंचारश्रान्तान्, पुण्यपापपाथेयान्, जीवपन्थान-मवलोक्यातिगम्भीरनीरां [61]परिमितविश्रान्तः तीर्त्वा [62]कश्चिन्मुष्करो यथानर्थकरं [63]मकरमानेतुमिच्छत्येवमेवायं मूढोऽपि लोकः एतावत्यतिघोरे संसारकष्टारण्ये संचरन् [64]जन्ममरणजरारोगगर्भनरकादिभिः क्लेशैः दुःखमेवानुभवति, सुखलेशमपि न जानाति, कटकटा! हा! इति सर्वेष्वपि भूतेषु ब्रह्मादिस्तम्भान्तेषु [65]परमकृपालुः सन् कामादिग्रस्तमूढजना-संश्लिष्टाऽऽशापाशविनि र्मुक्तः

क्रोधः एव यमः साक्षात्तृष्णा वैतरिणी नदी।
सन्तोषः नन्दनवनं [66]शान्तिरेव हि कामधुक्॥ 392

इत्युक्तत्वात् आशां वैतरिणीं नदीं, कामं नरकं, क्रोधं यमं मन्यमानः

---

57. ग.घ. आकाशादपि।

58. क.इ.ज. बाह्याभ्यन्तरपूर्णः विकूटस्थ।

59. क.इ.च.छ.ज.झ. दुस्संचारे।

60. ग.घ. दैन्यसंकटपर्वते।

61. क.ग.घ.इ.च.छ.ज. सरितमविश्रान्तः।

62. क.च.छ.झ. कश्चिन्नुष्करः।

63. ख.इ. मकरमासे तु।

64-65. क.ग.घ.झ. पाठेषु नास्ति।

66. क.इ.च.छ.ज. प्रशान्तिरेव हि।

न वैराग्यात्परं भाग्यं न ज्ञानानन्दपरं सुखं ।
न गुरोरपरस्त्राता न संसारात्परो रिपुः ॥ 393

[69]पुरे पौरान्पश्यन्नवयुवतिनामाकृतिमयान्,
सुवेषान् स्वर्णालङ्करणकलितान् चित्रसदृशान् ।
स्वयं साक्षी द्रष्टेत्यपि च कलयन्तैः सह रमन्,
मुनिर्न व्यामोहं भजति गुरुदीक्षाक्षततमाः ॥ 394

क्वचिद्बालैस्सार्थं करतलगतालैः स हसितैः,
क्वचित्तारुण्यालङ्कृत[67]नववधूभिस्सह रमन् ।
क्वचिद्वृद्धैः चिन्ताकुलितहृदयैश्चापि विलपन्,
मुनिर्न व्यामोहं भजति गुरुदीक्षाक्षततमाः ॥ 395

आदौ विजित्यविषयान् मदमोहराग
द्वेषादिशत्रुगणमाहृतयोगराज्याः ।
ज्ञात्वा मतं स मनुभूय [68]वरात्मविद्या
कान्तासुखं वनगृहे विचरन्ति धन्याः ॥ 396

तपोयज्ञदानादिभिः शुद्धबुद्धिः
विरक्तो नृपादौ पदे तुच्छबुद्ध्या
परित्यज्य सर्वं यदाप्नोति तत्त्वं
परंब्रह्म नित्यं [70]तदेवाहमस्मि ॥ 397

[71]सुरमन्दिरतरुमूलनिवासः शय्याभूतलमजिनं वासः ।
सर्वपरिग्रहभोगत्यागः कस्य सुखं न करोति विरागः ॥ (भजगोः २५) 398

---

67. ख. नववधूभिः । 68. ख.झ. परात्मविद्या ।

69-70. ख.झ. पाठे एव वर्तते ।

71. ग.घ. सुन्दरततरुमल । च.छ. सुन्दरमन्दिरं तरुमल ।

वैराग्यमेव परमं [72]भाग्यं सन्तोषः एव परमं सुखम् ।

इति च सम्पश्यन् उपशान्तिरेव कामधेनुरिति परिभावयन् राजस[73]तामसस्तुति [74]सेवाविदूरः,

क्षमया क्रोधमाच्छिंद्यात् कामं संकल्पवर्जनात् ।
सत्वसंसेवनाद्धीरः निद्रामुच्छेत्तुमर्हसि ॥ 399

निष्कल्मषं ब्रह्मचर्यं इच्छता विदुषा सदा ।
निद्रा सर्वात्मना त्याज्या स्वप्नदोषमवेक्षते ॥ 400

इत्युक्तत्वाच्च सात्विकवस्तुसेवाविजितनिद्रः सन्,

अक्रियैव परा पूजा मौनमेव परो जपः ।
अचिन्तैव परं ध्यानं अनिच्छैव परं सुखम् ॥ 401

[75]मौने मौनी गुणिनि गुणवान् पण्डिते पण्डितश्च,
दीने दीनः सुखिनि सुखवान् भोगिनि प्राप्तभोगः ।
मूर्खे मूर्खः युवतिषु युवा वाग्मिनि प्रौढ वाग्मी
धन्यः कोऽपि त्रिभुवनजयी [76]योऽवधूतेऽवधूतः ॥ 402

श्रुतिः तुर्यावस्था मननमसकृन्मौनकरणं,
निरालम्बं ध्यानं हृदयमनुसन्धिस्थिरमतिः ।
जपस्सोऽहंभावः [77]फलमिदमवांच्छाविहरणम्,
शिवे साक्षात्कारे सहजसुखसंवित्प्रभवति ॥ 403

इत्युक्तत्वादक्रियात्मपूजापरः मौनजपपरायणः चिन्ताध्याननिष्ठः अनिच्छा सुखरसिकः च भूत्वा,

---

72. क.ख.च.ज. भोग्यम् ।
73. क.ग.घ.च. तामसवस्तुसेवास्तुति ।
74. झ. सेनादिदूरः ।
75-76. क.ग.घ.च.छ. पाठेषु नास्ति ।
77. क.ग.घ.च.छ.ज. फलमिदमहंभाविहरणं । इ.ज. वितानपरिभूषिते । झ. वितानविभूषिते ।
78. क. वनितानंग ।

मही गुर्वी शय्या विपुलमुपधानं भुजलता,
वितानं चाकाशो व्यजमनुकूलोऽयमनिलः।
स्फुरद्दीपः चन्द्रः वितरति वनितासंगमुदितः
सुखं शान्तः शेते मुनिरमितभूतिर्नृप इव॥ 404

इत्यभियुक्तोक्तरीत्या विततकाश[78]वितानभूषिते, चन्द्रसूर्यप्रदीपप्रकाशिते, अनुकूलानिलव्यजनपवननिषेविते, श्रेयोर्थी धनिकसेवकजनपरिपूर्णे जाग्रत्पट्टणे,

आत्मानं रथिनं विद्याच्छरीरं रथमेव च।
बुद्धिं तु सारथिं विद्यान्मनः प्रग्रहमेव च॥ 405
(कठ. ३-३, पैङ्गलः ४-१, भवसः २-१०)

इन्द्रियाणि हयान्विद्याच्छब्दस्पर्शादिगोचरान्।
बुद्धीन्द्रियमनोयुक्तं विद्याद्भोक्तारमीश्वरम्॥ 406
(कठ. ३-४, पैङ्गलः ४-२, भवसं. २-१०)

इत्युक्तत्वात् इन्द्रियाश्वमनःप्रग्रहसारथियुक्तशरीररथारूढः प्रज्ञांगना[79]सहायः गृह्यर्पितोपहारः नित्यसन्तुष्टः धनिकानां [80]नानाविधदीनवार्ताः क्वाप्यशृण्वन्।

परिस्फुरति यस्यान्तः सत्यानन्दं चमत्कृतिः।
[81]ब्रह्मानन्दमिवाखण्डं लोकेशाः पालयन्ति तम्॥ 407

**गतं गतं सर्वमुपेक्षणीयम्।** लोकपालपरिपालितपुण्यशरीरः सर्वात्मभूतः सन्,

कृतं न कति जन्मनि कायेन मनसा गिरा।
[82]दुःखमायास्पदं कर्म तदद्याप्युपरम्यताम्॥ 408

---

79. क.इ.घ.ज. सहाये गृह्यर्पिताहारो।
80. क.ग.घ.च.छ.ज. नानाविधदीनार्ताः।
81. ख.ग.घ.ज. बाह्यमण्डलोकेशाः।
82. क.ग.घ.इ.च.छ.ज. दुःखमायासदं।

[83]तपोयज्ञदानादिभिः शुद्धबुद्धिः,
विरक्तो नृपादौ पदेतुच्छबुद्ध्या ।
परित्यज्य सर्वं यदाप्नोति तत्त्वं,
परंब्रह्म नित्यं [84]तदेवाहमस्मि ॥ 409

इत्युक्तरीत्या कर्मत्यागसुखरसिकत्वादैहिकामुष्मिकोदरोपस्थभोगसाधनभूत-लौकिकवैदिक सर्वकर्म [85]कलापानुष्ठानविक्षिप्त सर्वकारणानां कर्तृत्वाभिमानपाशबद्धानां मूढजनानां कायक्लेशं दृष्ट्वा हा! कष्टं मूढजीवितं। इत्यनुकम्पहृदयस्सन्

आयातमायातमवेक्षणीयं गतं गतं सर्वमुपेक्षणीयं ।
अलं वृथा खेदनमोदनाभ्यामलंघनीया हि गतिर्विधातुः ॥ 410

इत्युक्तत्वात्समतीतं शुभाशुभमुपेक्ष्य पुनरस्मरन् [86]शुभमशुभं वा भविष्यत्कार्यमचिन्तयन् [87]प्रारब्धप्रवाहापतितं शुभाशुभव्यापारमसक्तबुद्ध्या हसन्नेवानुवर्तमानः जगद्वञ्चकं कालं स्वप्रज्ञा कौशलातिशयेन वञ्चयन् विश्ववंद्यः यथेष्टसंचारशीलः धीरः दान्तः नित्यप्रबुद्धचित्तः स्वात्मसमाधिसम्पन्नः जगदिन्द्रजालद्रष्टा सन् प्राप्ताशेषपुरुषार्थः त्यक्ताशेषविशेषदुःखोधिगतपरमस्वास्थ्यः

[88]असङ्गृहीतवित्तस्य मितवाचो मनीषिणः ।
तस्य पापाद्विमुक्तस्य निरमित्रस्य किं भयम् ॥ 411

इति शास्त्रादसङ्गृहीतवित्तः [90]अमितवाक्यपापविनिर्मुक्तः निरमित्रः पेशलाचारमधुरः

---

83-84. क.ग.घ.च.छ.ज. पाठेषु नास्ति ।
85. च.छ. कलापविक्षिप्तसर्व ।
86-87. इ.ज. पाठे नास्ति ।
88-89. झ. पाठो नष्टः ।
90. क.ख.इ.ज.झ. अमितवाक्यः पाप च.छ. पाठे नास्ति ।

कपालं वृक्षमूलानि कुचेलमसहायता ।
'समता चैव सावस्मिन्नेतन्मुक्तस्य लक्षणं ।। 412

इत्यादिस्मृतेः निर्भयपात्रमात्रपरिग्रहः [91]गृहादिनियतनिकेतनरहितः पथिपतितजीर्णवासखण्डपरिवेष्टितगोप्यमात्रः निजजनमात्रपरिजनः सर्वसमबुद्धिः

आहारार्थं समीहेत युक्तं तत्प्राणधारणम् ।
तत्त्वं विमृश्यते तेन यद्विज्ञाय विमुच्यते ।। 413

यदृच्छयोपपन्नान्नमद्याच्छ्रेष्ठमुतापरम् ।
तथा वासस्तथा शय्या प्राप्तं प्राप्तं भजेन्मुनिः ।। 414

इत्यादिपुराणवचनात्पाणि[92]पात्रनिपतितमात्राशनादिव्यापारः[89] ;

मौनं योगासनं योगः तितिक्षैकान्त [93]शीलता
निस्पृहत्वं समत्वञ्च सप्तैतान्येकदण्डिनः ।। 415

इति स्मृतेः ''सदालापवर्जनरूपं मौनमुपाश्रितं सर्वासनशान्तिहरं शयनं तु शवासनमित्यादि[94]''योगशास्त्रात् सर्वपरिपूर्णप्रत्यगभिन्नब्रह्मतत्त्व-संयोजित[95]चित्तः शीतोष्णसुखदुःखमानावमानादिद्वंद्वसहनशीलः एकान्तवाससुखरसिकः ।

न तथा भाति पूर्णेन्दुः न तथा क्षीरसागरः ।
न लक्ष्मीवदनं कान्तं स्पृहाहीनं यथा [96]मनः ।। 416

गोष्पदी पृथिवीमेरुः स्थाणुराशा[97]स्समुद्रिका
तृणं त्रिभुवनं राम नैराश्चलं कृता[98]कृतेः ।। 417

---

91. च.छ. गृहादिरहितः । ख.इ.ज. गृहादिनियतसंकेतनरहितः ।

92. च. पात्रपतितमात्रा क.ग.घ.इ.ज.झ. पात्रनिपतितनिपतितमात्राशनादि ।

93. क.इ.च.छ. शिक्तता ।

94-95. क.इ.च. पाठेषु नास्ति ।

96. क.ख.इ.झ. मरः ।

97. क.ख.इ.झ. स वर्गिका ।

98. क. कृतिः । ग.घ.इ.ज. कृतैः ।

वेत्ति नित्यमुदारात्मा त्रिलोकीमपि यस्तृणम् ।
तं त्यजन्त्यापदस्सर्वाः [99]पशुर्यद्वज्जरत्तृणम् ॥ 418

[100]तेनाधीतं श्रुतं तेन तेन सर्वमनुष्ठितम्
येनाशां पृष्ठतः कृत्वा नैराश्यमवलम्बितम् ॥ 419

निस्पृहं मानसं यस्य नैराश्येऽपि [101]महात्मनः ।
तस्यात्मज्ञानतृप्तस्य तुलना केन जायते ॥ 420

इत्यादिशास्त्रादैहिकामुष्मिकोदरोपस्थादिविषयसुखोपभोगस्पृहाहीनः [102]क्वापि विषमबुद्धिरहितः प्रबलप्रारब्धवशपरिप्राप्तदेहेन्द्रियान्तःकरणादिव्यापाररूप पुण्यपापक्रियासु कर्तृत्वाभिमानं तन्मूलपरिप्राप्तमनोहर्षविषादौ तदभिव्यजकमुखदैन्यविकासौ च परित्यज्य जगन्मिथ्यात्वनिश्चयपूर्वक-बिम्बानन्दात्ममात्रसत्यत्वसम्यग्दर्शनेन कार्यज्ञेयसमाप्तेः सर्वदा [103]प्रसन्नचित्तः विकसितमुखः [104]दुष्टशिष्टजनसंगविदूरः सन्,

या निशा सर्वभूतानां तस्यां [105]जागर्ति संयमी ।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥ (भग. २-६९) 421

बुद्धितत्वस्य [106]लोकोऽयं जडोन्मत्तः पिशाचवत् ।
बुद्धितत्वोऽपि लोकोस्य जडोन्मत्तः पिशाचवत् ॥ 422

इत्यादिशास्त्रादैहिकोदरोपस्थोपभोगसाधनभूतकृषिवाणिज्यसेवायांचनादि लौकिकव्यापारलम्पटेभ्यो दुष्टेभ्यः आमुष्मिकोदरोपस्थोपभोगसाधनभूत-कर्मोपासनादि वैदिकव्यापारलम्पटेभ्यः [107]शिष्टेभ्यः च आत्मानमात्मनः तांश्च

---

99. ग.घ.ज. पशुर्यध्वजस्तृणाम् ।

100. क.च.छ.झ. नाधीतं ।

101-102. च.छ. पाठे नास्ति ।

103. इ.झ. आसन्न चित्तः ।

104. झ. दुष्टजनसंगः ।

105. च.छ. जाग्रतसंय्यमी ।

106. इ.ज. लोकोऽयं ।

107. इ.ज. दुष्टेभ्यश्च । क.छ.ज.झ. शिष्टेभ्यश्चात्मनः तांश्च ।

पृथङ्मन्यमानः कदापि तैरसंश्लिष्टः "सर्वं खल्विदं ब्रह्म" (त्रि. वि. महाना: १-३, निरालम्ब: ११, गन्धर्व: ६, छा. ३-४१-१, महो. ४-११९)

विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि ।
शुनिच्चैव श्वपाके च पण्डितास्समदर्शिनः ॥ 423

ब्राह्मणे [108]वुल्कले स्तेने ब्रह्मण्यर्केस्फुलिङ्गके ।
अक्रूरे क्रूरके चैव समदृक्पण्डितो [109]मतः ॥ 424

चण्डालदेहे पश्वादिशरीरे ब्रह्मविग्रहे ।
अन्येषु तारतम्येन स्थितेषु पुरुषोत्तमः ॥ 425

एकरूपो महादेवः स्थितस्सोऽहं परामृतः ।
इति यो वेद वेदान्तैः [110]सोऽतिवर्णाश्रमी भवेत् ॥ 426

[111]इत्यादिशास्त्रात्तेषु च दुष्टशिष्टरूपेषु सर्वेष्वपि [112]प्राणिषु परमकारणमद्वितीयमेकमेव साक्षिणं आत्मानं सम्पश्चन् ।

परस्वभावकर्माणि न प्रशंसेन्न गर्हयेत् ।
विश्वमेकात्मकं पश्यन् प्रकृत्या पुरुषेण च ॥ 427

परस्वभावकर्माणि यः प्रशंसति निन्दति ।
स आशु भ्रश्यते स्वार्थादसत्याभिनिवेशतः ॥ 428

इत्याद्युक्तत्वात्तेषां दुष्टशिष्टजनानां शान्ताघोरमूढवृत्तीः तन्मूलानि कर्माणि चाकीर्तयन् न दूषयन् च "उदरमन्तरं कुरुते" "अथ तस्य भयं भवति" (तैत्ति. २-७) "मृत्योस्समृत्युमाप्नोति य इह नानेव पश्यति" (कठ: ४-१०, आ.प्र.

---

108. क.ग.घ.इ.च.छ. वुल्कसे ।
109. क.ग.घ.इ.ज.झ. मत्तः ।
110. ग.घ. सोऽवतीर्णाश्रमी ।
111. ख.च. इत्यादिशास्त्रान्तेषु च ।
112. क.इ.च.ज.झ. प्राणेषु ।

१) ''सर्वं तं परादाद्योन्यत्रात्मनः सर्वं वदेत्'' (बृहदाः ४-५-७)
इतिश्रुत्या भेदज्ञानस्य संसारनरकहेतुत्वेन निन्दितत्वात् ।

विभेदजनके ज्ञाने नाशमात्यंतिकं गते ।
आत्मनो ब्रह्मणो [113]भेदमनन्तं कः करिष्यति ॥ 429

सर्वशक्तिकरं ब्रह्म सर्वमापूर्यसंस्थितम् ।
अहमन्यः [114]इदञ्चान्यदिति भ्रान्तिं त्यजानघ ॥ 430

इत्युक्तत्वात्तेऽप्यन्ये मूढाः अहमप्यन्यो ब्रह्मज्ञः इति भेदभ्रान्तिविषज्ञतामेकात्म भावनया खण्डयन्,

शून्यमाकीर्णतां [115]यति मृतिरप्युत्सवायते ।
आपत्सम्पदिवाभाति विद्वज्जनसमागमे ॥ 431

**कः परममोक्षसाधनहेतुः ।**

[116]महानुभावसम्पर्कः कस्य नोन्नतिकारणम् ।
अशुच्यपि पयः प्राप्य गङ्गां याति पवित्रताम् ॥ 432

इत्युक्तत्वाद्विद्वज्जनसङ्गस्य सर्वापन्निवारकत्वात् सर्वश्रेयः प्रापकत्वाच्च । यत्र क्वापि सति सम्भवे वैराग्यबोधः [117]परममहाधनसाधुविद्वज्जन[118]सङ्गः सन् सर्वपदार्थापेक्षाबुद्धियुक्तः कुशलाकुशलक्रियाविदूरः, शुभाशुभसङ्केतशून्य-स्वप्रकाशबिम्बानन्दात्मसम्यग्दर्शनौषधसेवाप्रशमिताशाविषूचिकः विनष्टेष्टानिष्टदृष्टिः सन् वेदान्तशास्त्रसम्यग्विचारमहाग्निज्वालया सर्ववेदशास्त्रपुराणतदुक्तकर्मोपासनागुर्वीश्वरविधिप्रतिषेधादिवासना[119]दावदहनं कुर्वन् प्रत्यगभिन्न[120]ब्रह्मतत्त्वसाक्षात्कारचण्डसूर्यप्रकाशेन मूलाज्ञानान्धतमः पटलं परितः परिहरन्,

---

113. इ.ज. भेदमसन्तम् ।
114. च. इदमानन्दति ।
115. क.इ.च.छ. मेति ।
116. क.ग.घ.इ.च.छ.ज. महासुखावसम्पर्कः ।
117. क.इ.च.छ.ज.झ. परमकहाजन ।
118. क.इ.च.छ.ज. संगस्संगत्यसर्व ।
119. ख.ग.घ. दावदहनदृक् प्रत्यगभिन्न ।

सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
सम्पश्यन्नात्मयाजी स्यात्स्वाराज्यमधिगच्छति ॥ 433

इत्यादिशास्त्रात्स्वाध्यस्तव्यष्टिसमष्ट्यात्मकेऽस्मिन् प्रपञ्चे सर्वस्मिन् परमाधिष्ठानरूपं परमकारणरूपेणावस्थितमात्मानं फेनादिविकारे सलिलमिव, मरुवारिणि मरुभूमिमिव स्वप्ने तत्साक्षिणमिव च सम्पश्यन् परमाधिष्ठानरूपपरमकारणरूपेणावस्थिते स्वात्मनि स्वाध्यस्तं व्यष्टसमष्ट्यात्मकं प्रपञ्चं सर्वमपि सलिले फेनादिविकारमिव [121]मरुभूमौ मरीचिकाजलमिव स्वप्नसाक्षिणि स्वप्नसाक्षिणि स्वप्नमिव च विचारचक्षुषा मिथ्येत्यपि पश्यन् "आत्मैवेदं सर्वं ब्रह्मैवेदं सर्वं" (छा. ७-२५-२)

यथा स्वप्नप्रपञ्चोऽयं स्वयं [122]स्यात्स्वप्रबोधतः ।
तथा जाग्रत्प्रपञ्चोऽपि स्वयं स्यात्स्वात्मबोधतः ॥ 434

इत्यादिशास्त्रात्सलिलमिव फेनादिरूपं मरुभूमिरिव [123]मरुवारिरूपात् स्वप्नसाक्षीव [124]स्वप्नरूपः परिदृश्यमानयोरपि नामरूपयोरधिष्ठाना-त्मव्यतिरेकेण (वा) निपुणतरैरप्यनिरूप्यत्वेनान्त्यन्तासत्वात् तदुभयापेक्षायामवशिष्ठानां सत्तास्फुरत्तानन्दानां अधिष्ठानात्मस्वरूपत्वादिदं सर्वमहमेवेति निस्संशयं पश्यन् "नेह नानास्ति किञ्चन" (कठः ४-११, बृहदाः ४-४-१९, त्रि.वि.महानाः ३-३, अध्यात्मः ६३, निरालम्बः ११) इत्यादिश्रुत्या दृश्यजातस्यान्त्यन्तमिथ्याभूतत्वात् मरुवारिमरुभूमिरिव किमप्येतन्नाहमिति निश्चित्य सर्वबाह्याभ्यन्तरपरिपूर्णचैतन्यप्रकाशमात्रस्सन् "यस्य च ब्रह्म च [125]क्षत्रं च उभे भवत ओदनः" "मृत्युर्यस्योपसेचनं" (कठ. २-२४)

---

120. झ.ञ. अनन्तत्वसाक्षात्कार ।
121. ग.घ. मरुभूमौ मरुवारिवत्स्वप्न ।
122. क.इ.ख.ग.घ. स्यात्स्वप्नबोधतः ।
123. इ.ज. मरुवारिरिवस्वप्न । ग.घ. मरुवारिरूपा।
124. ग.घ. स्वप्नरूपतः ।
125. ग.घ.झ. क्षत्रं च ह्युभे भवत ।

> कालः पचति भूतानि सर्वाण्येवात्मनात्मनि।
> यस्मिंस्तु पच्यते कालः तं न वेदेह कश्चन॥ (मैत्रा: ६-१५) 435

> ब्रह्माण्डाः [126]बहवो ग्रस्ताः निगीर्णाः रुद्रकोटयः।
> भुक्तानि [127]विघ्नबृन्दानि क्व नु शक्ताः वयं मुने॥ 436

इत्यादिशास्त्रात् [128]ब्रह्माण्डनिचयनिर्माणनिपुणब्रह्मकोटीः तन्निर्मितब्रह्माण्ड-संरक्षणानुकूलनानाविधावतारवद्व[129]हुरक्षो विहिंसकविष्णुबृन्दानि ईक्षणमात्रात् तत्सर्वभक्षकस्वमात्रावशिष्टरुद्रपंक्तिश्च निरवशेषमात्मचैतन्योदरे [130]ग्रसित्वा चावशिष्टं परमकारणाद्वितीयपरिपूर्णबिम्बानन्द[131]चिन्मात्रब्रह्मचैतन्य प्रकाशस्वरूपं तदेवाहमस्मीति सम्यक् निश्चित्याविस्मरन् आत्मारामस्सन् प्रारब्धवशात्संसरन्नपि कस्य वेदं शरीरमित्युपेक्षाबुद्धियुक्तः [132]देहाभास जगदाभासावनुभवन्नपि समतीतस्वप्नमात्रमिदमिति मत्वा सत्यत्वबुद्धिं परित्यज्य [133]तत्रात्यासक्तिविवर्जितः "कस्य वाऽयं लोको न ममेति" उदासीनबुद्धिः सन् "अव्यक्तलिङ्गोऽव्यक्ताचारः [134]अनुन्मत्ताः उन्मत्तवदाचरन्ति" (पर.परि ८) इत्यादिश्रुतेः,

> यन्नसन्तं नचासन्तं वा श्रुतं न बहु श्रतम्।
> न सुवृत्तं न दुर्वृत्तं वेद कश्चित्स ब्राह्मणः॥ (ना.प. ४-३४) 437

> अव्यक्तलिङ्गोऽव्यक्तार्थोह्यजडो जडवन्मुनिः।
> उन्मत्तवदनुन्मत्तो विचरेदिहलीलया॥ (ना.पू. ५-३४) 438

---

126. क.ग.घ. वलययो। च.छ.झ. वलयो। 127. क.ग.घ.इ.च.छ.ज. विष्णुबृन्दानि।
128. क.इ.ग.घ.च.छ.ज. ब्रह्माण्ड निचय। 129. बहुरक्षो निर्हिसक। झ. तद्वहुरक्षो विवांसक।
130. क.ग.घ.इ.च.छ.ज. ग्रसित्वा यदवशिष्टं। 131. क.ग. सन्मात्रब्रह्म। ख.घ. सन्मात्रचैतन्यप्रकाश।
132. ग.घ. निरीहः चिदाभासावनुभवन्नपि। 133. ग.घ. तत्राप्यासक्ति।
134. क.इ.च.छ. अनुस्मर्ता।

प्रमत्तो वा जडः शूद्रो मुनिः कापालिकोऽधुना।
पश्यतां संशयन् कुर्वन् विचरेदिह लीलया॥ 439

चण्डालः किमयं द्विजातिरथवा शूद्रोऽथ किं तापसः,
किं वा [135]तत्त्वनिवेशपेशलमतिः योगीश्वर कोऽपि किम्।
इत्युत्पन्नविकल्पजल्पमुखरैराभाष्यमाणा जनैः,
न क्रुद्धाः पथिनैव तुष्टमनसो यान्ति स्वयं योगिनः॥ 440

इत्याद्यभियक्तोक्तेश्चाव्यक्तलिङ्गः अव्यक्ताचारः,

[136]एकचार्यनिकेतस्यादप्रमत्तो महाश्रयः।
अलक्ष्यमाणा आचारैर्मुनिरेकोल्पभाषणः॥ 441

इत्याद्युक्तरीत्या एकचारी सन् "तस्माचैन्नप्रमाद्यति, शरीरे पाप्मनो हित्वा, सर्वा कामान् समश्नुत इति" (तै. २-५) इत्यादिश्रुतेः स्वस्वरूपानुसन्धाने कदाप्यप्रमत्तः गिरिगृहाद्येकान्तविहारचतुरः।

परलोकभयं यस्य नास्ति मृत्युभयं तथा।
तस्यात्मज्ञस्य शोचास्युः सः ब्रह्मेन्द्राः अपीश्वराः॥ 442

इत्यादिभगवद्भाष्यकारोपदेशात् [137]परलोकभयरहितः मृत्युभयविवर्जितः निर्व्याजशान्तचित्तः, बन्धमोक्षनिराकांक्षः, सर्वातीत[138]सर्वपरिपूर्णब्रह्मानन्द-चैतन्यप्रकाशस्वरूपोऽहमिति सम्यग्दृष्टिमवष्टभ्य विस्मरणासम्भावनाविपरीत [139]भावनादिरहितस्वस्वरूपचैतन्यप्रकाशेन प्रकाशमानः ब्राह्मणः, जीवन्मुक्तः, स्थितप्रज्ञः, भगवद्भक्तिगुणातीतब्राह्मणादि[140]वर्णाश्रमादिशब्दैः अभिधीयमानः, [141]सशरीरोप्यशरीर इव कृतार्थः सन्, एतच्छरीराम्भकप्रारब्ध-

---

135. ग.घ. तत्त्वनिरेशवेशलमतिः।
136. क.छ. एकभार्यानिकेतस्य।
137. च.छ. परलोकभयवर्जितः।
138. ग. सर्वपरिपूर्णानन्दचैतन्य।
139. ख.ग. भावनारहितः।
140. क.घ.च.ज. वर्णाश्रमिशब्दैः।
141. ख.ग. स शरीरेष्वशरीर इव।

क्षयसमये गङ्गोदके [142]वा रथ्योदके वा काश्यां वा कीकारण्ये वा देवतागारे वा चण्डालकुटीरे [143]वा स्वरूपस्मरणरहितः वापस्मारग्रस्तः वा यत्र क्वापि शरीरं परित्यजन् ज्ञानसमकालविमुक्तः हतशोकः परममोक्षानन्दरूपं प्राप्य [144]स्वतो [145]न्यूनाधिक भावाभावादीश्वरादिबिम्बानन्दभूतस्वस्वरूपा[146]वस्थानरूपं परममोक्षमवाप्नोति । ''ब्रह्मविदाप्नोति परं'' (तैत्तिः २-१-१, भस्मजाः २-७) ''ब्रह्मवेद ब्रह्मैव भवति'' (मुण्डः ३-२-९) ''तरति शोकमात्मवित्'' (छा. ७-१-३) इत्यादिवेदान्तेभ्यः । भवन्ति चात्रश्लोकाः । **कं जीवन्मुक्तमुच्यते** ।

यथा स्थितमिदं यस्य व्यवहारवतोऽपि च ।
अस्तं गतं स्थितं व्योम स जीवन्मुक्त उच्यते ॥ 443

यो जागर्ति सुषुप्तस्थो यस्य जाग्रन्न विद्यते ।
यस्य निर्वासनोबोधः स जीवन्मुक्त उच्यते ॥ 444

[147]रागद्वेष भयादीनां अनुरूपं चरन्नपि ।
योऽन्तर्व्योमवदत्यच्छः स जीवन्मुक्त [148]उच्यते ॥ 445

[149]यस्मान्नो द्विजते लोकः लोकान्नो द्विजते च यः ।
हर्षमर्षभयान्मुक्तः स जीवन्मुक्त उच्यते ॥ 446

यस्समस्तार्थजातेषु [151]व्यवहार्यविशीलतः ।
परार्थैष्विव पूर्णात्मा स जीवन्मुक्त उच्यते ॥ 447

---

142. च. वारण्योदके ।
143. ग.घ. वा शरीरस्मरणरहितः ।
144. ख.इ. गतो ।
145. ग. न्यूनाधिक भावादिनिस्पृहः बिम्बानन्द । झ. न्यूनाधिक ईश्वरादिबिम्बानन्द ।
146. ग. अवस्थानेन रूपं ।
147-148. क.ख.ग. पाठे नास्ति ।
149-150. ग.घ. पाठे नास्ति ।
151. क.च.छ.झ. व्यवहार्यपि शीलतः ।

यस्स्त्वन्त: जागरूक: सन् बहि: निद्रां करोति च ।
नाहं धीर्यस्य देहादौ स जीवन्मुक्त[150]उच्यते ॥ 448

देहेन्द्रियगुणातीतं स्वात्मानं सर्वसाक्षिणम् ।
यो जानाति परं पूर्णं स जीवन्मुक्त उच्यते ॥ 449

[152]देहेन्द्रियमन:प्राणैरलिप्तो व्योमवत्सदा
ज्ञप्तिमात्रपरो यस्तु स जीवन्मुक्त उच्यते ॥ 450

[153]पूर्णो मयि धिया युक्तो देहादिरनुवर्तते ।
छायावदिति यो वेत्ति स जीवन्मुक्त [154]उच्यते ॥ 451

[155]मनोमात्रमिदं सर्वं य: पश्यति निरन्तरम् ।
स्वप्नवत्स्वात्म[157]निस्सारे स जीवन्मुक्त [156]उच्यते ॥ 452

तदेवाहमिति ज्ञात्वा यद्ब्रह्माण्डप्रकाशकम् ।
साक्षी सन् पश्यतीदं य: स जीवन्मुक्त उच्यते ॥ 453

मयि नित्यचिदादर्शे जगत्सर्वं प्रतीयते ।
इत्थं विचिन्त्यते येन स जीवन्मुक्त उच्यते ॥ 454

आत्मानात्मविवेकेन य: कर्मभ्यो विमुच्यते
[158]कामादिभ्यस्तथावैशु स जीवन्मुक्त उच्यते ॥ 455

स्वात्मत्वेन जगत्सर्वं भावयन् योऽवतिष्टते
स्वात्मानमात्मना मत्वा स जीवन्मुक्त [159]उच्यते ॥ 456

---

152. क.ग.इ.च.ज.झ. देहप्राणेन्द्रियगुणै: ।

153-156. च. पाठे नास्ति ।

157. क.ग.इ.छ.ज.झ. निस्फारे ।

158-159. इ.ज. पाठे नास्ति ।

पक्षोन्मेष निमेषाभ्यां उपसंहृत्य चक्षुषी ।
[160]ज्ञायते चित्सुखं येन स जीवन्तमुक्त उच्यते ॥ 457

जगद्विवर्तरूपेण विष्णुरेव विजृम्भते ।
सोऽहमित्येव यो वेत्ति सजीवन्मुक्त उच्यते ॥ 458

प्रजहाति यथा कामान् सर्वान् पार्थ मनोगतान् ।
आत्मन्येवात्मना [161]तुष्टस्स्थितप्रज्ञः तदोच्यते ॥ (भग. २-५५) 459

दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः
वीतराग भयक्रोधो स्थितधीमुनिरुच्यते ॥ (भग. २-५६) 460

यः सर्वत्रानभिस्नेहः तत्तत्प्राप्य शुभाशुभम् ।
नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥ (भग. २-५७) 461

तस्माद्यस्य महाबाहो निगृहीतानि सर्वशः ।
इन्द्रियाणि इन्द्रियार्थेभ्यो तस्य प्रज्ञा प्रतिष्ठिता ॥ (भग. २-६८) 462

न प्रहृष्येत्प्रियं प्राप्य नोद्विजेत्प्राप्य चाप्रियम् ।
स्थिरबुद्धिरसंमूढो ब्रह्मविद्ब्रह्मणि स्थितः ॥ (भग. ५-२०) 463

यदा विनियतं चित्तमात्मन्येवावतिष्ठते ।
निस्पृहः सर्वकामेभ्यो युक्त इत्युच्यते तदा ॥ (भग. ६-१८) 464

यदा दीपो निवातस्थो नेन्दते सोपमा स्मृता ।
योगिनोयतचित्तस्य युञ्जतो योगमात्मनः ॥ (भग. ६-२०) 465

यत्रोपरमते चित्तं निरुद्धं योगसेवया ।
यत्र चैवात्मनाऽत्मानं पश्यन्नात्मनि तुष्यति ॥ (भग. ६-२०) 466

---

160. ख.इ. जायते ।

161. च. दुष्टः । क. तुष्टस्स्थिरप्रज्ञः तथोच्यते ।

सुखमान्त्यन्तिकं यत्तत् बुद्धिग्राह्यमतीन्द्रियम् ।
वेत्ति यत्र नचैवायं स्थितश्चलति तत्वतः ॥ (भग. ६-२१) 467

यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः ।
यस्मिन् स्थितौ न दुःखेन गुरुणापि [162]न चाल्यते ॥ (भग. ६-२२)468

तं विद्यात् दुःखसंयोगं वियोगं योगसंज्ञितं ।
[163]स निश्चयेन योक्तव्यो योगो निर्विण्णचेतसा॥ (भग. ६-२३)469

संकल्पप्रभवान् कामान् त्यक्त्वा सर्वानशेषतः ।
मनसैवेन्द्रियग्रामं विनियम्य समं ततः ॥ (भग. ६-२४) 470

शनैः शनैरपरमेद्बुद्ध्या धृतिगृहीतया ।
आत्मसंस्थं मनः कृत्वा न किञ्चिदपि चिन्तयेत् ॥ (भग. ६-२५) 471

यतो यतो निश्चलति मनः चञ्चलमस्थिरम् ।
ततो ततो नियम्यैतदात्मन्येव वशं नयेत् ॥ (भग. ६-२६) 472

प्रशान्तमानसं [164]ह्येनं योगिनं सुखमुत्तमम् ।
उपैति शान्तरजसं ब्रह्मभूतमकल्मषम् ॥ (भग. ६-२७) 473

युञ्जन्नेवं सदात्मानं योगी विगतकल्मषः ।
सुखेन ब्रह्मसंस्पर्शमत्यन्तं सुखमश्नुते ॥ (भग. ६-२८) 474

अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च ।
निर्ममो निरहङ्कारः समदुःखसुखक्षमी ॥ (भग. १२-१३) 475

सन्तुष्टः सततं [165]योगः यतात्मा दृढनिश्चयः ।
मय्यर्पितमनोबुद्धिः यो मद्भक्तस्समे प्रियः ॥ (भग. १२-१४) 476

---

162. क.ग.इ.च.छ.ज.झ. विचाल्यते ।
163. क.इ.च.छ.झ. न निश्चयेन ।
164. क.ग.इ.छ.ज.झ. ह्येवं ।
165. क.इ.छ.ज.झ. योगी ।

[166]यस्मान्नो द्विजते लोकाः लोकान्नो द्विजते च यः।
हर्षमर्षभयोद्वेगैः मुक्तः स च मे प्रियः॥ (भग. १२-१५) 477

अनपेक्षः शुचिर्दक्षः उदासीनो गतव्ययः।
सर्वारम्भपरित्यागी यो मद्भक्त स मे [167]प्रियः॥ (भग. १२-१६) 478

यो न हृष्यति न द्वेष्टि न शोचति न कांक्षति।
शुभाशुभपरित्यागः भक्तिमान् यः समे प्रियः॥ (भग. १२-१७) 479

समः शत्रौ च मित्रे च तथा मानावमानयोः।
शीतोष्णसुखदुःखेषु समः संगविवर्जितः॥ (भग. १२-१८) 480

तुल्यनिन्दास्तुति[168]मौनी सन्तुष्टो येन केनचित्।
अनिकेतस्थिरमतिः [169]भक्तिमान् यः समे प्रियः॥(भग. १२-१९) 481

प्रकाशं च प्रवृत्तिं च मोहमेव च पाण्डव।
[170]न द्वेष्टि संप्रवृत्तानि न निवृत्तानि कांक्षति॥ (भग. १४-२२) 482

उदासीनवदासीनो गुणैर्यो न विचाल्यते।
गुणावर्तन्त इत्येव योऽवतिष्ठति नेङ्गते॥ (भग. १४-२३) 483

[171]समदुःखसुखस्वस्थः समलोष्टाश्म काञ्चनः।
तुल्यप्रियाप्रियो धीरः तुल्यनिन्दात्मसंस्तुतिः॥ (भग. १४-२४) 484

मानावमानयोस्तुल्यः तुल्यो मित्रारिपक्षयोः।
सर्वारम्भपरित्यागी गुणातीतः स उच्यते॥ (भग. १४-२५) 485

मां च योऽव्यभिचारेण भक्तियोगेन सेवते।
स गुणान् समतीत्यैतान् ब्रह्म भूयाय कल्पते॥ (भग. १४-२६) 486

---

166-167. क.ग.इ.च.ज. पाठे नास्ति।

168. क.छ.झ. मौनसन्तुष्टाः मे न केनचित्।

169. इ.ज. भक्तिमान् मे प्रियो नरः।

170. क.छ.झ. न त्वष्टिः।

171. क.ज.झ. समदुःखसुखस्व स्वः।

निराशिषमनारम्भं निर्नमस्कारमस्तुतिम् ।
अक्षीणं क्षीणकर्माणं तं देवा ब्राह्मणं विदुः ॥ 487

[172]विमुक्तस्सर्वभूतेभ्यः मुनिराकाशवत्स्थितः ।
यस्मिन्वाचा प्रविशन्ति कूपे क्षिप्ताः शिलाः [173]इव ॥ 488

अनुत्तरीयवसनं अनुपस्थीर्णशायिनं
बहूपधानं [174]शाम्यं तं तं देवाः ब्राह्मणं विदुः ॥ 489

[175]कन्धाकौपीनवासास्तु दण्डधृद्ध्यानतत्परः ।
एकाकी रमते नित्यं तं देवाः ब्राह्मणं विदुः ॥ 490

[176]विमुक्तः सर्वसङ्गेभ्यः मुनिराकाशवत्स्थितः ।
यस्तमेकचरं शान्तं तं देवाः ब्राह्मणं विदुः ॥ 491

यस्मिन्वाचा प्रविशन्ति [178]कूपे क्षिप्ताः शिलाः इव ।
न वक्तारं पुनर्यान्ति तं देवाः ब्राह्मणं [177]विदुः ॥ 492

येन केन चिदाच्छन्नो [179]येन केन चिदा स्थितः ।
[180]यत्र कुत्र च शायी स्यात्तं देवाः ब्राह्मणं विदुः ॥ 493

अहेरिव [181]गुणाद्भीतः [182]सम्मानान्नरकादिव
कुणपादिव यः स्त्रीभ्यो तं देवाः ब्राह्मणं विदुः ॥ 494

---

172-173. क.इ.च.छ.ज. पाठेषु नास्ति । 174. क.ख. शाम्यानां तं देवाः ।

175. क.घ. कन्या कौपीनहस्तास्तु । च.छ. कथं कौपीन वासास्तु । इ. श्लोकोऽयं अस्मिन् पाठे नास्ति।

176. क. विमुक्तः सर्वसंगीयः । 177. ग.घ. पाठे नास्ति ।

178. क.ग.घ.छ. कूले । 179. क.ग.घ.छ. केन केन । इ.च.ज.झ. येन केन चिदाशितः ।

180. ग.घ. यत्र क्व चर शायी च स्यात् । 181. च.छ. ऋणाद्भीतः ।

182. ग.घ. समानान्नरकादिव । इ. सम्मानान्मरणादिव । ज. सम्मानास्मरणादिव ।

न कुप्येन्न प्रहृष्येच्च [183]मानितो मानितश्च यः ।
सर्वभूतेष्वभयदः तं देवाः ब्राह्मणं विदुः ॥ 4

येन पूर्णमिवाकाशं भवत्येकेन सर्वदा
शून्यं [184]यस्य जनाकीर्णं तं देवाः ब्राह्मणं विदुः ॥ 4

[185]जन्मना यस्तु निर्विण्णः मरणे न च कर्मभिः ।
आधिभिर्व्याधिभिः दुःखैः तं देवाः ब्राह्मणं विदुः ॥ 4

सर्वद्वन्द्वसहो धीरो नीचैः सङ्गविवर्जितः ।
[186]सर्वभूतहितो मैत्रः तं देवाः ब्राह्मणं विदुः ॥ 4

न जातिकारणं [187]पुंसां गुणाः कल्याणकारणम् ।
[188]आत्मस्थमपि चण्डालं तं देवाः ब्राह्मणं विदुः ॥ 4

[189]वने वृक्षान् पश्यन् दलफलभरान् नम्रसुशिखान्,
धनच्छायाच्छन्नान् बहुलकलकूजद्द्विजगणान् ।
भजन् घस्रो रात्रादवनितलकल्पैकशयनो
मुनिर्न व्यामोहं भजति गुरुदीक्षाक्षततमाः[190] ॥ 5

---

183. ग.घ. मासितो मानितश्च ।
184. क.घ.इ. यः स्वः जनाकीर्णं ।
185. क.घ.च. यन्मना ।
186. ग.घ. सर्वभूतवातो मैत्रः ।
187. क.ग.घ.इ.ज.झ. तत्र गुणाः ।
188. इ.च.छ.ज.झ. वृत्तस्थमपि ।
189-190. क.ग.घ.इ.च.छ.ज. पाठेषु नास्ति ।

[191]क्वचिद्बालैस्सार्धं करतलगतालैः सहसितैः,
क्वचित्तारुण्यालङ्कृत नववधूभिः सह रमन्।
क्वचित् वृद्धैः चिन्ताकुलित हृदयैश्चापि विलपन्
मुनिर्न व्यामोहं भजति गुरुदीक्षाक्षत[192]तमाः॥ 501

योऽवस्थात्रयनिमुक्तमवस्थात्रयसाक्षिणं।
आत्मानं ईश्वरं वेद [193]सोऽतिवर्णाश्रमी भवेत्॥ 502

इत्याद्यनवद्यम्।

**इति श्रीकम्भम्पाटि अमरेश्वरशास्त्रिकृत**

**अज्ञानध्वान्तचण्डभास्करे जीवन्मुक्तस्वरूपविचारो नाम**

नवमप्रकरणं समाप्तम्।



191-192. क.ग.घ.इ.च.छ.ज. पाठेषु नास्ति। 193. ग.घ. सोऽवर्णाश्रमी भवेत्।

## मोक्षस्वरूपं नाम दशमं प्रकरणम्

अथ मोक्षस्वरूपं विचारयामः।

[1]किं ज्योतिस्तव भानुमानहनि मे रात्रौ प्रदीपादिकम्
स्यादेवं रविदीपदर्शनविधौ किं ज्योति राख्याहि मे।
चक्षुस्तस्य निमीलनादिसमये किं धीर्धियो दर्शने,
किं तत्राहमतो भवान् परमकं ज्योति स्तदस्मि [2]प्रभो॥ 503

अस्वप्नायारनन्तायारजडायाः सुखाकृतेः।
यद्रूपं [3]चिररुद्राया तद्रूपं परमं पदम्॥ 504

इत्यादिवशिष्ठवचनादज्ञानं स्वप्नः पुनरुत्थानं [4]चेत्त्रितयाभावे [5]सुप्तौ प्राज्ञो यथैव वीतसंस्कारदुःखः निष्प्रपञ्चानान्दमात्रः एवावतिष्ठते। [6]तथैवायं ब्राह्मणो ब्रह्मनिष्ठोऽपि ब्रह्मात्मसम्यग्ज्ञानेन स (कार्यज्ञानाध्यस्तत्वादेतत्) [7]कार्यज्ञानान्यध्यस्तत्वादेतद्देहपातानन्तरं पुनर्देहादिप्रपञ्चानुवृत्तौ कारणाभावात् निष्प्रपञ्चानन्दमात्रः।

[8]ततस्तिमितगम्भीरं न तेजो न तमस्ततम्।
अनाख्यमनभिव्यक्तं [9]सत्किञ्चिदवशिष्यत॥ 505

---

1-2. ग.घ.इ.च.छ. पाठेषु नास्ति।

3. क.ग.घ.इ.छ. चिरनिद्रायाः। 4. क.ग.घ.इ. चेति त्रितया।

5. क.ग.घ. सुप्तः। 6. क.ग.घ.इ.झ. यथैवायं।

7. क. कार्यः ज्ञानी सन् ध्वस्तत्वादेतत्। ग.घ. कार्यज्ञानस्य ध्वस्तत्वा। इ.ज. कार्याज्ञानसाध्यत्वादे। छ.झ. कार्यज्ञानस्य ध्वस्तत्वाच्चेद्देह। 8. छ. तत्किमिति।

9. ग.घ. यत्किञ्चिदवशिष्यत।

इत्यादिशास्त्रात् स्तिमितो गम्भीरः [10]तमस्तेजोविलक्षणः इदं इत्थमिति वाचा वक्तुं वा मनसा ध्यातुं वाप्यशक्तोऽनभिव्यक्तः सर्वशून्यसन्मात्रः

निर्विकल्पमनन्तं च हेतुदृष्टान्तवर्जितम् ।
[11]अप्रमेयमनादिञ्च [12]यत् ज्ञात्वा मुच्यते बुधः ॥ 506

इत्युक्तत्वात्, अप्रमेयादिमध्यरहितः पर्यन्तहेतुदृष्टान्तवर्जितो निर्विकल्पः "पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते" इति श्रुतेः सर्वपरिपूर्णः सर्वाधिष्ठानभूतः ईश्वरहिरण्यगर्भविराट्प्राज्ञतैजस विश्वरूप [13]चित्प्रतिबिम्बप्रकाशभूतः बिम्बप्रतिबिम्बभावकल्पनादिविवर्जितः

[14]यथा चन्द्रार्कनिर्मुक्तः स राहुः नोपलभ्यते ।
[15]तथा शरीरनिर्मुक्तः शरीरं [16]नोपलभ्यते ॥ 507

इति स्मृते शरीरनिर्मुक्तस्वयंप्रकाशमानब्रह्मचैतन्यप्रकाशमात्रः एवावतिष्ठत [17]इत्यशरीरब्रह्मचैतन्यानन्दमात्र[18]स्वरूपावस्थानमात्र एव ज्ञानिनः परममोक्षः। स च "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" (तैत्ति. २-४-५, शांडिल्यः २-३, शरभः १८, ब्रह्मः २२) इत्यादिश्रुतेः वाङ्मनसागोचरः ईदृक्तादृग्व्यवहाराविषयः "निरतिशयब्रह्मनिष्ठागरिष्ठानामात्मज्ञानामृत-रसास्वादपरिहृत्तापानां ब्राह्मणानां [19]एव वचनेनैव प्रोवाचेति" श्रुतेः मौनेनैव समधिगन्तव्यः । इतरेषां देहात्मभ्रन्ति[20]विनष्टदृष्टीनां अज्ञानदावाग्निदग्धचित्तानां मूर्खाणां कल्पकोटिशतैरपि केनचिदपि प्रयासेनापि सर्वेषामात्मभूतं यद्ब्रह्म

---

10. क.ग.घ.ङ.च.छ. तमस्तेयो ।
11. ख.छ. अप्रमेयमनाद्यञ्च ।
12. क.ङ.च.ज.झ. यः ज्ञात्वा ।
13. ख.ग.घ. चित्प्रतिबिम्बप्रकाशभूतः ।
14. क.ग.घ.छ.ज.झ. यथा यथा ।
15-16. क.ग.घ.छ. पाठेषु नास्ति ।
17. ग.घ. इति आकाशशरीरं ब्रह्मा चैतन्यानन्द ।
18. क.ग.घ.ङ.च.ज. स्वरूपावस्थानमेव ।
19. ग.घ. एवं तद्वचनेनैव ।
20. ज.झ. विनष्टव्यष्टीनां ।

सत्यादिलक्षणं "[21]उदास्ते तत्सुरश्रेष्ठाः [22]यथा जातजनंप्रति" इत्युक्तत्वात् न विज्ञातुं शक्यः इति तल्लाभार्थं यत्नं कुर्वन्नेव ब्राह्मणो कृतकृत्यो भवति । "[23]ब्रह्मविदाप्नोति परं" (तैत्ति. २-१-१, भस्मजा: २-७) "यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छति नामरूपे विहाय" (मुण्डक ३-२-८) तथा विद्वान्नामरूपाद्विमुक्तः परात्परं [24]पुरुषं ब्रह्म याति" (गुह्यका ३८) "आप्तकामः आत्मकामो न तस्या प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते" "ब्रह्मैव सन् ब्रह्माप्येति" (बृहदा: ४-४-६, सुबाल: ३-३, नृसिह: ५-२-, ५-५, ५-८, सहवै: २) "तरति शोकमात्मवित्" (छा. ७-१-३) न स पुनरावर्तते, न स पुनरावर्तते" (निरालम्ब: ३३) इत्यादिसर्ववेदान्तसिद्धान्तरहस्यमेतत्सम्यगत्रोपपादितं, [25]प्रसंगात्प्रकृतोपयोग्येव शास्त्ररहस्यं किञ्चिद्विचार्यतेऽस्माभिः सावधानमनास्समाकर्णय [26]सौम्य!! **सन्यासस्य कः कुत्राधिकारी** । इह जन्मनि जन्मान्तरे वा सम्यगनुष्टितैः वेदोक्तैः निष्कामकर्मोपासनैः अराधिताराध्य पादश्रीमेथादक्षिणामूर्तीश्वरपरमानुग्रहपरिशुद्धमनसः ब्रह्मजिज्ञासुः भूत्वा आचार्यमुपसम्पन्नः सर्ववेदान्तवेद्यं प्रत्यगभिन्नं ब्रह्मतत्त्वं [27]वेदान्तश्रुतिस्मृतिन्यायाभ्यामनुगृहीतैः विचार्य सम्यक् मत्वा तथा ध्यात्वा देहेन्द्रियादिसंघातसाक्षिणं, सत्यज्ञानानन्दैकरसस्वरूपमाकाशवत्सर्वगतमाकाशादपिविस्तीर्णं, आकाशवदसंगं, चिदाकाशं, सर्वकल्पनाधिष्ठानभूतमात्मानं, ब्रह्मात्मनामनुभूय श्रुत्याचार्येश्वरप्रसादात्कृतकृत्यो विमुक्तो भवति। सर्वदुःखबन्धनादिति हि, समस्तवेदान्ततदुपबृंहकस्मृतीतिहासपुराणागमाभियुक्तवचनतात्पर्यं परिसमाप्तं । तत्र तथाविधस्य ब्राह्मणस्य ब्रह्मनिष्ठस्य व्यापारश्चिन्त्यते। गृहे स्थातव्यं उत विदुषा सन्यासः कार्यः इति, किं तावत्प्राप्तं?

---

21. ग.घ. उषास्ते ।

22. क.इ. यथा भूत वचं । ग.घ.यथा जातमिति संप्रति ।

23. च. ब्राह्मण विवाप्नोति परं ।

24. इ.च.ज. पुरुषमुपैति दिव्यं ।

25. ग.घ. प्रसंगात्प्रकृतोपयोग्यशास्त्ररहस्यं ।

26. झ. पाठः समाप्तः ।

गृहे स्थातव्यमिति तावत्प्राप्तं, कुतः विदेहमुक्तिहेतोः प्रत्यगभिन्नब्रह्मसाक्षात्कारस्य सिद्धत्वात् त्यागेन प्रयोजनाभावात् । न च कामक्रोधादिधीवृत्तिनिवृत्तिरूप-जीवन्मुक्तिप्रसिद्ध्यर्थं संन्यासः कर्तव्यम् । इति वाच्यम् ।

[28]उत्पाद्यमानरागाद्याः विवेकज्ञानवह्निना ।
तथा तथैव [29]दह्यन्ते कुतस्तेषां प्ररोहणम् ॥ 508

इत्यादिना कामादिनिवृत्तेः ज्ञानसाध्यत्वांगीकारात् ।

शास्त्रार्थस्य समाप्तत्वात् मुक्तिस्यात्तावतामितेः ।
रागादयस्सन्तु कामं न तद्भावोपराध्यति ॥ 509

इत्यादिना ज्ञानिनः रागांगीकारात् तन्निवृत्यभावेऽपि [30]परममुक्तौ विरोधाभावात्।

गुहाः एव गृहस्थानं सुसमाहितचेतसाम् ।
शान्ताहंकृतिर्दोषाणां विजनाः वनभूमयः ॥ 510

इति वशिष्ठादिभिरुक्तत्वाच्च, [31]जनकादीनां गृहस्थानां राज्यपरिपालनादि व्यापारासक्तानामपि दृढबोधवैभवेन परममोक्षसिद्धेः श्रुतिपुराणप्रसिद्धत्वाच्च न विद्वत्संन्यासः कार्यः [32]इति प्राप्ते ब्रूमः "न गृहे स्थातव्यं विदुषा ज्ञानप्रतिष्ठा विरोधित्वाद्गृहावस्थानस्य कामादिद्वारा बहुतर दुःखापादकत्वाच्च ।

रागो लिङ्गमबोधस्य चित्तव्यायामभूमिषु ।
कुतः शाद्वला तस्य यस्याग्निः कोटरेतरोः ॥ 511

इति ज्ञानिनः रागानिवृत्तेरेवावश्यकत्वात्, किं बहुना?

यो वेदालुप्तदृक्तत्वमात्मनोऽकर्तुतां तथा ।
ब्रह्मवित्वं तथा मुक्त्वा स [33]आत्मज्ञो नचेतरः ॥ 512

---

27. क.घ. वेदान्तैः स्मृतिन्याय ।

28. क.इ.च.छ. उत्पाद्यमानरागाद्वा ।  29. ज. दह्येत । क.इ.च.छ. दह्यन्त ।

30. ग.घ.ज. परमविमुक्तौ ।  31. क. शुनकादीनां ।

[34]न चाध्यात्माभिमानोऽपि विदुषो स्त्यासुरत्वतः ।
[35]विदुषोप्यासुरी चेत्स्यान्निष्फलं ब्रह्मदर्शनम् ॥ 513

इत्यादिना च [36]सर्वाभिमाननिवृत्यन्तरभाविनोऽपि ब्रह्मवित्वाभिमानस्य चित्तमलमात्रत्वेन त्याज्यतामभिप्रेत्य ब्रह्ममात्रत्रयावस्थानस्येवाङ्गीकारात् तन्मात्रत्रयावस्थानं संन्याससाध्यमिति ज्ञानिनः प्राप्तावसरः एव संन्यासः, किञ्च श्रुतिस्मृतिन्यायविद्वदनुभवानुरोधेनाधिगतपरमार्थ [37]प्रत्यगभिन्नब्रह्मतत्वस्य सर्वभूतात्मभूतस्य सर्वैकात्म्यमनुभवतः सर्वाधिष्ठानभूतस्याप्तशेषपुमर्थस्य त्यक्ताशेषविशेषदुःखस्याधिगतपरमस्वास्थ्यस्याकाशवत्सर्वपरिपूर्णस्य परमकारणभूतस्य कार्यकारणासंस्पृष्टापरोक्षचित्प्रकाशमात्रस्य सर्वान्तरस्य सर्वप्रपञ्चबाधावधिभूतस्य व्यष्टिसमष्ट्यात्मकविश्वसाक्षिभूतस्य नित्यानिर्मुक्तस्वरूपस्य देवैरपि स्पृहणीयशीलस्य [38]काष्ठादिवत्सदेहं निष्प्रयोजनं पश्यतः केवलप्रारब्धवशाद्देहाभासजगदाभासा[39]वनुभवतः पुरुषधौरेयस्य ब्राह्मणस्य कामक्रोधादिपाशहस्तपत्नीपुत्रादिस्वजनपापभटपरिवेष्टित संसारबन्दीमन्दिरनिवासापराधपरिप्राप्तविधि[40]प्रतिषेधशृंखलाबद्धनिर्बन्धदुःखेन मनस्तापस्य वेदशास्त्रपुराणविगर्हितत्वेनाकर्तव्यत्वात् भद्रदन्तावलसमारूढ-महाराजवर्यस्य दूर्वारदूषितकुजनकुटीरकुवीथीकुसंधिसंचारवत्सर्वात्म भावसाम्राज्यदीक्षितस्यास्य पुण्यपापपरायणशिष्टदुष्टजनदूषितगृहावस्थान-स्यान्यय्यत्वात् प्रयोजनाभावाच्च दीक्षान्ते कृष्णविषाणत्यागवदध्यासविध्वंसान्ते सर्वव्यापारः परमरूपसंन्यासस्य न्यायप्राप्तत्वात् रागाङ्गीकारशास्त्रस्य दुर्बलत्वाच्च। **विद्वत्सन्यासस्वीकारे प्रमाणं ।**

---

32. ग.घ. इत्येवं प्राप्ते ।
33. क.इ. आत्मज्ञाने चरत। ग.घ. आत्मज्ञान चेतरः।
34. ग.घ. न वाध्यात्मा।
35. क.इ.च.छ.ज. विदुषोह्यासुरी ।
36. क.इ.च.छ.ज. सत्वाभिमान।
37. च.छ. प्रत्यगभिन्नपरमात्मब्रह्मतत्त्वस्य ।
38. इ.च.छ.ज. काष्ठादिवत्स्वदेहं ।
39. क.ग.घ. अनुभवन्तः ।

निरस्तातिशयज्ञानी याज्ञवल्क्यो यथा गृहे ।
कैवल्याश्रममास्थाय प्राप तद्वैष्णवं पदम् ॥ 514

इत्यादिना [41]ब्रह्मविद्भिः विद्वत्सन्यासस्यानुष्ठिततत्वेन प्रतिपादिततत्वाच्च, [42]ज्ञानदीक्षातपस्सत्यसंवाददुःखसंक्षय[43]सुखाविर्भावरूपप्रपञ्चप्रयोजनवज्जीवन्मुक्तिसाधनत्वाच्चावश्यं **विदुषा संन्यासः कर्तव्यः**, तत्कर्तव्यतायां च श्रुतयः सहस्रशः प्रतिशाखं, "त्यागेनैकेनामृतत्वमानशुः" (कैवल्यः ३, महानाः ८-१४) "न्यास एवात्यरेचयत्" इति तैत्तिरीयशाखायां श्रूयते ।

त्याग एव हि सर्वेषां मोक्षसाधनमुत्तमम् ।
त्यजतैवहि तत्ज्ञेयं त्यक्तः प्रत्यक्परं पदम् ॥ 515

ततः सर्वाणि कर्माणि संन्यस्यात्मावबोधतः ।
हत्वा विद्या धियैनेयात्तद्विष्णोः परमं पदम् ॥ 516

इति [44]वाह्लशाखायां ।

स शिखं वपनं कृत्वा बहिः सूत्रं त्यजेद्बुधः ।
यदक्षरं परं ब्रह्मा तत्सूत्रमिति धारयेत् ॥ 517

इति अथर्वणशाखायां ।

कुटुम्बपुत्रदारांश्च वेदाङ्गानि च सर्वशः ।
यज्ञं यज्ञोपवीतं च त्यक्त्वा गूढं चरेन्मुनिः ॥ 518

इति शाखान्तरे ।

यज्ञोपवीतं वेदांश्च सर्वं तद्वर्जयेद्यतिः ।

इति काठकायां, [46]अथ परिव्राट् विवर्णवासामुण्डोऽपरिग्रहः [45]शुचिरद्रोहीचैकाकी ब्रह्मभूयाय भवतीति [47]जाबालोपनिषदि, अथ

---

40. क.ग.घ. प्रतिषेध श्रृगालबन्धदुःखेन ।

41. क.ग.घ. बाह्यविद्भिः ।

42. क.ग.घ. ज्ञानदक्षात् । ज. ज्ञानरक्षात् ।

43. क.ग.घ. सुखाविर्भावप्रपञ्च ।

44. इ ज वार्लाग्विल्यशाखायां । ग.घ. वाजसनेय शाखायां ।

परिव्राडेकशाठीपरिवृतः, मुण्डोदकपात्र्यारण्यनित्यो भिक्षार्थी ग्रामं [48]प्रविशेदासायं, प्रदक्षिणेनाविचिकित्सन् सार्ववर्णिकं भैक्षचर्यामभिशस्तपतितवर्जंयज्ञोपवीती शौचनिष्टः काममेकं [49]वैणवं दण्डमादधतेति मैत्रायणशाखायां ''निर्द्वन्दो निष्परिग्रहः'' इत्यन्यश्रुतौ, अव्यक्तलिङ्गः अव्यक्ताचारः इत्यन्यत्रश्रुतौ ।

नात्यक्त्वा सुखमाप्नोति नात्यक्त्वा विन्दते परम् ।
नात्यक्त्वा निर्भयश्शेते सर्वं त्यक्त्वा सुखी [50]भवेत् ॥ 519

[51]यदा तु विदितं तत्स्यात् परं ब्रह्मसनातनम् ।
तदैकदण्डं सङ्गृह्य सोपवीतां शिखां त्यजेत् ॥ 520

इत्याद्याः स्मृतयः ।

ज्ञाननिष्ठो विरक्तो वा मद्भक्तो वानपेक्षकः ।
स लिङ्गनाश्रमांस्त्यक्त्वा [53]चरेदविधिगोचरः ॥ 521

''विचरेज्जडवन्मुनिः'' ''[54]निरपेक्षश्चरे[55]न्महीमित्यादि'' पुराणवचनान्यपि सर्वाणि [56]विद्वत्सन्यासे प्रमाणम् । एवं सर्वप्रमाणसिद्धत्वात्सन्यासस्य स्वनिन्द्रजालसदृशत्वदृश्यव्यापारेण प्रयोजनाभावात्प्रत्युतचित्तश्रममात्रत्वाच्च [57]अप्रतिबद्धापरोक्षप्रत्यगभिन्नब्रह्मतत्त्वसाक्षात्कारेण परममोक्षसिद्धेः कार्यज्ञेयपरिसमाप्तावपि ।

व्यापारे खिद्यते यस्तु निमेषोन्मेषयोरपि ।
तस्यालस्य धुरीणस्य सुखं नान्यस्य कस्यचित् ॥ 522

इत्युक्तत्वात् उपशान्तिसुखरसिकेण ब्राह्मणेन ब्रह्मनिष्ठेन चित्तविश्रान्तिसिद्ध्यर्थं

---

45. क.इ.च.छ. शुचिरद्रोही ।
46-47. ज. पाठे नास्ति ।
48. ग.घ. प्रविश्य यदा प्रदक्षिणेन ।
49-50. ज. पाठे नास्ति ।
51-52. ज. पाठे नास्ति ।
53-54. ख.ग.घ.इ. पाठे नास्ति ।
55. क.च.छ. मुनिः इत्यादि ।
56. ग.घ.इ. विद्वत्सन्याससद्भावे प्रमाणं ।

लौकिकवैदिकसर्वकर्मपरित्यागरूपः विद्वत्सन्यासोऽवश्यं [52]कर्तव्यः **विद्वत्सन्यासविधिः (आतुरसन्यासविधिः)** स चोपद्रवग्रामग्रामत्यागवज्जीर्णकुचेलत्यागवच्च न लौकिकमात्रः किन्तु वैदिकोऽपि तस्य प्रतिपत्तिकर्मवच्छास्त्रे द्विरूपत्वाङ्गीकारात् तद्विधस्त्वेवं प्रदर्श्यते। शौचमाचमनादीन् कृत्वा पादौ प्रक्षाल्य आचम्य देशकालादीनुच्चार्य मम समस्तपापक्षयद्वारा ब्रह्मानन्दावाप्यर्थं आतुरसंन्यासं करिष्ये इति संकल्प्य तीर्थदेशं गत्वा उदकमुद्धृत्य पात्रद्वयं गृहीत्वा दक्षिणेन पाणिना उदकपूर्णमेकपात्रमादाय "एष वा अग्नेर्यः [58]प्राणः प्राणं गच्छ, स्वां योनिं गच्छस्वाहेत्यप्सु जुहुयान्" "आपो वै सर्वादिवताः अद्भयो जुहोमिस्वाहेति द्वितीयाहुतिं [59]चाप्सु जुहुयात्, [60]पात्रस्थाहुतिशेषतोयं "आशुश्शशान" इत्यनुवाकेनाभिमन्त्र्य तदुदकं किञ्चित् हस्ते गृहीत्वा पुत्रेषण, वित्तेषणा, लोकेषणा मया त्यक्ता स्वाहेति प्रथमं [61]पिबेत्। अभयं सर्व भूतेभ्यो मत्तः स्वाहेति द्वितीयं पिबेत्। शेषमुदकं समादाय ओं भूर्भुवस्सुवः सन्यस्तं मया स्वाहेति तृतीयं निश्शेषं पिबेत्। ततः अन्यत्पवित्रमञ्जलिपूर्णमुदकमादाय प्राच्यां दक्षिणायां प्रदीच्यामुदीच्यामूर्ध्वायामधरायां च दिशि प्रत्येकं निनयेत्। ततो ब्राह्मणे नमः इति नत्वा सूर्याभिमुखं ऊर्ध्वबाहुस्सन् ओं भूः संन्यस्तं मया, ओं भुवः सन्यस्तं मया ओगँ सुवः सन्यस्तं मया, ओं भूर्भुवस्सुवस्सुवः सन्यस्तं मया संन्यस्तं मया संन्यस्तं मया इति [62]मन्द्रमध्यमोत्तमस्वरैः ब्रूयात्, ततः शिखां यज्ञोपवीतं [63]च्छित्वा अप्सु त्यजेत्, ततः पुत्रादिगृहं न गच्छेत् कलत्रदुर्मलगर्तं न स्मरेत्। एवं विधितः संन्यस्य परमहंसोपनिषदुक्तप्रकारेण यावद्देहपातं सुखं तिष्ठेत् सा चोपनिषदेवं श्रूयते। हरिः ओं **अथ योगिनां परमहंसानां कोऽयं मार्गः** तेषां का स्थितिः इति नारदः भगवन्तमुपगम्योवाच। तं नारदं भगवानाहः - **सोऽयं**

---

57. ग.घ. प्रतिबद्ध। च.छ. प्रतिबन्धा।

58. च. त्रिणं गच्छ।

59. क.ग.घ.च.छ. चापि।

60. क.ग.घ.च.छ. पुत्रस्थाहुतिशेष।

61. च.छ. भवेत्।

**परमहंसमार्गः लोके दुर्लभतरः** न तु बाहुल्ये यद्विवेको भवति स एव पुरुष इति वेदविदो मन्यन्ते। महापुरुषो [64]यश्चित्तं तत्परा मय्येवावतिष्ठते। तस्मादहं च तस्मिन्नेवावतिष्ठते, [65]असौ पुत्रमित्रकलत्रबन्ध्वादीन् शिखां यज्ञोपवीतं स्वाध्यायं च सर्वकर्माणि संन्यस्यायं ब्रह्माण्डं च हित्वा कौपीनं दण्डमाच्छादनं स्वशरीरोपभोगार्थाय लोकस्योपकारार्थाय च परिग्रहेत्। तच्च न मुख्यः इति चेदयं मुख्यः न दण्डं न शिखां न यज्ञोपवीतं नाच्छादनं चरति स परमहंसः। न शीतं, [66]न चोष्णं, न सुखं, न दुःखं, न मानावमानाविति, न च षडूर्मवर्जितः [67]निन्दागर्वमदमत्सरदम्भदर्पेच्छाद्वेषसुखदुःखकामक्रोधलोभमोहहर्षासूयाहंकारादींश्च हित्वा स्ववपुः कुणपमिव दृश्यते। [68]यतः परमप्रध्वस्तसंशयविपर्ययमिथ्या ज्ञानानां यो हेतुः तेन [69]नित्यनिवृत्तः नित्यबोधः तत्स्वयमेवावस्थितः शान्ताचलानन्दविज्ञानघनोऽस्मि। तदेव मम परमं धाम, तदेव शिखा च तदेवोपवीतं [70]परमात्मात्मनोरेकत्वज्ञानेन तयोः भेद एव विभग्नः सुसाध्यः,

सर्वकामान् परित्यज्य अद्वैते परमास्थितिः।
ज्ञानदण्डो धृतो येन एक दण्डी स उच्यते॥ 523

काष्ठदण्डो धृतो येन सर्वाशी ज्ञानवर्जितः।
स याति नरकान् घोरान् महारौरवसंज्ञकान्॥ 524

तितिक्षा ज्ञानवैराग्यशमादिगुणवर्जितः।
भिक्षामात्रेण यो जीवेत्स पापी यतिवृत्तिहा॥ 525

इदमन्तरं ज्ञात्वा स परमहंसः आशाम्बरो न नमस्कारो न स्वधाकारो न निन्दास्तुतिः यादृच्छिको भवेत् भिक्षो वाहनं न विसर्जनं न मन्त्रं न ध्यानं नोपासितं च न

---

62. क.ग.घ. मन्त्रमध्यम।
63. क.ग.घ. छित्वाप्यत्यजेत्।
64. क.इ.छ. यच्चित्रं तत्सदा।
65. ग.घ. असौ स्वपुत्रमित्र।
66. ग.घ. न चोच्छिष्टम्।
67. क. निन्दामदगर्वमद।
68. ग.घ.इ. इतः परम।
69. क. नित्यनिवृत्तः।
70. ग.घ. परमात्मे त्यात्मनः।

लक्ष्यं नालक्ष्यं च पृथक् नापृथक् अहं न सत्वं च [71]सर्वं च निकेतस्थितिरेवं सभिक्षुः सुवर्णादिः नैव परिग्रहेत् । न लोकं नावलोकनं च, बाधकः क इति चेत् बाधकोऽस्त्येव । यस्माद्भिक्षुः हिरण्यं रसेन दृष्टं चेत् ब्रह्महा भवेत् । यस्माद्भिक्षुः हिरण्यं रसेन स्पृष्टं चेत्स पुल्कसो भवेत्, यस्माद्भिक्षुः हिरण्यगँ रसेन न पश्येन्न स्पृशेन्न गृह्णीयात्सर्वान्कामान्मनोगतान्यावर्तेत दुःखेनोद्विग्नमानसः सुखेन निस्पृहस्त्यागो [72]रागे सर्वत्र शभाशुभयोरनभिस्नेहो न द्वेष्टिन मोदते च सर्वेषामिन्द्रियाणां गतिरुपरमेत । य आत्मन्येवावस्थीयते [73]तत्पूर्णानन्दैकबोधः स ब्रह्माहमस्मीति कृतकृत्यो भवतीति ओं समाप्रेयमुपनिषत् इति श्रीकम्भम्पाटि अमरेश्वरशास्त्रिकृताज्ञानध्वान्तचण्डभास्करस्य मोक्षविचारो नाम दशमं प्रकरणं समाप्तम् । अथ अज्ञानध्वान्तचण्डभास्कराख्यग्रन्थस्य **उपसंहारः** हे शिष्य अस्मच्चरणपरिचरणनिपुणस्य भवतः संसारदुःखसागरसमुत्तीर्णमहोपायभूत-ब्रह्मात्मैक्यज्ञानसिद्धये सर्ववेदान्तपरमार्थरहस्यं स्वानुभवावष्टम्भेन विचारदशकरूपेण अज्ञानध्वान्तचण्डभास्कर समाख्यानेन वेदान्तप्रकारणेन सम्यगुपदिष्टं । इत्थमस्माभिरस्मिंश्च प्रकरणे तव अस्मदुपदिष्टं परमार्थरहस्यं सर्ववेदान्तबृंहकस्मृतीतिहासपुराणागमसम्मतं हरिहरादीश्वराणां, ब्रह्मादिदेवानां, वशिष्ठादिऋषीणां, शुकादियोगिनां, याज्ञवल्क्यादिब्राह्मणानां, जनकादिक्षत्रियाणां, बलिप्रह्लादादिराक्षसानां, मैत्रेय्यादिस्त्रीणां, भगवद्भाष्यकारादिपरमहंसपरिव्राज [74]काचार्य**विद्यारण्यमत्तातपादाद्यभि-युक्तानां** चाभिमतं तदनुकूलश्चोपपत्तयः अत्रैव परिसमाप्ताः । मामप्येवमेवानुभवः सम्यगवस्थितः, [75]अथ श्रेयोर्थिनां ब्राह्मणानामितः अतिरिक्तं वक्तव्यं श्रोतव्यं मन्तव्यं वा प्राप्तव्यं वा किमपि नास्ति । इमं च परमार्थोपदेशं श्रद्धासमृद्धिसद्धनो दीर्घकालनैरन्तर्यसत्कारैः निष्पक्षपातं सम्यग्विचारयसि चेत् एतद्विचारपरिपाकपरिप्राप्तसम्यग्प्रज्ञानौकासमारूढः तमः कूर्मः, रजोमीनं, क्रोधनक्रं, कामशैवालं, जन्ममरणतरङ्गं, रोगबुद्बुदं, लोभफेनं मोहवेलं,

---

71. क. सर्वं वा ।

72. ग.घ. रोगेन सर्वत्र ।

73. क.च.छ. तत् पूर्वानन्दैक ।

74. इ.छ. आचार्याणां ।

75. ग.घ.इ. अत्र श्रेयोर्थिनां ।

दुःखागाधजलप्रवाहगम्भीरमिमं मूलज्ञानसंसारापारमहदुःखसमुद्रं समुत्तीर्य मोक्षसाम्राज्यानन्दरूपपरं पारमवाप्त्यसि ।

एतावानुपदेशः स्यात् वेदे श्रेयोर्थिनां नृणां ।
कृतकृत्यो [76]भवेत्क्षिप्रमेतत् ज्ञात्वानुशासनं ॥ 526

ज्ञातमेव विजानाति विमुक्तश्च विमुच्यते ।
निवर्तते निवर्तन्तु त्रिः वः शपथाम्यहम् ॥ 527

सच्चिदानन्दसम्पूर्णं [77]ब्रह्मैव त्वं न दृश्यकम् ।
श्रद्धत्स्व [78]तावत् श्रद्धत्स्व नात्र संशयकारणम् ॥ 528

विदितं वेदरहस्यं विदितो देहादिरयमनात्मेति
विदितः पर इति चात्मा किमतः परमस्ति जन्मसाफल्यं ॥ 529

[79]देवस्तत्त्वमसीति बोधयतु मां मुद्रावता पाणिने
त्येवं प्राञ्जलिना मया सविनयं स्वप्नेर्थितस्वेशितुः ।
यस्य श्रीकरुणाकटाक्षविभवप्राप्तात्मविद्योऽस्म्यहं
तं वन्दे मुनिवन्दनीयचरणं श्रीदक्षिणास्यं गुरुम् ॥ 530

करालमायाभिधरात्रिशायिभिः
कर्मातिदुश्शीतविकम्पितात्मभिः
अज्ञानविध्वान्तसुचण्डभास्करो
मयोदितो विप्रवरैः विलोक्यताम् ॥ 531

इति श्रीसर्वदेवतासार्वभौममोक्षसाम्राज्याधीश्वर श्रीदक्षिणामूर्तीश्वरचरण-प्रणिधानप्रभावपरिलब्धपरमभाग्यसत्फलभूताद्वैतब्रह्मविद्यामहाधनेनकम्भम्पाटि-कुलजलधिपूर्णसुधाकरेणामरेश्वरशास्त्रिणा स्वानुभवानुरोधेन विरचितं विचारदशकरूपमज्ञानध्वान्तचण्डभास्करसमाख्यं वेदान्तप्रकरणं समाप्तम् ।

---

76. ग.घ. भवेत्तीव्रमेतत् ।
77. च.छ. ब्रह्मतत्त्वं ।
78. क.ग.घ. तात श्रद्धत्स्व ।
79. ग.घ. वेद तत्त्वमसीति ।

# ग्रन्थोदाहृतउपनिषद्वाक्यसूची

| क्र.सं. | उपनिषद्वाक्य: | उपनिषन्नाम | सङ्केताक्षर: | पृ.सं. |
|---|---|---|---|---|
| 1. | अक्षरात्परत: पर: | मुण्डक: | मुं. | 170 |
| 2. | अच्छेद्योऽयमदाह्योऽयं | भगवद्गीता | भग. | 108 |
| | | भवसन्तरणं | भव. | 154, 161 |
| 3. | अजामेकां लोहितशुक्लकृष्णां | महानारायण: | महाना. | 99, 145 |
| | | नारायणपूर्वतापिनी | ना.पू. | |
| 4. | अज्ञानेनावृतं ज्ञानं | भगवद्गीता | भग. | 99 |
| 5. | अणोरणीयान् | कठोपनिषत् | कठ. | 160, |
| | | नारदपरिव्राजक | ना.प. | |
| | | नारायणोत्तरतापिनी | ना.उ. | |
| | | महानारायण: | महाना. | |
| | | पारमार्थिक: | पा. | |
| 6. | अत्राऽयं पुरुष: स्वयं ज्योति: | बृहदारण्यक: | बृ.बृहदा. | 101, 170, 171, 173, 221 |
| 7. | अथ केन प्रयुक्तोऽयं | भगवद्गीता | भग. | 166, |
| 8. | अथ तस्य भयं भवति | तैत्तिरीयोपनिषत् | तै. | 148, 187, 233 |
| 9. | अधं तम: प्रविशन्ति | ईशावास्यं | ई. | 140 |
| 10. | अनादिमत्परं ब्रह्म | भगवद्गीता | भग. | 153, 191 |
| 11. | अनाशिनोऽप्रमेयस्य | भगवद्गीता | भग. | 141 |
| 12. | अनीशया शोचति | मुण्डक: | मुं. | 99 |
| 13. | अन्योन्तरात्मा आनन्दमय: | तैत्तिरीयोपनिषत् | त्रैत्ति. | 139. 169 |
| 14. | अन्योन्तरात्मा प्राणमय: | तैत्तिरीयोपनिषत् | तैत्ति. | 139, 163 |
| 15. | अन्योन्तरात्मा मनोमय: | तैत्तिरीयोपनिषत् | तैत्ति. | 139, 165 |
| 16. | अन्योन्तरात्मा विज्ञानमय: | तैत्तिरीयोपनिषत् | तैत्ति. | 139, 167 |
| 17. | अन्तवन्त इमे देहा: | भगवद्गीता | भग. | 141 |
| 18. | अपामसोम | अथर्वशिर | अथर्व. | |
| | | ऋग्वेदसंहिता | ऋ.सं. | 120 |
| | | ऋग्वेदमण्डलं | ऋ.मं. | |
| 19. | आत्मन: | अन्नपूर्ण: | अन्न. | 166 |
| | | मुक्तिक | मुक्ति. | |

| वाक्य | उपनिषद् | संकेत | पृष्ठ |
|---|---|---|---|
| 20. अयमात्मा ब्रह्म | माण्डूक्यं | मं. | |
| | नृसिंहपूर्वतापिनी | नृ.पू. | 186 |
| | नृसिंहोपनिषत् | नृसिंह. | |
| | शुकरहस्यं | शुकर. | |
| | रामोपनिषत् | राम. | |
| | गणेशोपनिषत् | गणेश | |
| 21. अविनाशितु तद्विद्धि | भगवद्गीता | भग. | 107, 141 |
| 22. अविनाशी वारेयमात्मा | बृहदारण्यक | बृ.बृहदा | 107, 160, 161 |
| 23. अव्यक्तात्पुरुष: पर: | कठोपनिषत् | कठ. | 152, 170 |
| 24. अव्यक्तोऽयमचिन्त्योऽयं | भगवद्गीता | भग. | 161 |
| 25. अव्यक्तादीनिभूतानि | भगवद्गीता | भग. | 117 |
| 26. अव्यक्तलिङ्गोऽव्यक्तार्थी | नारदपरिव्राजक | ना.प. | 236 |
| 27. अव्यक्तलिङ्गोव्यक्ताचार: | परमहंसपरिव्राजक | प.हं.प. | 236 |
| अव्यक्तलिङ्गोऽव्यक्तार्थो | नारायणपूर्वतापिनी | ना.पू. | 236 |
| 28. अशब्दमस्पर्शमरूप | कठोपनिषत् | कठ. | 160 |
| | योगकुण्डलिनी | | |
| | पैङ्गल, मुक्तिक | पैङ्ग. | |
| 29. अशरीरं वाव सन्तं | छान्दोग्य | छां. | 100, 163, 220 |
| 30. अशरीरं शरीरेषु | जाबालदर्शन | जाबाल. | 163 |
| 31. असङ्गोह्ययं पुरुष: | बृहदारण्यक | बृ.बृहदा | 100, 221 |
| 32. असुर्या नाम ते लोका: | ईशावास्य | ई. | 140 |
| 33. अस्मान् मायी सृजते | श्वेताश्वतर | श्वे. | 139, 170 |
| 34. असन्नेव स भवति | तैत्तिरीय | तै.ति | 159 |
| 35. असद्वा इदमग्र आशीत् | सुबाल तैत्तिरीय | सुबाल तैत्ति. | 140 |
| 36. अहं ब्रह्मास्मि | बृहदारण्यक | बृ.बृहदा. | 153, 171, |
| | पैङ्गल | पैङ्ग. | 176, 186, |
| | त्रिपाद्विभूतिमहानारायण | त्रि.मा.न. | 190 |
| | शुकरहस्यं | शुक. | |
| 37. अहमन्नमहमन्नं | तैत्तिरीय | तै.त्ति. | 201 |
| 38. आकाशवत् सर्वगत | शांडिल्य, भगवद्गीता | शांडि.भग. | 100, 220 |
| 39. अकाशशरीरं ब्रह्म | तैत्तिरीयं | तै.त्ति. | 176, |
| 40. आचार्यवान् पुरुषो वेद | छान्दोग्यं | छां. | 133 |

| वाक्य | ग्रन्थ | संक्षेप | पृष्ठ |
|---|---|---|---|
| 41. आनन्दं ब्रह्मणो विद्वान् | तैत्तिरीय | तैत्ति. | 187 |
| | शरभ | शर. | |
| 42. आब्रह्म भुवनान् लोकान् | भगवद्गीता | भग. | 122, 197, 215 |
| 43. आत्मनस्तु कामाय | बृहदारण्यक | बृ.बृहदा | 172 |
| 44. आत्मक्रीडा आत्मरतिः | छान्दोग्यं | छा. | 217 |
| 45. आत्मानं रथिनं विद्धि | भवसन्तरणं | भ.सं. | 229 |
| | कठोपनिषत् | कठ. | |
| | पैङ्गल | पैङ्ग. | |
| 46. आत्मा वा इदमेक एवाग्र | ऐतरेय (आत्मषट्कं) | ऐ. | 145, 190 |
| 47. आत्मा वारे द्रष्टव्यो | बृहदारण्यक | बृ.बृहदा. | 105, 189 |
| 48. आत्मैवेदं सर्वम् | छान्दोग्य | छां. | 216, 235 |
| 49. आत्मावै पुत्रनामासि | कौषीतकीब्राह्मणम् | कौ.ब्रा. | 138 |
| 50. इदं शरीरं कौन्तेय | भगवद्गीता | भग. | 184 |
| 51. इन्द्रियाणि हयानाहुः | कठोपनिषत् | कठ. | |
| | पैङ्गलोपनिषत् | पैङ्ग. | 229 |
| | भवसंतरण | भवसं. | |
| 52. इन्द्रो मायाभिपुरुरूप | बृहदारण्यक | बृ.बृहदा | |
| | ऋग्वेदं मण्डलं | ऋ.मं. | 99 |
| | ऋग्वेदसंहित | ऋ.सं. | |
| 53. उदरमन्तरं कुरुते | तैत्तिरीयोपनिषत् | तैत्ति. | 148, 187, 233 |
| 54. उपदेक्ष्यन्ति | रामोत्तरतापिनी | रा.उ.ता. | 133 |
| 55. उपद्रष्टचनुमन्ता च | भगवद्गीता | भग. | 163 |
| 56. उद्यन्तमस्सयन्तमादित्य | सहवा उपनिषत् | सहवा. | 137 |
| 57. एकमेवाद्वितीयं | त्रिपाद्विभूतिमहानारायण | त्रि.मा.न. | |
| | पैङ्गल | पैङ्ग. | 100, 153 |
| 58. एक एवात्मा मन्तव्यो | ब्रह्मबिन्दूपनिषत् (अमृतबिन्दु) | ब्र.बि. | 160 |
| 59. एतत्बुध्वा बुद्धिमान् | भगवद्गीता | भग. | 105 |
| 60. एवमेवास्य परिद्रष्टृरिमा | प्रश्नोपनिषत् | प्र. | 136 |
| 61. एवं बुद्धैः परं बुध्या | भगवद्गीता | भग. | 168, |
| | त्रिपुरतापिनी | त्रि.ता. | 166 |
| 62. एष नित्यो महिमा | बृहदारण्यकम् | बृ.बृहदा | 194 |

| | | | |
|---|---|---|---|
| | इतिहास | इतिहा. | |
| 63. ऐतदात्म्यमिदं सर्वम् | छान्दोग्यं | छा. | 216 |
| 64. काम एष क्रोध एष | भगवद्गीता | भग. | 166, 201 |
| 65. कालः पयति भूतानि | मैत्रायिणि | मैत्रा. | 236 |
| 66. कूटस्थमचलं ध्रुवम् | भगवद्गीता | भग. | |
| | त्रिपाद्विभूतिमहानारायणम् | त्रि.मा.ना. | 100 |
| | योगशिखा | यो.शि. | |
| 67. कोटयो ब्रह्मणां याताः | वराहउपनिषत् | व. | 122 |
| 68. कोह्येवान्यत्क प्राण्यात् | तैत्तिरीयम् | तैत्ति. | 172 |
| 69. क्षेत्रज्ञंचापि माम् | भगवद्गीता | भग. | 186 |
| 70. घटसम्भृतमाकाशम् | ब्रह्मबिन्दु | ब्र.बि. | 160 |
| | त्रिपुरतापिनी | त्रि.ता. | |
| 71. जक्षन् क्रीडन् रममाणः | छान्दोग्यं | छां. | 218 |
| 72. ज्ञानाग्नि सर्वकर्माणि | भगवद्गीता | भग. | 167 |
| 73. ज्ञाननिष्ठो विरक्तोवा | योगशिखा | यो.शि. | 252 |
| 74. ज्ञानवान्मां प्रपद्यन्ते | भगवद्गीता | भग. | 105 |
| 75. तदेवनिष्कलं ब्रह्म | त्रिपुरतापिनी | त्रि.ता. | 160 |
| | ब्रह्मबिन्दू | ब्र.बि. | |
| 76. तदैक्षत | छान्दोऽय | छा. | 191 |
| 77. तथा विद्वान्नामरूपादि | गुह्यकोपनिषत् | गुह्य. | 248 |
| 78. तन्त्वोपनिषदं पुरुषं | बृहदारण्यकं | बृ.बृहदा | 106 |
| 79. तमैवेकं विजानथा | मुण्डकं | मुं. | 174, 211 |
| 80. तमेवं विद्वानमृत इह भवंति | तैत्तिरीय आरण्यकं | तै.आ. | |
| | महावाक्यम् | | |
| | नारायणपूर्वतापिनी | नापू. | 105 |
| | त्रिपाव्दिभूतिमहानारायणम् | त्रि.मा.ना. | |
| | चित्युपनिषत् | चित्ति. | |
| 81. तद्यथेह कर्मचितो लोकः | छान्दोग्य | छा.121, 141,161,215 | |
| 82. तरति शोकमात्मवित् | छान्दोग्य | छा. 99,105, 238,248 | |
| 83. तद्विज्ञानार्थं स गुरुमेव | मुण्डकोपनिषत् | मुं. | 132 |
| 84. तद्विद्धि प्रणिपातेन | भगवद्गीता | भग. | 133 |
| 85. तत्सत्यम् | ऐतरेय (आत्मषट्कं) | ऐ. | 171, 173 |

| वाक्य | ग्रन्थ | संक्षेप | पृष्ठ |
|---|---|---|---|
| 86. तस्माचेन्न प्रमाद्यति | तैत्तिरीयम् | तैत्ति. | 237 |
| 87. तस्माद्ब्राह्मणो महिमानम् | महानारायणोपनिषत् | मा.ना. | 124 |
| 88. तस्माद्वा एतस्मादात्मन | नारायणोत्तरतापिनी | ना.ता. | 150 |
| 89. तस्माद्विराडजायत | वाजसनेयसंहिता | वा.सं. | 136 |
| | ऋग्वेद: (अष्टकात्मकं) | ऋ.(अ) | |
| 90. तस्मात्त्वामिन्द्रियाण्यादौ | भगवद्गीता | भग. | 166 |
| 91. तस्य त्रय अवस्था: त्रय स्वप्ना: | ऐतरेयोपनिषत् (आत्मषट्कं) | ऐ. | 108, 174, 212 |
| 92. तेनाधीतं श्रुतं तेन | बृहज्जाबाल | बृ.जा. | 232 |
| 93. तेनैषपूर्ण: | तैत्तिरीयं | तैत्ति. | 163,165,167,169 |
| 94. ते ये शतं मानुषा | तैत्तिरीयं | तैत्ति. | 188 |
| 95. त्रिविधं नरकस्येदं | भगवद्गीता | भग. | 123, 201 |
| 96. त्यागेनैकेन अमृतत्व | कैवल्योपनिषत् | कै. | 251 |
| | महानारायण | महाना. | |
| 97. दृश्यतेत्वग्रिया बुद्ध्या | कठोपनिषत् | कठ. | 172 |
| 98. न कर्मणा न प्रजया | महानारायण | म.ना | 141, 154, 160 |
| 99. न चक्षुषा गृह्यते | मुण्डकं | मु. | 154 |
| 100. न जायते म्रियते वा | भगवद्गीता | भग. | 108,153,160,161 |
| 101. न तत्र चक्षुर्गच्छति | केनोपनिषत् | के. | 154, 160 |
| 102. न तत्र सूर्यो भाति | कठोपनिषत् | कठ. | 154, 160, 171 |
| | मुण्डकं | मुं. | |
| | श्वेताश्वतरं | श्वे. | |
| 103. न स पुनरावर्तते | निरालम्ब | निरा. | 148, 215, 248 |
| 104. तत्त्वमसि | छान्दोग्यं | छा. | 148, 153, 171, 173, 176, 186, 216 |
| 105. न हि ज्ञानेन सदृशं | शुकरहस्यं | शु.र. | 167 |
| | गुह्यकाति | गुह्य. | |
| | भगवद्गीता | भग. | |
| 106. ज्ञानेन तु तदात्मानं | भगवद्गीता | भग. | 99, 105 |
| 107. नान्यत्किञ्चनामिषत् | भगवद्गीता | भग. | 145, 190 |
| | ऐतरेयोपनिषत् (आत्मषट्कं) | ऐ. | |

| वाक्य | ग्रन्थ | संक्षेप | पृष्ठ |
|---|---|---|---|
| 108. नायं कुतश्चित् | कठोपनिषत् | कठ. | 108 |
| 109. नाविरतो दुश्चरितो | कठोपनिषत् | कठ. | 128, 199 |
| | नारायणपरिव्राजक | ना.प. | |
| | महोपनिषत् | महो. | |
| 110. नावेदविन्मनुते | शाट्यायनीय | शाट्य. | 106 |
| | इतिहासोपनिषत् | इतिहा. | |
| 111. नाहं खल्वयमेव | छान्दोग्योपनिषत् | छा. | 156 |
| 112. नेति नेति | बृहदारण्यकं | बृ.बृहदा. | 148, 161, 171, 173 |
| 113. नेह नानास्ति किञ्चन | कठोपनिषत् | कठ. | 108,148,153,174 |
| | बृहदारण्यकं | बृ.बृहदा. | 192, 201, |
| | त्रिपाद्विभूतिमहानारायोणोपनिषत् | त्रि.म.ना. | 212, 235, |
| | अध्यात्मोपनिषत् | अध्यात्म. | |
| | निरालम्बोपनिषत् | निरा. | |
| 114. नैनं च्छिन्दन्ति | भगवद्गीता | भग. | 153, 161 |
| | भवसन्तरणोपनिषत् | भवसं. | |
| 115. नित्यो नित्यानां | कठोपनिषत् | कठ. | 107, 171 |
| 116. नित्यं विज्ञानं | बृहदारण्यकं | बृ.बृहदा. | 100, 107, 153, 171, 176 |
| 117. निर्विकल्पमनन्तं | ब्रह्मबिन्दूपनिषत् | ब्र.बि. | 160 |
| 118. पतन्ति नरके | भगवद्गीता | भग. | 140 |
| 119. पूर्णमदः पूर्णमिदं | शान्तिपाठः | शान्ति. | 247 |
| 120. प्रजापति प्राजा | गणेशपूर्वतापिनी | गण.पू. | 136 |
| 121. प्रज्ञानघनः | नृसिंहोपनिषत् | नृसिंह. | 139 |
| 122. प्रज्ञानं ब्रह्म | ऐतरेयोपनिषत् (आत्मषट्कं) | ऐ. | 171, 176, 186, 153 |
| | शुकरहस्यं | शु.र. | |
| | अन्नपूर्णोपनिषत् | अन्न. | |
| 123. परान्तकाले . . . . | महानारायणोपनिषत् | महाना. | 99 |
| 124. परीक्ष्य लोकान् | मुण्डकोपनिषत् | मुं. | 122, 155, 215 |

| | | | |
|---|---|---|---|
| 125. पादोऽस्य विश्वा | त्रिपाद्विभूतिमाहानारायणोपनिषत् | त्रि.म.ना. | 136 |
| | पुरुषसूक्तम् | पु.सू. | |
| | ऋग्वेदसंहिता (अष्टकात्मकं) | ऋ.सं. | |
| | ऋग्वेद मण्डलं (मन्त्रात्मकं) | ऋ.मं. | |
| | वाजसनेयसंहिता | वा.सं. | |
| 126. ब्रह्मविदाप्नोति | तैत्तिरीयोपनिषत् | तैत्ति. | 187, 238 |
| | भस्मजाबालि | भ.जा. | 248 |
| 127. ब्रह्म सत्यं जगन्मिथ्या | निरालम्ब | निरा. | 153 |
| 128. ब्रह्मवेद ब्रह्मैव | मुण्डकं | मुं. | 153, 238 |
| 129. ब्रह्मैवेदं सर्वं | नृसिंहपूर्वतापिनी | नृ.पू.ता. | 210 |
| 130. ब्रह्मैव सन् | बृहदारण्यकं | बृ.बृहदा. | 248 |
| | सुबालोपनिषत् | सुबा. | |
| | नृसिंह सहवै | नृ.स. | |
| 131. भूयश्चान्ते | श्वेताश्वतर | श्वे | 99 |
| | नारदपरिव्राजक | ना.प. | |
| 132. भिद्यते हृदयग्रन्थिः | मुण्डकोपनिषत् | मुं. | 105 |
| | योगशिखा | यो.शि. | |
| | महोपनिषत् | महो. | |
| | अन्नपूर्ण | अन्न. | |
| | सरस्वतीरहस्यं | स.र. | |
| 133. भीषास्माद्वातः पवते | तैत्तिरीयं | तैत्ति. | 161 |
| | नृसिंहपूर्वतापिनी | नृ.पू. | |
| | भस्मजाबालि | भ.जा. | |
| 134. मन एव मनुष्याणां | ब्रह्मबिन्दु | ब्र.बि. | 166 |
| | शाट्यायनीय | शाट्य. | |
| | मैत्रायणी | मैत्रा. | |
| | भगवद्गीता | भग. | |
| | अमनस्क | अम. | |
| | भवसंतरणं | भवसं. | |
| | त्रिपुरतापिनी | त्रि.ता. | |

| | | | |
|---|---|---|---|
| 135. मनसो यन्मनो विदुः | बृहदारण्यकं | बृ.बृहदा. | 166 |
| 136. मनसस्तु परा बुद्धिः | कठोपनिषत् | कठ. | 166 |
| | गुह्यकाति | गुह्य | |
| | भगवद्गीता | भग. | |
| 137. मात्रास्पर्शास्तु | भगवद्गीता | भग. | 131 |
| 138. मायां तु प्रकृति | भगवद्गीता | भग. | 145, 170 |
| | श्वेताश्वतर श्वे | | |
| 139. मृत्योस्स मृत्युमाप्नोति | कठोपनिषत् | कठ. | 233 |
| | आत्मपूजोपनिषत् | आ.पू. | |
| 140. मृत्युर्यस्योपसेचनं | कठोपनिषत् | कठ. | 235 |
| 141. यक्ष्ये दास्यामि | भगवद्गीता | भग. | 197 |
| 142. यतो वा इमानि | तैत्तिरीयं | तैत्ति. | 150 |
| 143. यतो वाचो निवर्तन्ते | शाट्यायनीय | शाट्य. | 247 |
| | तैत्तिरीयं | तैत्ति. | |
| | शरभ | शर. | |
| | ब्रह्मोपनिषत् | ब्रह्म | |
| 144. यथा नद्यः स्यन्दमानाः | मुण्डकं | मुं. | 248 |
| 145. यथा प्रकाशयत्येकः | भगवद्गीता | भग. | 221 |
| 146. यदा तु विदितं | नारायणपूर्वतापिनी | ना.पू. | 252 |
| 147. यदा ते मोहकलितो | भगवद्गीता | भग. | 211 |
| 148. यदृच्छयोपपन्नान्नं | भगवद्गीता | भग. | 117 |
| 149. यन्न सन्तं | नारायणपूर्वतापिनी | ना.पू. | 236 |
| | भगवद्गीता | भग. | |
| 150. यस्त्वात्मरतिरेव | भगवद्गीता | भग. | 194 |
| 151. यं लब्ध्वा चापरं | योगशिखा | यो.शि. | 180, 241 |
| | भगवद्गीता | भग. | |
| 152. यावानर्थ उपादाने | भगवद्गीता | भग. | 194 |
| 153. या निशा सर्वभूतानां | भगवद्गीता | भग. | 232 |
| 154. युवा स्यात्साधु | तैत्तिरीयं | तैत्ति. | 188 |
| 155. येन वा पश्यति | II ऐतरेयं | ऐ. | 184 |
| 156. रसो वै सह | तैत्तिरीयं | तैत्ति. | 100, 172 |
| 157. वासांसि जीर्णानि | भवसन्तरणं | भवसं. | 162, |

| | | | |
|---|---|---|---|
| | भगवद्गीता | भग. | |
| 158. विज्ञातारमरे केन | बृहदारण्यकं | बृ.बृहदा | 171 |
| 159. विज्ञानमानन्दं ब्रह्म | बृहदारण्यकं | बृ.बृहदा | 153 |
| 160. विनाशमव्यस्यास्य | भगवद्गीता | भग. | 107 |
| 161. विश्वतो चक्षुरुत | त्रिपाद्विभूतिमहानारायणा | त्रि.महाना. | 136 |
| | वाजसनेयसंहिता | वा.सं. | |
| | श्वेताश्वतर | श्वे. | |
| | महानारायणा | म.ना. | |
| | II शिवसंकल्प | शि.सं. | |
| | रुद्रोपनिषत् | रुद्र | |
| 162. वेदाविनाशनं नित्यं | भगवद्गीता | भग. | 108 |
| 163. वृक्ष इव स्तब्ध: | महानारायणोपनिषत् | महाना. | 100 |
| | श्वेताश्वतर | श्वे. | |
| 164. शान्तोदान्तउपरति | सुबाल | सुबाल. | 127 |
| 165. शिवं शान्तं | नारदपरिव्राजक | ना.प. | 101 |
| 166. श्रद्धावान् लभते | भगवद्गीता | भग. | 127, 131 |
| 167. श्रोत्रियस्य चाकामहतस्य | तैत्तिरीयं | तैत्ति. | 188, 189 |
| 168. स आत्मा | गणेशो | गणेश | 171, 173, 216 |
| 169. स एक प्रजापतेरानन्द: | तैत्तिरीयं | तैत्ति. | 189 |
| 170. स एको बृहस्पते | तैत्तिरीयं | तैत्ति. | 188 |
| 171. स एको मनुष्य | तैत्तिरीयं | तैत्ति. | 188 |
| 172. स एको मानुष | तैत्तिरीयं | तैत्ति. | 188 |
| 173. स.एषो अकलो अमृतो | प्रश्नोपनिषत् | प्रश्न. | 136 |
| 174. स तपो तप्यत | प्रश्नोपनिषत् | प्रश्न. | 191 |
| | तैत्तिरीयोपनिषत् | तैत्ति. | |
| | नृसिंहपूर्वतापिनी | नृ.पू. | |
| | गणेशपूर्वतापिनी | गण.पू. | |
| | बृहज्जाबाल | बृ.जा. | |
| 175. स तपस्तप्त्वा | तैत्तिरीयोपनिषत् | तैत्ति. | 191 |
| | प्रश्नोपनिषत् | प्र. | |
| 176. सत्यात्मप्राणारामं | तैत्तिरीयं | तैत्ति. | 176 |
| 177. सत्यंज्ञानमनन्तं | तैत्तिरीयं | तैत्ति. | 107, 153, 171, |

| | | | |
|---|---|---|---|
| | सर्वसार | स.सा. | 173, 176 |
| | नारायण उत्तरतापिनी | ना.उ.ता. | |
| | त्रिपाद्विभूतिमहानारायण | त्रि.म.उ. | |
| 178. सदेव सौम्येद मग्र | छान्दोग्यं | छा. | 145, 150, 190 |
| | पैङ्गलं | पैङ्ग. | |
| 179. स यश्चायं पुरुषे | तैत्तिरीयं | तैत्ति. | 186 |
| 180. स वा एष पुरुषो | तैत्तिरीयं | तैत्ति. | 158 |
| 181. सर्वाणि इन्द्रियकर्माणि | भगवद्गीता | भग. | 166 |
| 182. सर्वं खलु इदं ब्रह्मा | त्रिपाद्विभूतिमहानारायण | त्रि.म.उ. | 216, 233 |
| | निरालम्बोपनिषत् | निरालं. | |
| | गन्धर्व | गन्धर्व. | |
| | छान्दोग्यं | छां. | |
| | महोपनिषत् | महा. | |
| 183. सर्वं तं परादाद्यो | बृहदारण्यकं | बृ.बृहदा | 234 |
| 184. सहस्रशीर्षा पुरुषः | ऋग्वेदसंहिता | ऋ.सं. | 136 |
| | श्वेताश्वतर | श्वे. | |
| | चित्युपनिषत् | चित्ति. | |
| | सुबाल | सुबाल | |
| | पुरुषसूक्तम् | पु.सू. | |
| 185. साकालपुत्रपदवी | नारदपरिव्राजक | ना.प. | 222 |
| 186. सा त्याज्यासर्वयत्नेन | नारदपरिव्राजक | ना.प. | 222 |
| 187. सूर्यो यथा सर्वगतश्च | कठोपनिषत् | कठ. | 220 |
| 188. सैषा आनन्दस्य | तैत्तिरीयं | तैत्ति. | 188 |
| 189. सोऽकामयत | तैत्तिरीयं | तैत्ति. | 191 |
| 190. नादत्ते | भगवद्गीता | भग. | 100 |
| 191. शुद्धमपापविद्धम् | ईशावास्य | ई. | 100 |
| 192. अकायमव्रणम् | ईशावास्य | ई. | 100 |
| 193. विरजं विशोकं | मैत्रायणी | मै. | 100 |
| 194. छिद्यन्ते सर्वसंशयः | मुण्डकोपनिषत् | मुं. | 105 |
| 195. क्षीयन्ते चास्य कर्माणि | मुण्डकोपनिषत् | मुं. | 105 |
| 196. यत् ज्ञात्वा मोक्ष्यसे | भगवद्गीता | भग. | 105 |
| 197. अथातो ब्रह्म जिज्ञासा | ब्रह्मसूत्रं | ब्र.सू. | 106 |

| | | | |
|---|---|---|---|
| 198. तत् सत्यं स आत्मा | ऐतरेयं | ऐ. | 107, 216 |
| 199. एष पुरुषोऽन्नरसमयः | तैत्तिरीयं | तैत्ति. | 139 |
| | कठोपनिषत् | कठ. | |
| 200. अविनाशिनोऽप्रमेयस्य | भगवद्गीता | भग. | 141 |
| 201. तमेवं विदित्वा अतिमृत्युमेति | तैत्तिरीयं (आरण्यकं) | तैत्ति. | 161 |
| | नारायणपूर्वतापिनी | न.पू. | |
| | त्रिपाद्विभूतिमहानारायण | त्रि.प्रा.उ. | |
| | चित्युपनिषद् | चित्ति. | |
| 202. इन्द्रियाणि मनोबुद्धिः | भगवद्गीता | भग. | 166 |
| 203. जहि शत्रून् महाबाहो | भगवद्गीता | भग. | 166 |
| | त्रिपुरतापिनी | त्रि.ता. | |
| 204. ज्ञानं लब्ध्वा परां शान्तिं | भगवद्गीता | भग. | 167 |
| 205. शान्तिसमृद्धं | तैत्तिरीयं | तैत्ति. | 176 |
| 206. येन वा पश्यति | मैत्रेयं | मै. | 184 |
| 207. युवा स्यात् साधु युवाध्यायकः | तैत्तिरीयं | तैत्ति. | 188 |
| 208. बहुस्यां प्रजायेयेति | तैत्तिरीयं | तैत्ति. | 191 |
| 209. यस्त्वात्मरति रेवा | भगवद्गीता | भग. | 194 |
| 210. अनेकचित्तविभ्रान्ताः | भगवद्गीता | भग. | 197 |
| 211. लोकवासनया जन्तोः | मुक्तिकः | मुक्ति. | 199 |
| 212. सर्वान् कामान् समश्नुत | तैत्तिरीयं | तैत्ति. | 237 |
| 213. प्रजहाति यथा कामान् | भगवद्गीता | भग. | 240 |
| 214. दुःखेष्वनुद्विग्नमनाः | भगवद्गीता | भग. | 240 |
| 215. यः सर्वत्रानभिस्नेहः | भगवद्गीता | भग. | 240 |
| 216. तस्माद्यस्य महाबाहो | भगवद्गीता | भग. | 240 |
| 217. न प्रहृष्येत्प्रियं प्राप्य | भगवद्गीता | भग. | 240 |
| 218. यदा विनियतं चित्त | भगवद्गीता | भग. | 240 |
| 219. यदा दीपो निवातस्थो | भगवद्गीता | भग. | 240 |
| 220. यत्रोपरमते चित्तं | भगवद्गीता | भग. | 240 |
| 221. सुखमात्यन्तिकं यत्तत् | भगवद्गीता | भग. | 241 |
| 222. तं विद्यात् दुःखसंयोगं | भगवद्गीता | भग. | 241 |
| 223. संकल्पप्रभवान् कामान् | भगवद्गीता | भग. | 241 |

| | | | |
|---|---|---|---|
| 224. शनैश्शनैरुपरमेत् | भगवद्गीता | भग. | 241 |
| 225. यतो यतो निश्चलति मनः | भगवद्गीता | भग. | 241 |
| 226. प्रशान्तमानसं ह्येनं | भगवद्गीता | भग. | 241 |
| 227. युञ्जन्नेवं सदात्मानं | भगवद्गीता | भग. | 241 |
| 228. अद्वेष्टा सर्वभूतानां | भगवद्गीता | भग. | 241 |
| 229. सन्तुष्टः सततं योगः | भगवद्गीता | भग. | 241 |
| 230. यस्मान्नो द्विजते | भगवद्गीता | भग. | 241 |
| 231. अनपेक्षः शुचिर्दक्षः | भगवद्गीता | भग. | 242 |
| 232. यो न हृष्यति | भगवद्गीता | भग. | 242 |
| 233. समः शत्रौ मित्रे च | भगवद्गीता | भग. | 242 |
| 234. तुल्यनिन्दा स्तुति | भगवद्गीता | भग. | 242 |
| 235. प्रकाशं च प्रवृत्तिं च | भगवद्गीता | भग. | 242 |
| 236. उदासीनवदासीनो | भगवद्गीता | भग. | 242 |
| 237. समदुःखसुखस्वस्थः | भगवद्गीता | भग. | 242 |
| 238. मानावमानयोस्तुल्यः | भगवद्गीता | भग. | 242 |
| 239. मां योऽव्यभिचरेण | भगवद्गीता | भग. | 242 |
| 240. परात्परंपुरुषं | गुह्यकं | गुह्यकं. | 248 |
| 241. आप्तकामः आत्मकामो | बृहदारण्यकं | बृ.बृहद. | 248 |

# ग्रन्थोदाहृत पुस्तकसूची

1. मनीषा पञ्चकम् ।
2. अद्वैतपञ्चरत्नम्
3. ब्रह्मानुचिन्तनम् ।
4. सदाचारानुसन्धानम् ।
5. उपदेश पञ्चकम् ।
6. धन्याष्टकम् ।
7. जीवन्मुक्तानन्दलहरी ।
8. स्वरूपसन्धानाष्टकम् ।
9. यति पञ्चकम् ।
10. प्रौढानुभूतिः ।
11. ब्रह्मज्ञानावलीमाला ।
12. निर्वाणमञ्जरी ।
13. अपरोक्षानुभूतिः ।
14. वाक्यवृत्तिः ।
15. आत्मबोधः ।
16. योगवासिष्ठम् ।
17. भगवद्वचनानि ।
18. महाभारतम् ।
19. वार्तिककारः ।
20. विष्णुपुराणम् ।
21. तैत्तिरीय शाखा ।
22. वल्लभशाखा ।
23. अथर्वण शाखा ।
24. काठक शाखा ।
25. मैत्रायण शाखा ।
26. आत्मतीर्थः ।
27. विचित्र शतकम् ।
28. जीवराजविजयः ।
29. ब्रह्मसूत्राणि
30. ब्रह्मसूत्र शङ्करभाष्यम् ।
31. गीताभाष्यम् । (शाङ्करीयम्)
32. भगवद्गीता ।
33. उपनिषदः ।

# ःपोद्घातोपयुक्तग्रन्थाः ।

1. संस्कृत साहित्य विमर्शः — द्विजेन्द्रनाथः
2. सर्वदर्शन संग्रह — माधवाचार्यः
3. दर्शनोदयः — लक्ष्मीपुरं श्रीनिवासाचार्यः
4. भारतीय तत्त्वदर्शनमुलु.भा.1.
   भारतीय तत्त्वदर्शनमुलु.भा.2. — पोतुकूचि सुब्रह्मण्य शास्त्री
6. ब्रह्मसूत्र तेलुगु अनुवादः — रत्नाकर बालराजु
7. अद्वैतसाहित्य इतिहास कोशः — आर्. तंगस्वामीशर्मा
8. हिन्दूदर्शन समुच्चयः — लक्ष्मीपुरं श्रीनिवासाचार्यः
9. वेदान्तदर्शनानि — निर्विकल्पानन्दस्वामी

# अस्मिन् ग्रन्थे स्मृताः आचार्याः

1. श्रीमच्छङ्करभगवत्पादाः ।
2. प्रकाशात्मयतिः
3. बादरायणः ।
4. व्यासः ।
5. सुरेश्वराचार्यः (वार्तिकाकारः)
6. वाचस्पतिमिश्राः
7. विद्यारण्याः
8. वाल्मीकिः
9. वसिष्ठः
10. गौतमः
11. दधीचिः ।
12. विश्वामित्रः ।
13. श्वेतकेतुः ।
14. आरुणिः ।
15. दूर्वासः ।
16. ऋभुः
17. निदाघः ।
18. जडभरतः ।
19. दत्तात्रेयः ।
20. रैवतकः ।
21. याज्ञवल्क्यः ।
22. जनकः ।
23. सनत्कमारादयः ।
24. श्रीदक्षिणा मूर्तिः ।

